**मू**Çஆன பின்பு **चेतन**னானவிவன் **बुद्धिपूर्वक**மாகவொரு **प्रवृत्ति** பண்ணும்போது தன் **पुरुषार्थ**மும் **आनुषङ्गिक**மாகவாகிலும் புகிற வேண்டியதாலது வரும்போது **ईश्वराभिप्रायविशेष**மடியாக வர வேண்டுகையால் அதுக்காக **ईश्वराभिप्राय**த்தை ஆராய்ந்தவிடத்தில் **भागवतकैङ्कर्य** அவனுக்கு **सर्व**த்திலும் **अभिमत**மாயிருந்தது - இவ்வர்த்த(த்தை)த்தில்

''आराधनानां सर्वेषां विष्णोराराधनं परम् ।
तस्मात्परतरं प्रोक्तं तदीयाराधनं परम् ।।

---

(सा.दी) वैषम्यप्रदर्शनफलितं காட்டுகிறார். ஆன பின்பு इत्यादि । ईश्वराभिप्रायम्, ईश्वराभिमतम् - सर्वத்திலும், सर्वाभिमतங்களிலும் - ''अत्यन्ताभिमता विष्णोस्स्वजनाश्शास्त्र-चक्षुषाम् । अतस्तद्दास्यपर्यन्तं भगवद्दास्यमिष्यते'' இவ்அர்த்தத்தில் प्रमाणं காட்டுகிறார், आरा-धनानामित्यादि । तस्मात्परं, तस्मादुपरि । तदीयानामाराधनं परतरமென்கை.

---

(सा.स्वा) शास्त्रीयप्रवृत्ति வேண்டினாலும் भागवतकैङ्कर्यமும் तत्तत्प्राधान्यமும் सिद्धिக்கக் கூடுமோ என்னவருளிச் செய்கிறார். ஆன பின்பு इति । आनुषङ्गिकस्वपुरुषार्थम् ''फलमत उपपत्तेः'' என்கிறபடியே भगवदभिप्रायाधीनமாகையாலே तद्विज्ञानार्थं शास्त्रपरामर्शे भागवत-कैङ्कर्यं समस्तभगवदाराधनापेक्षयात्यन्ताभिमतமாகையாலே तदधीनभगवत्प्रीत्यादिरूपस्वपुरु-षार्थमत्यन्तोत्कृष्टம் என்றபடி. இப்படி लोकத்திலே राजभृत्यன் राजाவை விட்டு पुरु-षान्तरोपचारं பண்ணினால் राजहृदयं வெறுத்திருக்குமாப் போலே भगवद्दासனானவிவன் भगवाனை விட்டு भागवतोपचारं பண்ணினால் शरण्यहृदयं வெறுத்திருக்க வேண்டியிருக்க அது अत्यन्ताभिमतம் என்று சொல்லக் கூடுமோ? என்ன प्रमाणங்களாலும் लोक-दृष्टिயாலும் समर्थिக்கிறார். இவ்அர்த்தத்தில் इत्यादिயால். இவ்அர்த்தத்தை என்கிற पाठमनन्वितமாகையாலே लेखकप्रमादकृतम् । आराधनानामिति निर्धारणषष्ठी । सर्वेषामाराधनानां मध्ये । विष्णोराराधनं परम्, श्रेष्ठम् । तस्मात् विष्णवाराधनात् । परं तदीयाराधनम्, सर्वेषामाराधनानां मध्ये परतरं प्रोक्तमित्यन्वयः । तस्मात्परः...

---

(सा.प्र)भगवत्प्रीतिहेतुत्वावगमात्तस्यापि पुरुषार्थत्वेन साध्यत्वसिद्धिरित्याह । ஆன பின்பு चेतनனான इति।புகிற வேண்டியத்தால், साध्यवेनान्तर्भाव्यित्वे सिद्ध इत्यर्थः । सर्वத்திலும், सर्वस्मा दित्यर्थः - இவ்அர்த்தத்தை इत्यस्य प्रमाणங்களை ஆராய்ந்தால் इत्यनेनान्वयः । अस्यार्थस्य प्रमाणैः पर्यालो...

---

(सा.वि) पर्यन्तत्वं सिद्ध्यतीत्यभिप्रेत्याह । ஆன பின்பு इति । एवं सति । आनुषङ्गिकமாகவாகிலும், आनुषङ्गिकत्वेनापि । புகுருமென்கிற फलेऽन्तर्भावत्वेनापेक्ष्य । அத்தாலது வரும்போது, अज्ञानदशाकालिकातिशयविलक्षणातिशयाधानेच्छया तत्कैङ्कर्यप्राप्तिसमये । अभिप्रायविशेषமடியாக வர வேண்டுகையால் ईश्वराभिप्रायमूलकतया प्राप्तुमपेक्षितत्वात् । ஆராய்ந்த இடத்தில், विमर्श दशायाम् । सर्वத்திலும்...

---

(सा.स) ஆன பின்பு, तदभिप्रायाननुगुणवृत्तौस्वानर्थपर्यवसानात् । नान्तरीयस्वार्थको भगवदतिशय-रूपपरमपुरुषार्थो भगवदभिप्रायानुगुणोऽस्तु । प्रकृते किमायातमित्यत्राह । அதுக்காக इति । आनु-षङ्गिक स्वार्थकपरातिशयसिद्ध्यर्थमित्यर्थः । तस्याभिमततततमत्वे प्रमाणान्याह । இவ்அர்த்தத்தை इत्यादिना ।

**मू - मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् । तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ।। मद्भक्त-जनवात्सल्यं पूजायां चानुमोदनम् । मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ।। स्वयमाराधने यत्नो ममार्थे डम्भवर्जनम् । ममानुस्मरणं नित्यं यच्चमां नोपजीवति ।। भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते ।। स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ।। अनन्य देवता भक्ता ये मद्भक्तजनप्रियाः मामेव शरणं प्राप्ताः ते मद्भक्ताः प्रकीर्तिताः ।। तस्य यज्ञवराहस्य विष्णोरमिततेजसः । प्रणामं येऽपि कुर्वन्ति तेषामपि नमो नमः ।। तदाश्रयस्या-श्रयणात् तस्य तस्य च तस्य च । संसेवनान्नरा...**

---

(सा.दी) मद्भक्तजनेति । पूजायां, मत् (मद्भक्त) पूजायां, स्वर विक्रिया, गद्गदत्वम् । नेत्रविक्रिया, आनन्दाश्रूद्गमः । अङ्गविक्रिया, पुलकोद्गमः । अनुस्मरणं, शेषत्वानुसन्धानम् । मां नोपजीवति, मत्सका-शात्प्रयोजनान्तरापरिग्रहः । स विप्रेन्द्र इति मन्तव्यः । श्रीमान्, शेषत्वज्ञानसम्पद्युक्तः । यतिः, निगृहीतेन्द्रियः तस्मै ज्ञानं देयम् । ततः तस्मात् । ज्ञानं, संशये निर्णयरूपं ग्राह्यम् । पूज्यः, बहु मन्तव्यः अन्यदेवताभक्ताः न भवन्तीत्यनन्यदेवता भक्ताः - तस्य तस्य च तस्य च...

---

(सा.स्वा) तरं प्रोक्तमित्यन्वये परं किञ्चित्प्रसज्येतेति पूर्वापरविरोध इति ध्येयम् । भागवतकैङ्कर्ये प्रमाणमुपन्यस्य भागवतभक्तकैङ्कर्यस्य तस्मादाधिक्ये प्रमाणमाह । मम मद्भक्त भक्तेष्विति । मम सामान्यत आराधकेषु सत्सु प्रीतिर्भवति । मयि भक्तिमत्सु सत्सु अधिका प्रीतिर्भवति - मद्भक्तविषये भक्तिमत्सु अभ्यधिका प्रीतिर्भवेत् यतः तस्मान्मदधिकप्रीतिविषयापेक्षया मदभ्यधिक प्रीतिविषया विशेषतः पूजनीया इत्यर्थः । अथ भगवद्भक्तलक्षणमाह । मद्भक्तजनेत्यादिना, मद्भक्ते विद्यमानस्यापि दोषस्यादर्शनम्, मत्पूजायामन्येन क्रियमाणायामनुमोदनम् । स्वरविक्रिया, सगद्गदत्वम् । नेत्रविक्रिया, आनन्दाश्रूद्गमः । अङ्ग विक्रिया, पुलकोद्गमः । अनुस्मरणं, मम नित्यानुसन्धानम् । मां नोपजीवतीति यत्तच्च, मत्सकाशात्फलान्तरायाचनं चेत्यर्थः । सः श्रीमान्, विद्यावान् । मुनिः मननशीलः । विप्रेन्द्र इति मन्तव्यः । स यतिरिति मन्तव्यः । स पण्डितश्च मन्तव्यः । तस्मै देयं, जात्यन्तरत्वाद्द्रव्यदाना संभवेन ज्ञानं देयम् । ज्ञानसंशये तस्मिन्निर्णयात्मकं ज्ञानं ग्राह्यम् । सच पूज्यः - स बहुमन्तव्यः । अन्यदेवता भक्ता न भवन्तीत्यनन्यदेवता भक्ताः - देवतान्तरभक्तौ भागवतभक्त्यभावे च भगवद्भक्तेः पूर्णतानास्तीति भावः । भागवतभक्तिप्रकारमाह - अ(त)स्येति । भागवतकैङ्कर्यस्य सर्वपाप-नाशकत्वमप्याह । तदाश्रयस्येति - तस्य तस्य च तस्यचेति तच्चरमावधि दासस्य संसेवनाल्लोके नरा...

---

(सा.प्र) चन इत्यर्थः । एवं भागवत कैङ्कर्यस्यात्यन्तं भगवत्प्रीतिजनकत्वेनावश्यकत्वमुक्त्वा तस्य...

---

(सा.वि) सर्वस्मादपि । नोपजीवति, मत्सकाशात्प्रयोजनान्तरं नापेक्षत इति यत्तच्च । तस्मै देयम्, तस्मै ज्ञानं देयम् । ततः, तस्मात् । ग्राह्यम्, संशये सति निर्णयरूपं ज्ञानं स्वीकर्तव्यम् । पूज्यः...

---

(सा.सं)अनेकपर्वव्यवधाने शेषत्वस्य तुङ्गता तात्पर्यकं तदाश्रयस्येति । अनन्यार्हशेषत्वभञ्जकस्यास्य...

**मू-लोके पूयन्ते सर्वपातकैः ।।'' इत्यादि प्रमाण**ங்களை ஆராய்ந்தால் **राजा**வுக்கு **राजकुमा-रोपलालनं** போலே **भागवतकैङ्कर्यं भगवा**னுக்கு **अभिमत**மாயிருக்கையால் **शेषभूत**னான இவன் செய்யும் **किञ्चित्कार**ங்களில் **भागवतकैङ्कर्यं प्रधान**மாயிற்று.

இவ்விடத்தில் **तत्त्ववित्**துக்கு **प्रमाणसरणि**யைப் பார்த்தால், **''ये यजन्ति पितॄन् देवान्'' ब्राह्मणान् स हुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते'' इत्यादि**களின்படியே **ईश्वर**ன் **भागवतशरीर(क)**னாய்க் கொண்டும் **आराध्य**னாம்.

---

(सा.दी) तच्चरमावधिदानस्य च । पूयन्ते, परिमुच्यन्ते । *இவ்விடத்து* तत्त्ववित्*துக்கு* इत्यादि । *இத்தால்* साक्षाद्भगवदाराधन*மாகையால்* नित्यकर्म*ங்களில்* देवतान्तरोपासनं *போலவும்,* भगवदभिमताराधन*மாகையால்* राजकुमारोपलालनं *போலவும்* शेषिप्रीतिहेतु*வாகையால்* भागवतकैङ्कर्यमवश्यं कर्तव्य*மென்றதாயிற்று. இனி* भगवत्प्रीतिहेतु*வென்ன* मात्र*த்தால்* भाग-वतकैङ्कर्यं कर्तव्य*மென்னுமளவேயன்று.* सद्वारक*மாக* भगवच्छेष*மான இவனுக்கும்* अवान्तरशेषिगतातिशयाधानद्वारा...

---

(सा.स्वा) सर्वपातकैः पूयन्ते, परिमुच्यन्त इत्यर्थः, *இவ்* अर्थ*த்தில்* प्रमाण*ங்களை ஆராய்ந்தால்* इत्यन्वयः । अभिमत*மாய் இருக்கையாலே* इति । सर्व*த்திலும்* इति शेषः । *இப்படி* भगवदनन्-यार्ह शेषभूत*னான இவ்*अधिकारि भागवतोपचारकैङ्कर्य*ங்களைப் பண்ணில்* अन्याराधनप्रयुक्त *மாக* अनन्यत्वविरोधं *வாராதோ? என்னவருளிச் செய்கிறார். இவ்விடத்தில்* इति । शेषत्व-संबन्ध*மன்றிக்கே* विधिमात्रप्रेरित*னாய்* भागवतकैङ्कर्यं *பண்ணுமிடத்தில்.* तथा च नित्यकर्मसु अग्नीन्द्राद्याराधनस्य तदन्तर्यामि भगवदाराधनत्वं *போலே இதுவும்* भागवतशरीरक भगवदाराधन *மாகையாலே* अनन्यत्वविरोध*மில்லை என்று கருத்து.* भागवतशरीर*னாய்க் கொண்டும்* इति ''साक्षादप्यविरोधं जैमिनिः'' *என்கிற* न्याय*த்தாலே* अद्वारक*மாகவும்* प्रमाण बल*த்தாலே* सद्वारक*மாகவும்* आराध्य*னாமென்றபடி. இப்படி* भागवताराधनमन्तर्यामिदृष्ट्या भगवदाराधन *மாகில்* अग्नीन्द्रादि...

---

(सा.प्र) साक्षात्भगवत्कैङ्कर्यत्वेनाप्यनुष्ठेयत्वमाह । *இவ்விடத்தில்* इत्यादिना । ननु भगवत...

---

(सा.वि) श्लाघनीयः । *ஆராய்ந்தால்,* परामृशति चेत् । एवं भागवतकैङ्कर्यस्यात्यन्तभगवत्प्रीति-जनकत्वेनावश्यकत्वमुक्त्वा तस्य ''रसान् दासस्य जिह्वायामश्नामि कमलोद्भव'' इत्युक्तरीत्या भागवत-शरीरक भगवदाराधनत्वेन भगवत्कैङ्कर्यरूपत्वमपि तस्यास्तीत्याह *இவ்விடத்தில்* इत्यादिना - न चैवं देवतान्तर भजनमपि भगवत्कैङ्कर्यं स्यादिति कर्तव्यताप्रसङ्ग इति वाच्यम् । ''नान्यं देवं नमस्-कुर्यात् । नित्यो वन्द्यो न चानित्य'' इत्यादिना तस्य निषिद्धत्वात् । नित्यः, अप्राकृतभक्तः । अनित्यः, प्राकृतभक्तः । तर्हि सन्ध्योपासनादि परित्याग प्रसङ्ग इति चेन्न प्रपत्त्यध्याये प्रपन्नं प्रति तस्य विहितत्वेन अग्नीषोमीय पश्वालम्भवददोषात्तद्वदेव भागवतकैङ्कर्यस्यापि ''पूजनीया विशेषतः'' इत्यादिभिर्वि-हितत्वात् भगवत्कैङ्कर्यरूपत्वं सिद्धम् - नन्वेवं...

---

(सा.सं) प्राधान्यं कुत इत्याशङ्कायां तद्भञ्जकता किं प्रमाणसरण्या? उत स्वाम्यभिप्रायपर्यालोचनयेति विकल्प्य आद्ये आह - तत्त्ववित्*துக்கு* इति...

**मू-"स च मम प्रियः"** என்கிறபடியே **परमैकान्ति विषय**த்தில் **प्रीतिपरतन्त्र**னான **प्रकारि**யி னுடைய நினைவைப் பார்த்தால் **"ज्ञानी त्वात्मैव मे मतम्"** என்கிறபடியே **भागवतकैङ्कर्य**த்தை **भगवान्** தன் **अन्तर्यामि** பக்கலிலே பண்ணினதாக உகக்கும்...

(सा.दी) परशेषिगतातिशयाधानं स्वरूपप्राप्त*மாகையால்* अवान्तरशेषि*களான* भागवत*ர் பக்கல்...*

(सा.स्वा) पदघटित भगवदाराधनं போலே இதுவுமொரு सद्वारक भगवदाराधन*மாகையாலே* இதுக்கு प्राधान्यं கூடுவதெங்ஙனே? என்னவருளிச் செய்கிறார். स च मम प्रिय इत्यादिना। सर्वान्तिर्यामिக்கு வேறொரு अन्तर्यामि இல்லாவிட்டாலும் अन्तर्यामिपदத்தின் प्रीतिविष-यत्वाद्भागवतस्य साक्षात्स्वाराधनापेक्षया भागवतद्वारकस्वाराधनं भगवाனுக்கு अत्यन्त तुष्टिकर மென்றபடி. ஆனாலும், இப்भागवताराधनத்துக்கு भगवदत्यन्ताभिमतत्वविधानबलத்தாலே प्राधान्यं सिद्धिத்தாலும் भागवतकैङ्कर्यरूपत्वं सिद्धिக்குமோ? कैङ्कर्य*மாவது* स्वाम्यभिमता-चरण*மன்றோ?* இங்கு भगवदनन्यार्हशेषभूतனுக்கு भागवतशेषत्व*மில்லையே?* किञ्च भागवत शेषत्वसम्बन्ध*மன்றிக்கே* केवलविधिबलத்தாலே केवल भगवत्प्रीणन*மாகப்* பண்ணுகிற भागवताराधनத்தை भगवत्कैङ्कर्यத்தில் எல்லை நிலமென்றும், भगवदुपक्रम*மாய்* भागवत-पर्यन्त*மாக* வருகிறதென்று சொன்னதுவும் असङ्गत*மன்றோ?* என்கிற शङ्कैயில் भगवदत्-यन्ताभिमतत्वेन विहितत्वमात्र*மடியாக* भागवताराधनं कर्तव्य*மன்றிக்கே* शेषत्वसंबन्ध*மும்* भाग-वतद्वारक*மாகவும்*, प्रमाणसिद्ध*மாயும்*, भगवदभिमत*மாயும்* இருக்கையாலே இவ்अधिकारिக்கு अवान्तरशेषिगतातिशयाधानद्वारा परमशेषिगतातिशयाधानं प्राप्त*மாகையாலே* अवान्तरशेषि*களான* भागवत*ர் பக்கல்...*

(सा.प्र) स्सर्वशरीरत्वात्पितृदेवाद्याराधनवद्भागवताराधनस्यापि भगवत्कैङ्कर्यत्वे तद्वदेव प्रीतिपूर्वक-मनुष्ठेयत्वं न स्यादित्यत्र विशेषमाह। स च प्रिय इत्यादिना। एवं च भगवच्छेषत्वस्यैव भागवत-कैङ्कर्यानुष्ठापकत्वमुक्त्वा भागवतशेषत्वमपि तदनुष्ठापकमित्याह...

(सा.वि) भगवत्कैङ्कर्यरूपत्वे भागवतविषये प्रीतिप्रेरितत्वं न स्यादित्यत्राह स च मम प्रियः *என்கிற படியே* इति - प्रकारि*யினுடைய நினைவைப் பார்த்தால்*, प्रकारिणस्सङ्कल्पस्य दर्शने भगवत्-सङ्कल्पे पर्यालोचिते सतीत्यर्थः आत्मैव मे मतमिति - स्वान्तरात्मतया भगवदभिमतत्वात्। *பண் ணினதாக உகக்கும்*, स्वान्तरात्मविषये कृतमिव सन्तुष्येत्। अतस्तद्विषये "स्वारसीकी प्रीति-र्जयित" इति प्रीतिप्रेरितत्वमप्यस्तीति भावः - इत्थं भगवदभिमतत्वेन भागवताराधनं गर्भदासस्य राजकुमारोपलालनमिव भगवत्प्रीतिहेतुतयावश्यं कर्तव्यम्। तच्छरीरकभगवत्कैङ्कर्यरूपमपि भव-तीत्युक्तं भवति - इतः परं न केवलं भगवत्प्रीत्यैव भागवतकैङ्कर्यस्य कर्तव्यत्वम् - अपितु, भगवतः भागवत द्वारापि शेषित्वाद्भक्तस्य भागवतं प्रति साक्षाच्छेषत्वात् न ह्यकिञ्चित्कुर्वतश्शेषत्वमस्तीति न्यायेन भागवतकैङ्कर्यं कर्तव्यतया प्राप्तमित्याह...

(सा.प्र) द्वितीये आह स चेति। इत्थं शेष्यभिमतत्वरूपामुपपत्तिमुक्त्वा शेषत्वस्य सद्वारकता...

**मू-இப்படி शेषिக்கு अभिमतமென்கிறவளவே அன்று, शेषत्वமாகிற संबन्धந்தான் सद्वारकமாக வும் உண்டாகையால் कैङ्कर्यமும் सद्वारकமாகவும் प्राप्तம். அது எங்ஙனேயென்னில், ''नित्यं श्रिया समेतस्य भक्तैरात्मवतः सदा ।**

(सा.दी)कैङ्कर्यं कर्तव्यமென்கிறார். இப்படி शेषिக்கு इत्यादिயால். இத்தை उपपादिக்கிறார். அதெங்ஙனேயென்னிலென்று துடங்கி कैङ्कर्यமும் நிற்குமென்னுமளவால். नित्य-मिति. भक्तैरात्मवतः नित्यं श्रिया समेतस्य परमात्मनः । अद्वारकेण शेषित्वेन सह सद्वारकं च शेषित्वं स्यात् । आत्मवदत्यन्ताभिमतत्वाद्भक्तशेषत्वेन विनियोजनं आत्मवत इत्यनेन विवक्षितम् । இந்த विशेषणத்தால் सद्वारकत्वமும் उपपादितமாம். नित्यं श्रिया समेतस्य परमात्मनश्श-षित्वமென்றவித்தால் विशिष्टமே सद्वारकाद्वारकशेषिயாயிற்று. यद्वा...

(सा.स्वा) कैङ्कर्यं कर्तव्यமென்கிறார். இப்படி इत्यादिना. இப்படி चेतनगतशेषत्वसंबन्धं सद्वारक மாகக் கூடுமோ? सर्वप्रधानனான ईश्वरன் सद्वारकமாக साक्षादेव शेषिயாகில் शेषत्वமும் तदनुरूपமாக अद्वारकமாகவேயிருக்க வேண்டாவோ? என்று शङ्किத்து उत्तरமருளிச் செய் கிறார். அதெங்ஙனேயென்னில் इत्यादिना । नित्यमिति ।नित्यं श्रिया लक्ष्म्या समेतस्य भक्तैरात-मवत इति विशेषणद्वयமும் विधेयத்தில் यथाक्रममन्वयिக்கிறது. श्रिया समेतस्य सह शेषित्वं श्रीसाहित्येन साक्षात्सर्व शेषित्वं स्यात् ''अस्या मम च शेषं हि विभूतिरुभयात्मिका । उभयाधिष्ठानं चैकं शेषित्वम्'' इत्याद्यनुसारத்தாலே. श्रीயோடே கூடவே शेषित्वम् । இதன்றிக்கே श्रीद्वारक மாகவாதல் श्रीनैरपेक्ष्येणவாதல் शेषत्वமில்லை என்றபடி. भक्तैरात्मवतः । परमात्मनः - मा न विद्यन्ते परे यस्मात् स परमः - स चासावात्मा...

(सा.प्र) शेषत्वமாகிற इत्यादिना । भगवदनन्यार्हशेषभूतस्य भागवतशेषत्वं वा कथमित्यत्र सदृष्टान्तं युक्तितो वचनतश्च समर्थयते । அதெங்ஙனேயென்னில் इत्यादिना । नित्यंश्रियेति । ''ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । विष्णोश्श्रीरनपायिनी । ज्ञानीत्वात्मैव'' इत्यादिभि...

(सा.वि) இப்படி शेषिக்கு इति अभिमतமென்கிறவளவே அன்று अभिमतमित्येतावन्मात्रमेव न भवति - संबन्धந்தான், सम्बन्धस्य । सद्वारकமுண்டாகையாலே, सद्वारकस्य विद्यमानत्वात् कैङ्कर्यமும், कैङ्कर्यं च - सद्वारकமாகவும் प्राप्तम्, सद्वारकतयापि प्राप्तम् । अवान्तरशेषिभूत भागवत निष्ठातिशयाधाने भगवच्छेषभूत भागवतनिष्ठातिशयाधानस्य शेष्यतिशयावहत्वात्पर-मशेषिणोऽति-शयस्सिद्ध्यतीति भावः-अनन्यार्ह भगवच्छेषस्य कथमवान्तर शेषत्वमिति शङ्कापूर्वकं यथा राज्ञा स्वशे-षभूताभरणमालिकादिकं स्वगजादिषु निक्षिप्य स्वयं तदलङ्कारोऽनुभूयते तद्वत् ''अस्या मम च शेषं हि विभूतिरुभयात्मिका । प्रभवो भगवद्भक्ता मादृशां सततं द्विज । मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्'' इत्यादिप्रमाणैः स्वतन्त्रेण भगवतैव स्वभक्तशेषतया विनियुक्तत्वस्यावगतत्वात् सद्वारकशेषत्वं जीवस्य । सद्वारकशेषित्वं परमात्मनश्चोपपन्नमिति समर्थयते - அதெங்ஙனேயென்னில் इति । नित्यमिति नित्यम् श्रियासमेतस्य भक्तैस्सदा आत्मवतः भक्तेष्वन्तरात्मत्वे नाभिमानवतः तैर्विना स्वरूप...

(सा.सं) मप्युपपत्तिमुखेनाह இப்படி इति - ननु भगवतस्सद्वारक शेषित्वे सति हि चेतनस्सद्वारक शेषस्स्यात् - तदसिद्धेरिदमप्यसिद्धमित्यभिप्रायेण அதெங்ஙனேயென்னில் इति शङ्कामवतार्य परिहरति - नित्यमिति...

**मू-सहसद्वारकं च स्याच्छेषित्वं परमात्मनः''**

(सा.दी) सह च शेषित्वं सद्वारकं च शेषित्वं स्यादित्यन्वयः। श्रिया समेतस्य, श्रीविशिष्टरूपेण शेषित्वं भक्तैरात्मवतः भक्तद्वारा शेषित्वं स्यादित्यर्थः। यद्वा, भक्तैरित्यत्र समेतस्येत्यनुषङ्गः। आत्मवत इति प्रतिसंबन्धिनिर्देशो न षष्ठ्यन्तः। ज्ञानिनः प्रतीत्यर्थः। *இத்தை* विवरि*க்கிறார்...*

(सा.स्वा) तस्य भक्तैरात्मवतः - ''ज्ञानीत्वात्मैव मे मतम्'' इति ज्ञानिनमात्मानमन्तर्यामिणं मन्वानस्य *இங்கு* उत्कृष्टान्तरशून्य*னான* परमात्मा ज्ञानि*யை* आत्मा*வாகவுடையவனாவது* ज्ञानि*யை* स्वोत्कृष्ट*னாக வெண்ணா நிற்கை.* स्वतस्सर्वज्ञ*னானவன்* ज्ञानि*யை* उत्कृष्ट*னாக வெண்ணுகையாவது,* तत्प्रीणनव्यापार*த்தை* स्वप्रीणनव्यापारापेक्षया स्वस्योत्कृष्टप्रीणन*மாக வெண்ணுகை. ஆகையால் இந்த* बुद्धिविशेष*த்தையுடைய* परमात्मा*வுக்கு* सद्वारकं शेषित्वमुपपन्नम् - स्वप्रीणनव्यापारापेक्षया स्वभक्तप्रीणनव्यापारेऽधिकप्रीतिमत्वरूपशेषित्व*மானது* स्वभक्तस्य कैङ्कर्यजनित प्रीतिरूपातिशयभाक्त्वरूप शेषित्वमन्तरेणानुपपन्न*மன்றோ. இப்படி* शेषित्वं सद्वारक*மாகையாலே* शेषत्वसंबन्ध*மும்* सद्वारक*மாகக் குறையில்லை என்று கருத்து.* भक्तैरात्मवत्व*மும்* प्रमाणान्तरानुगुण्य*த்தாலே* श्रीविशिष्ट*னுக்கேயாகையாலே* सद्वारक शेषित्व*மும்* श्रीविशिष्ट*னுக்கென்னுமிடமும்* सिद्धम् *ஆனாலும்,* शेषत्वसंबन्धं सद्वारक*மென்னப் போமோ?* सर्वोत्कृष्ट*னான* ईश्वर*னுக்கு* शेषभूत*னான இவ்*अधिकारी अन्यशेषत्व*த்தை* अङ्गीकरि*க்குமோ?* ईश्वर*ன்* स्वतन्त्रस्वामि*யாகையாலே அவன்* भागवतशेषत्व*த்தை* सङ्कल्पि*த்தால்* शेषभूत*னுக்கத்தை* अङ्गीकरि*க்க வேணுமென்னில் இப்படி* स्वशेषभूत-वस्तु*வை* ईश्वर*ன்* अनन्यशेष*மாக்குகிறது* लोकदृष्टिविरुद्ध*மன்றோ?* किञ्च *இந்த* भागवत शेषत्वमौपाधिकशेषत्वं *போலே* कादाचित्क*மாகில்* सदा*வென்கிறதுவும்* विरुद्ध*மாகாதோ என்ன அருளிச் செய்கிறார்...*

(सा.प्र) श्रियो भागवतानां च नित्ययोगान्तरात्मत्वोक्त्यात्यन्ताभिमत त्वावगमात्स्वशेषभूतानां स्वात्यन्ताभिमतविषये शेषत्वापादनस्यलोकेऽपि दर्शनात्तैस्सह सदा साक्षाच्छेषित्वं तेषामपि...

(सा.वि) सत्ता नास्तीति मन्यमानस्येत्यर्थः - शेषित्वं सह अद्वारक शेषित्वेन सह सद्वारकं च स्यादित्यर्थः भक्तैरात्मवतः श्रियासमेतस्येत्यनेन भगवच्छेषत्वं भागवतशेषत्वपर्यन्त*மாம்* इत्यन्वयः - ''अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। न हि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः'' इत्युक्तरीत्या लक्ष्म्यपेक्षया भागवतानां भगवदत्यन्ताभिमतत्वं व्यञ्जितम् - तथा च तच्छेषत्वं भगवदभिमतमिति भगवदनन्यार्हशेषत्वस्य न विरोध इति भावः - अत्र सदृष्टान्तं...

(सा.सं) साक्षाच्छेष्येव भगवान्नित्यं लक्ष्म्यासमेत इति यथा लक्ष्म्या सहैव लक्ष्मीद्वारापि शेषीत्यनुमन्यसे - तथा ''पिता पुत्रेण पितृमान्''इतिवत् - ''ज्ञानीत्वात्मैव मे मतम्'' इति स्वान्तरात्मतया सदा परमप्रीतिविषयभागवतैस्सह च शेषी तथा भागवतद्वारापि शेषीति कैमुतिकन्यायेन सिद्धमनुमन्तव्य-मिति भावः - पुत्रे पितृमत्वं कादचित्कमिति अस्य तद्वैषम्यद्योतनाय सदेत्युक्तिः एवं भगवच्छेषत्वस्य भागवतशेषत्वपर्यन्ततां लोकाम्नायाभ्यामपि दर्शयति...

**मू-स्वतन्त्रனாய் स्वच्छन्दलीलனான राजाதான் பூண்ட आभरणத்தையும் இட்ட மாலையையும், அடியார்களுடையவும், யானை குதிரைகளுடையவும் கழுத்திலே இடுமாப் போலே, ''அடியார்க் கென்னையாட்படுத்த விமலன்'' என்றும் ''नारदोऽहमनुप्राप्तस्त्वद्दर्शनकुतूहलात् । प्रभवो भगवद्भक्ता मादृशां सततं द्विज'' என்றும், ''மற்றுமோர் தெய்வம் உளதென்றிருப்பாரோடொத்தி லேனுற்றதும் உன்னடியார்க்கடிமை''...**

(सा.दी) स्वतन्त्रனாய் इत्यादिயால். இடுமாப் போலே என்றதற்கு इष्टविनियोग என்கிற वंशத்தோடே अन्वयம். இடுமாப் போலே, इष्टமானபடி विनियोगिக்கைக்கு अर्हतैயாலே என்று अर्थम् । यद्वा இடுமிடத்தில் போலேயென்றபடி अत्यन्तपारतन्त्र्यத்தாலே என்றத் தோடே अन्वयம்.

(सा.स्वा) स्वतन्त्रனாய் इति - स्वतन्त्रனாகையாலே स्वशेषवस्तुவை अन्यत्रविनियोगिக்க शक्त னென்றபடி. निष्प्रयोजनமாக இப்படி विनियोगिக்கக் கூடுமோ? என்கிற शङ्कावारणार्थ स्वच्छन्दलीलனான इति । लीलारसं प्रयोजनமென்று கருத்து. கழுத்திலே இடுமாப் போலே என்கிறத்துக்கு ''அடியார்க்கென்னையாட்படுத்த விமலன்'' என்றும் சொல்லுகிற படியே என்கிறத்தோடே अन्वयம். அடியார்க்கு इत्यादि । அடியார்க்கு, स्वदासभूतभाग-वतர்களுக்கு. என்னை, அடியேனை ஆள்படுத்த, दासभूतனாகப் பண்ணின. விமலன், निर्मलன். மற்றுமோர் தெய்வம், अन्यं ஒரு दैवம். உளதென்று, உண்டென்று, இருப்பா ரோடு, देवतान्तरभक्ताளோடு. ஒத்திலேன், संसर्गिயேன். உற்றதும், अङ्गीकरिத்ததும். உன்னடியார்க்கடிமை, त्वद्दासभूत भागवतदास्यम्...

(सा.प्र) शेषित्वात्तद्द्वारा च सदा शेषित्वमस्तीत्यर्थ: । அடியார்க்கென்னையாட்படுத்த விமலன், ''ईश्वरोऽहमहं भोगी'' इति स्थितस्य मम स्वशेषत्वरुच्यापादनोपरि स्वशेषशेषत्वरुचि-जनकत्वयोग्यशुद्धियुक्त: । மற்றுமோர் தெய்வம் इत्यादि । भगवद्व्यतिरिक्तदेवतान्तरमस्तीति वर्तमानैस्सह संबन्धरहितोऽहं त्वदीयानामेव दास्यं प्राप्त इत्यर्थ: । यथा राज्ञो गर्भदासान्प्रति साक्षाच्-छेषित्वं राजमहिषीपुत्रयोश्च साक्षाच्छेषित्वं तदुभयद्वारा राज्ञः शित्वमेवमेव । ''दासभूतास्स्वतस्सर्वे ह्यात्मान: परमात्मन: । मच्छेषभूता सर्वेषामीश्वरी वल्लभा मम । प्रभवो भगवद्भक्ता मादृशम्'' इत्यादि प्रमाणानुगुण्येन भगवतो लक्ष्म्या भागवतानां च साक्षा...

(सा.वि) प्रमाणान्याह । स्वतन्त्रனாய் इति தான் பூண்ட आभरणத்தையும், स्वयमलङ्कृतमा-भरणम् । இட்ட மாலையையும், धृतमालिकां च । அடியார்களுடையவும், दासानां च - யானை குதிரைகளுடையவும், गजाश्वादीनां च । கழுத்தில், कण्ठे । இடுமாப் போலே, प्रक्षेपवत् । अस्य यथेष्ठविनियोगेत्यनेन संबन्ध: गजादिमूर्ध्नि मालाप्रक्षेपतुल्यभागवताधीनकरणतारूप यथेष्टविनियोगार्हतया चेतनस्येति भाव: । यथा प्रक्ष्येप्यमाणमालादीनामिव अत्यन्तपारतन्त्र्यादि...

(सा.सं) स्वतन्त्रனாய் इत्यादिना - स्वासाधारणशेषमपि स्वाभीष्टं प्रति शेषं कर्तुं समर्थत्वमिह स्व-तन्त्रत्वम् । अत एव स्वेच्छानुरोधेनैव विहरण प्रवृत्तत्वं स्वच्छन्दलीलत्वम् । விமலன், नित्य निर्दोषः । மற்றும் इति । त्वदन्यापि देवतास्तीतिबुद्धिमद्भिर्न लेशतोऽपि संबन्धवान् । உற்றதும், भोग्य...

मू - என்றும் சொல்லுகிறபடியே अत्यन्तपारतन्त्र्यादिகளடியாக भगवदिष्टविनियोगार्हतैயாலே भगवच्छेषत्वं தான் यावदात्मभाविயான கட்டளையிலே भागवतशेषत्वपर्यन्तமாயிற்று...

(सा.दी) भगवदिष्टविनियोगार्हतैயாலே भागवतशेषत्वपर्यन्तமாயிற்றென்று अन्वयம். यावदात्म-भाविயான கட்டளையிலே என்றத்தால் भगवच्छेषत्वं कालத்தில் கொழுந்து விட்டாப் போலே संबन्धिपर्यन्तं கொழுந்து விட்டபடி சொல்லிற்று. द्वारभूतரான भागवतशेषत्वं தான் இரண்டு வகையாலும் உண்டென்கிறார்.

(सा.स्वा) यावदात्मभाविயான கட்டளையிலே इति । भगवच्छेषत्वமானது தான் यावदात्म-भाविயான प्रकारத்திலே भागवतशेषत्वपर्यन्तமாயிற்று என்று अन्वयம். यावदात्मभावि भगवच्-छेषत्वं தானே भागवतशेषत्वपर्यन्तமாக வளருகையாலே இதுவும் यावदात्मभाविயென்ற படி. இப்படி भागवतशेषत्वं सिद्धமானாலும், ''प्रभवो भगवद्भक्ता मादृशां सततं द्विज'' என்கிற प्रमाणத்திலே मादृशां भगवद्भक्ताः प्रभवः । न त्वन्येषाமென்று सिद्धिக்கையாலே सर्वர்க்கும் भागवत शेषत्वं...

(सा.प्र) च्छेषित्वम्, भगवतस्तदुभयद्वारा च शेषित्वमिति भावः । अत्यन्तपारतन्त्र्यादिति । चेतनस्य भगवदत्यन्तपारतन्त्र्यंभागवतशेषत्वे निबन्धनमिति तस्य यावदात्मभावित्वादस्यापि यावदात्म-भावित्वमित्यर्थः ।आविर्भूतभगवच्छेषत्वं, गुणज्ञानं चादिशब्दार्थः । ननु कर्मानुगुणैरेव शेषत्व-वद्भगवदापादितमपि इतरशेषत्वमनिष्टमेव स्यादिति कथं पुरुषार्थत्वम् । किञ्चोदाहृत-वचनाद्भग-वच्छेषत्वस्य भागवतशेषत्वपर्यन्तत्व प्रतीतिश्च कथमित्यत्र भगवच्छेषत्वस्यापि पुरुषार्थत्वं गुण-वद्विषयत्वादिति भागवतानां गुणोत्तरत्वात्तत्कैङ्कर्ये अपि पुरुषार्थत्वं सिद्ध्यतीत्यभिप्रेत्य वचनस्य...

(सा.वि) கள் इत्यनेन संबन्धः । पारतन्त्र्यादिகளடியாக, आदि शब्देन गुणज्ञानादिकं गृह्यते । पार-तन्त्र्यादिकं द्वारीकृत्य यथेष्टविनियोगार्हत्वं शेषत्वम् । यथेष्टविनियुज्यमनत्वं पारतन्त्र्यम् । इत्थमेव रहस्यत्रयचुलके कुमारवरदाचार्यैरुक्तम् । पारतन्त्र्यं भागवतशेषत्वस्य मूलं भागवतेषु भागवतानां विनियुज्यमानत्वात् । यथेष्टविनियुज्यमानत्वस्यैव पारतन्त्र्यपदार्थत्वात् । पारतन्त्र्यस्य मूलं भगवद्यथेष्ट विनियोगार्हत्वम् । भगवद्यथेष्टविनियोगार्हश्चेतनो भागवताधीनः कृतो भागवतयथेष्ट विनियोगार्हो भागवतयथेष्ट विनियुज्यमानोऽपि भवतीति भावः - तदपि यावदात्मभावीत्याह - यावदात्मभाविயான கட்டளையிலே इति - भागवतशेषत्वकारणभगवदत्यन्त पारतन्त्र्यस्य यावदात्मभावित्वाद्भागवत-शेषत्वं यावदात्मभावीति भावः அடியார்க்கென்னை ஆள்படுத்த விமலன். அடியார்க்கு, स्वदासानां என்னை माम् । ஆள்படுத்த, दासीकुर्वन् । விமலன், विमलः । மற்றுமோர் தெய்வமுளதென்றிருப்பாரோடொற்றிலேனுற்றது முன்னடியார்க்கடிமை. மற்று மோர் தெய்வமுளதென்றிருப்பாரோடு, इतोऽन्यदैवं विद्यत इति स्थितैस्सह । ஒற்றிலேன், न वसेयम् । உன்னடியார்க்கு, भगवद्दासानां - அடிமை, दास्यम् । உற்றது, योग्यम् । आदिशब्द...

(सा.सं) तमत्वेनाभिमतमपि त्वद्दासदास्यमेव । अत्यन्तपारतन्त्र्यं, भगवदिष्टविनियोगं प्रतिषेद्धुम-शक्तत्वम् । आदिशब्दाच्छेषत्वग्रहणम् । तेन भगवदिष्टविनियोगायत्तभगवदतिशयस्यैव स्वपरम...

**मू-**இங்கு **भागवतत्व**மடியாக **स्वरूपप्रयुक्त**மாகவும், **"गुणैर्दास्यमुपागत:"** என்கிற **न्याय**த்தாலே **गुणज्ञान**மடியாக **स्वेच्छै**யாலும் வந்த **भागवतशेषत्वं भगवद्भक्ता:, मादृशां** என்கிற இரண்டு **पद**த்தாலும் **सूचित**ம். இப்**भागवतशेषत्वं क्रयं** செல்லும்படியை...

(सा.दी) இங்கு भागवतत्वम् इत्यादि - सूचितं, क्रमेण என்றபடி. मादृशां गुणज्ञानिनां என்றபடி. இப்भागवतशेषत्वं செல்லும்படியை, क्रयं செல்லும்படியை...

(सा.स्वा)सिद्धिக்கவில்லையே? என்னவருளிச் செய்கிறார். இங்கு इति - ஒருத்தனுக்கு भागवतत्वமுண்டாகில் அவனுக்கு सर्वமும் शेषமாகக் கடவதென்று भागवतत्वமடியாக भगवदिष्टविनियोगसिद्धமாயும் भागवतविषयத்தில் தனக்கு गुणाधिक्यदर्शनத்தாலே स्वेच्छया வந்ததாயும், भागवतशेषत्वं இரண்டு विधம். मादृशां என்கிறத்துக்கு भागवतविषयத்தில் गुणाधिक्यदर्शनத்தை உடைய எங்களுக்கென்று अर्थமாகையால் भगवद्भक्ता: मादृशां என்கிற இரண்டு पदத்தாலும் क्रमेण द्विविधशेषत्वं सूचितமாகையாலே सर्वர்க்கும் भगवदिष्ट-विनियोगसिद्धशेषत्वं सिद्धமென்று கருத்து. இப்படி भागवतशेषत्वं सिद्धिத்தாலும் இது भग-वच्छेषत्वापेक्षया उत्कृष्टமென்றது கூடுமோ? भगवच्छेषत्वं भगवाனுக்கு स्वकीयदास्य पर्यन्त विनियोगार्हமாயிருக்கிறாப் போலே भागवतशेषत्वं भागवतனுக்கு स्वेष्टविनियोगपर्यन्तமல் லாமையாலே तदपेक्षया निकृष्टமன்றோ? என்னவருளிச் செய்கிறார். இப்भागवतशेषत्वमिति...

(सा.प्र) भागवतशेषत्वपरत्वप्रकारमाह । இங்கு भागवतत्वமடியாக इत्यादिना । भागवतशेषत्वस्य यावदात्मभावित्वे तत्कैङ्कर्यस्य परमपुरुषार्थत्वे च भागवतानां परस्परं विक्रेय यित्वादेयत्वादि स्यादित्यत्र श्रीभट्टनाथैस्स्वेषां विक्रेयत्वोक्तेस्सब्रह्मचारिणे यतीन्द्राय दत्ताभ्यां நம்பார் वङ्गीपुरத்து நம்பி इत्याख्याताभ्यां पूर्वाचार्याभ्यां रामानुजाचार्यशिष्यतयावस्थानेन दानानुपालनाच्च विक्रेयत्वं देयत्वं चेष्टमेवेत्याह । இப் भागवतशेषत्वमित्यादिनाक्रयम्...

(सा.वि) गृहीतगुणज्ञानमूलकस्वरूप प्रयुक्तभागवतशेषत्वं भागवतत्वमूलक स्वरूपप्रयुक्त भागवत-शेषत्ववदेव वचने विवक्षित मित्याह । இங்கு भागवतेति । भागवतत्वமடியாக स्वरूप प्रयुक्तமாக வும், भागवतत्व स्वरूप प्रयुक्त तदाश्रयस्याश्रयणादित्यादि प्रमाणसिद्धमित्यन्वय: । गुणज्ञानं, भागवत-निष्ठाज्ञानभक्तिवैराग्यादिज्ञानम् । स्वेच्छैயாலும் इति - "सञ्जातरेखात्मक शङ्ख चक्रं ताम्रोदरं तस्य करारविन्दम् । विलोकयन्त्या फलविक्रयिण्या विक्रेतुमात्मानमभूद्विमर्श" इति न्यायेन गुणवद्विषये गुण-सारस्य वेदिन: शेषत्वापादिकास्वरसवाहिनी प्रीति: भवतीति भाव: । मादृशां, भागवतनिष्ठानु-गुणज्ञानवताम् । अन्यथा तत्पदवैयर्थ्यादिति भाव: இப் भागवतशेषत्वं क्रयं சொல்லும்படியை...

(सा.सं) प्रयोजनत्वं फलमिति । इदं भागवतशेषत्वं स्वरूपकृतं चेत्यत्र नारदोक्तिं प्रमाणयति । இங்கு इत्यादिना । भागवतत्वं, भगवति निष्ठात्वम् । तेन निमित्तेन - स्वरूपतो भागवतशेषत्वं मादृशामित्यने-नोक्त: । भगवद्भक्ता इत्यनेन गुणज्ञानायत्त स्वेच्छया भागवतशेषत्वमुक्तमिति भाव: । इदं भागवतशेषत्वं न केवलं वाचनिकमेव । किन्तु फलोपहितमपीत्याह । இப்भागवतेति...

**मू-**"பேசுவாரடியார்களெந்தம்மை விற்கவும் பெறுவார்களே" என்று **कल्पसूत्रव्याख्याता**க் களான பெரியாழ்வார் அருளிச் செய்தார். இது **मध्यपद**த்துக்குத் **तात्पर्यार्थ**ம்...

(सा.दी) பேசுவார் इत्यादि - भगवन्नामங்களை सादरமாகப் பேசுவார்க்கடியாரான भागवतர் शेषभूतரான எங்களை ஒரு अवसरத்தில் விற்றுக் கொள்ளவும் प्राप्तரென்கை. कल्पसूत्रव्याख्याताக்களென்னத்தால் இப்भागवतशेषत्वादिधर्मशास्त्रसिद्धமானமை தோற்றும். இப் भागवतशेषत्वम्...

(सा.स्वा) பேசுவார் इत्यादि, பேசுவாரடியார்கள், नामसङ्कीर्तन परரான श्रीवैष्णवர்களுடைய. அடியார்கள், दासभूतர் भागवतदास्यरसिकரான भागवतர்கள். எந்தம்மை, நம்மை விற்கவும் பெறுவார்கள், समर्थரென்றபடி. कल्पसूत्रेति । அங்காங்கிகளுடைய शेषशेषिभावस्वरूपமும், स्वत्वत्यागात्मकयागान्तर्गतिस्वत्वस्वरूपமும், सोमक्रयणान्तर्गतक्रयविक्रयस्वरूपமும், विनियोगप्रकारं முதலான अर्थங்களை समीचीन न्यायங்களாலே निर्णयं பண்ணி कल्पसूत्र व्याख्यानं பண்ணின பெரியாழ்வாரென்றபடி. ஆகையால் भगवच्छेषत्वं भागवतशेषत्वं போலே क्रयविक्रयपर्यन्त विनियोगार्हமல்லாமையாலே तदपेक्षया भागवतशेषत्वமே उत्कृष्टமென்று கருத்து. ஆனாலும், स्वरूपशोधनैदंपर्यप्रवृत्तमूलमन्त्रத்திலே अवधारणத்தாலே भगवाனுக்கே இவ்ஆत्मा शेषமென்று सिद्धिயா நிற்க तद्विरुद्धமாக भागवतशेषत्वकल्पनं கூடுமோ? என்னவருளிச் செய்கிறார். இது इति । मध्यपदத்துக்கு, नमस्ஸுக்கென்றபடி. नमस्ஸு अत्यन्त भगवत्पारतन्त्यपरமாகையாலே स्वतन्त्र...

(सा.प्र) செல்லும்படியை, विक्रयणस्य परिपालनीयत्वम् । பேசுவாரடியார்களெந்தம்மை விற்கவும் பெறுவார்கள், भगवन्नाम सङ्कीर्तनपराणां भागवतानां दासा अस्मद्विक्रयणार्हाः । प्रपन्नानां भागवतदासत्वात्स्वामिनस्तैस्स्वकीयगृहक्षेत्रादीनामिवास्माकमपि विक्रयणार्हा इति भावः । नित्यनैमित्तिके कस्याप्यं शस्या परित्यागेनानुष्ठान प्रकारप्रति पादनपरत्वात्कल्पसूत्राणान्तद्वदेव कृष्णेन मधुरागमनमारभ्य यावद्वैकुण्ठगमनमनुष्ठितकृत्स्न व्यापाराणां स्वप्रबन्धे तेनैव क्रमेण प्रतिपादनाच्छीभट्टनाथानां कल्पसूत्र व्याख्यातृत्वमितिभावः । कृत्स्नस्य प्रबन्धार्थस्य मन्त्रार्थत्वेनादौ प्रतिज्ञातत्वाद्भागवतशेषत्वस्य मन्त्रे प्रतिपादकांशं दर्शयति। இது मध्यमपदத்துக்கு इति। एवं साक्षाद्भागवत शेषत्वमुप-पाद्य तत्फलमाह ।...

(सा.वि) भागवतशेषस्यात्मनः क्रयणीयत्वदशासंपादकत्वयोग्यताम् । विक्रयं செல்லும்படி इत्यनुक्त्याक्रयं செல்லும்படி इत्युक्त्या च चौर्यार्जितस्यापि विक्रयसंभवात्क्रेतुः स्वत्वनिश्चयाभावे क्रयासिद्धेः स्वत्वमस्तीति द्योतनं प्रयोजनमिति गम्यते । பெரியாழ்வார், भट्टनाथाः அருளிச் செய்தார்,उक्तवन्तः । பேசுவாரடியார்களெம்மை விற்கவும் பெறுவார்கள். பேசுவாரடியார்கள்,कीर्तनपराभगवद्दासाः । எம்மை, अस्मान् । விற்கவும், विक्रेतुम् । பெறுவார்கள், प्राप्ताः । भागवतशेषत्वस्य मन्त्रेऽनुसन्धेयत्वं दर्शयति । இது इति । तात्पर्यार्थம், फलितार्थः - नमः पद...

(सा.सं) பேசுவார், गुणमिश्रसूक्त्यनुसन्धानपराः । अस्य मन्त्राविवक्षिततां परिहरति । இது इति...

**मू-**இவ்**अर्थ**த்தை अनुसन्धित्ताल் இப்**शेषत्वं सद्वारक**மாகவும் **अद्वारक**மாவும் நின்ற நிலையிலே शेषवृत्तियान **कैङ्कर्य**மும் நிற்கும்...

(सा.दी) नमस्ஸின் तात्पर्यार्थமென்கிறார். இதுவென்று. இவ்अर्थத்தை. இந்நमस्ஸின் अर्थத்தை. अतः...

(सा.स्वा) शेषिக்கு इष्टविनियोगार्हனென்று सिद्धिக்கையால் मूलमन्त्रத்திலும் स्वतन्त्रशेषिக்கு इष्टமான भागवतशेषत्वं सिद्धिக்கிறதென்று கருத்து. ஆனாலும், भागवतशेषत्वं प्रमाणबलத்தாலே सिद्धिத்தாலும் भागवतकैङ्कर्यं सिद्धिக்கவில்லையே? ''आराधनानां सर्वेषां'' इत्यादि प्रमाणबलத்தாலேயதுவும் सिद्धिக்குமென்னிலந்த प्रमाणसिद्धभागवतकैङ्कर्यम् उत्कृष्टसुकृत विशेषமாய்க்கொண்டு, ''ये यजन्ति''इत्यादिप्रमाणबलத்தாலே भागवतान्तर्याम्याराधनरूप भग-वत्कैङ्कर्यமாகவே सिद्धिக்கையால் भागवतकैङ्कर्यरूपत्वமில்லையே? என்னவருளிச் செய் கிறார். இவ்अर्थத்தை इति। இவ்अर्थத்தை, भगवदत्यन्तपारतन्त्र्यसिद्धभगवदिष्टविनियो-गार्हतारूपमध्यमपदத்தை என்றபடி.शेषत्वंநின்ற நிலையிலே इति शेषत्वपुरस्कार-மன் றிக்கே प्रमाणबलத்தலே भगवदत्यन्ताभिमतत्वबुद्ध्या பண்ணின भागवताराधनं ''ये यजन्ति'' इत्याद्यनुसारத்தாலே केवलभगवत्कैङ्कर्यமானாலும் भगवच्छेषत्व पारतन्त्र्यादिகளடியாக வந்த भागवतशेषत्वद्वारकமாகில் तत्कार्यशेष्यभिमताचरणरूपकैङ्कर्यமும் अवान्तरशेषि भागवतप्रीणरूप भागवतकैङ्कर्यமாய்க் கொண்டே परमशेषि भगवत्कैङ्कर्यமாமென்று கருத்து. இப்படி भागवत कैङ्कर्यं सिद्धिத்தாலுமிது नियमेन सिद्धिக்குமோ? भागवतकैङ्कर्यமன்றிக்கே केवलं भगवत्कैङ्कर्य-मात्रத்தாலேயும், தனக்கு शेषत्वस्वरूपமும் तत्कार्यமான पुरुषार्थமும் सिद्धिக்கவில் லையோ? भागवतकैङ्कर्यनियमமுண்டாகில் अशक्यविधिயுமாகாதோ? भगवत्कैङ्कर्यम्...

(सा.प्र) இவ்अर्थத்தை इत्यादिना। यथा अस्य शेषत्वं भगवदपेक्षया च साक्षादेव भवति तथा कैङ्कर्य-मपि भगवदपेक्षया भागवतापेक्षया च साक्षादेव कार्यमिति सिद्ध्यतीत्यर्थः। नन्वेवं भगवत्कैङ्कर्यस्येव भागवतकैङ्कर्यस्यापि फलत्वे साध्यद्वित्वप्रसङ्गः; भागवतानामनन्तत्वादेकैकं प्रत्येकैककैङ्कर्यस्यापि कृत्वा निर्वर्तयितुमशक्यत्वान्नह्यशकनीयमर्थं वेदो विदधातीति न्यायान्मन्त्रप्रतिपाद्यत्वं नोपपद्यत इत्यत्र यथा प्राभाकरमते परमापूर्वस्यैव परमसाध्यत्वेऽपि स्वर्गस्यापि साध्यविवृद्धिरूपत्वेन साध्यान्तर्भावः। मतान्तरेऽपि स्वर्गस्य साध्यत्वे तत्र कालान्तरभावि स्रक्चन्दनाद्यनुभवस्य तदनुवृत्तेश्च साध्यविवृद्धि-रूपत्वेन साध्यान्तर्भावः। तद्वदेव भागवतकैङ्कर्यस्य साध्यविवृद्धिरूपत्वमेवेत्यभिप्रेत्य भगवत्कैङ्कर्ये यथा...

(सा.वि) स्य पारतन्त्र्यप्रतिपादकत्वाद्भागवतशेषत्वस्य तत्फलभूतत्वादिति भावः। एवं नारायणायेति चतुर्थ्यामार्थं भागवतकैङ्कर्यमनुसन्धेयमित्यभिप्रेत्याह இவ்अर्थத்தை इति...

(सा.सं) अत्यन्तपारतन्त्र्यमूलक्रयविक्रयपर्यन्तविनियोगभागवतशेषत्वं पारतन्त्र्यार्थकमध्यमपदाभि-प्रेतमित्यर्थः। இவ்अर्थத்தை, मध्यमपदार्थेऽनुसंहिते। शेषवृत्तिயான...

**मू-ஆகையால் தன் शक्तिக்கு अनुरूपமாக भगवत्कैङ्कर्यத்தினுடைய साध्याकारविवृद्धियान पुरुषार्थத்தில் எல்லை நிலத்தைத் தரிசு தூர்விடாதொழிய प्राप्तम्...**

(सा.दी) भागवतकैङ्कर्यं यथाशक्तिनित्यं செய்ய प्राप्तமென்று निगमिக்கிறார். ஆகையால், इत्यादिயால் साध्याकार विवृद्धि, शेषभूतனால் साध्यं भगवत्कैङ्कर्यम् - அதனுடைய आकारविवृद्धिसीमाभूमिயான भागवतकैङ्कर्यத்தை என்கை. ननु भगवदेकशेषனுக்கு अस्य कैङ्कर्यम् युक्तமல்லவென்ன...

(सा.स्वा) शास्त्रचोदितமாகையால் यथाशक्त्यनुष्ठानத்தாலே भगवत्प्रीणनமானாலும் भागवतकैङ्कर्यம் அப்படி यथाशक्त्यनुष्ठानத்தாலே भागवतप्रीणनமன்றே? என்னவருளிச் செய்கிறார். ஆகையால், इति । தன் शक्तिக்கு इति । संपूर्णानुष्ठानத்தாலே प्रीतனாகிற भागवतकैङ्कर्यமில்லாவிட்டாலும் भगवच्छेषत्वकार्यं போலே भगवच्छेषत्वकार्यभूतभागवतशेषत्वकार्यமும் उपजीव्यानुरोधेन शक्यविषयமாகையால் यथाशक्त्यनुष्ठानத்தாலே प्रीतனாகிற गुणाढ्यभागवतकैङ्कर्यं नियमेनानुष्ठेयமென்றபடி. भगवत्कैङ्कर्यத்தினுடைய इति । अत्र कैङ्कर्यशब्देन किङ्करत्वरूपं शेषत्वमेवाभिधीयते । न तु तत्कार्यम् । साध्याकारेत्यनन्वयापत्तेः कैङ्कर्यத்தினுடைய, शेषत्वத்தினுடைய. साध्याकार विवृद्धि भागवतकैङ्कर्यम् । पुरुषार्थத்தில் எல்லை நிலத்தை इति । भागवतकैङ्कर्यமில்லாவிட்டால் भागवतशेषत्वपर्यन्त भगवच्छेषत्वस्यैव स्वरूपतया भागवतकैङ्कर्यपर्यन्त भगवत्कैङ्कर्यस्यैव पूर्णपुरुषार्थतया पुरुषार्थपूर्तिயானது प्रसङ्गिக்குமென்றபடி. लोकத்தில் எல்லை நிலம் தரிசு மண்டினால் स्वकीयपारक्यसन्देहமுண்டாய் पूर्णक्षेत्रतत्फलहानि போலே...

(सा.प्र) शक्त्यनुष्ठेयत्ववद्भागवतकैङ्कर्येऽपि यथाशक्त्यनुष्ठेयत्वस्यैव विधितात्पर्यविषयत्वाद्रहस्यत्रये फलप्रतिपादकांशएव तस्यापि प्रतिपादनमित्याह । ஆகையால், इति । தரிசு தூர்விடாதொழிய, सीमान्तवत्सस्याद्यनर्हारण्यं यथा न भवेत्तथा कर्तुं योग्यम् । यथा क्षेत्रादीनां कर्षणादि पूर्वकानुभवाभावे किञ्चित्कालानान्तरं कर्षणादेः स्वरूपायोग्यमहारण्यं भवेदेवमेव भागवतकैङ्कर्यस्य यावच्छक्त्यनुष्ठानाभावे भगवत्कैङ्कर्यकरणे स्वरूपायोग्यताप्यपेयादिति भावः । एवमस्य भागवतशेषत्वे "ते चैवानन्यदेवता" इत्युक्तपारमैकान्त्यविरोधास्स्यादित्यत्र यथा पतिव्रताया भर्तृभृत्यानां च परिचरणेऽपि न पातिव्रत्यविरोधः । प्रत्युत पतिचित्तानु...

(सा.वि) अतो भगवत्कैङ्कर्यमिवेदमित्यभिप्रेत्याह - ஆகையால் इति எல்லை நிலத்தை, परमावधिः । தரிசு தூர் விடாதொழிய, सस्याद्यनर्हारण्यं यथा न भवेत्तथा कर्तुम् । क्षेत्रादीनां कर्षणाद्यभावे कालान्तरे कर्षणादेः स्वरूपायोग्यं महारण्यं भवेत् । तद्वद्भागवत कैङ्कर्याभावे भगवत्कैङ्कर्येऽपि स्वरूपा योग्यता स्यादिति भागवतकैङ्कर्यं यथाशक्ति कर्तव्यम् । इदं भगवत्कैङ्कर्यप्रीतिमतां प्रोचणार्थमुक्तम् । वस्तुतस्तु भगवत्कैङ्कर्यादतिशयितत्वेनैव कार्यमिति...

(सा.सं) शेषत्वप्रयोज्यवृत्तिरूपः । ஆகையால், इति । अस्य प्रमाणोपपत्तिभ्यां सिद्धत्वात् । साध्याकारेति साध्यरूपभगवत्कैङ्कर्यविवृद्धिरूपपुरुषार्थपरमावधिनाप्यवन्द्यता स्वस्य संपद्यते इति भावः...

**मू-இது "भर्तुर्भृत्यगणस्य च" என்றும் "आप्तो विष्णोरनाप्तश्च द्विधा परिकरस्स्मृतः।**

(सा.दी) வருளிச் செய்கிறார். இது भर्तुरित्यादियால், இது श्रीपौष्करसंहितैயில் ऐकान्त्याक्षेपத்தில் समाधानान्तर्गतवचन शेषम् "देव व्यामिश्रयाजित्वं प्रतिषिद्धं पुनः पुनः। प्रागुक्तानां च यागानां दृष्टमङ्गीकृतं च तत्। तन्मेऽत्र संशयं जातं छेत्तुमर्हसि सांप्रतम्।। श्रीभगवानुवाच। सत्यमेतन्महाबुद्धे यथा संचोदितं त्वया। तत्तु क्रियान्तरे प्राप्ते न दोषस्त्वधिकारिणाम्। यस्मात् सर्वपरत्वं हि तेषामस्त्यच्युतं प्रति। तदाश्रितत्वाद्देवानामन्येषां पूजनं तु वै। न दोषो हि यथालोके भर्तुर्भृत्यगणस्य च।। माननाद्धर्मपत्नीनां समक्षे वा परोक्षतः।।" என்று ऐकान्त्याक्षेप समाधानवचनங்கள் भर्तुर्भृत्यगणस्य च, भर्ताவுக்கும் அவனுடைய भृत्यवर्गத்துக்கும் पतिव्रतै शुश्रूषिக்குமாப் போலே என்கை. आप्त इति। विष्णु वि...

(सा.स्वा) என்று கருத்து. இப்படி भागवतकैङ्कर्यं नियमेन प्राप्तமானால், "माङ्गल्यसूत्रवस्त्रादीन् संरक्षति यथा वधूः। तथा प्रपन्नश्शास्त्रीयपतिकैङ्कर्यपद्धतिम्" என்று पतिव्रताधर्मवाனான परमैकान्तिக்கு पतिव्रतैக்கு पुरुषान्तरान्वयத்திற்போலே पारमैकान्त्यविरोधं வாராதோ? என்ன வருளிச் செய்கிறார். இது इति। श्रीपौष्करसंहितायामैकान्त्याक्षेप समाधान प्रकरणे "देवव्यामिश्रयाजित्वं प्रतिषिद्धं पुनः पुनः। प्रागुक्तानां च यागानां दृष्टमङ्गीकृतं च तत्।। तन्मेऽत्र संशयं जातं छेत्तुमर्हसि सांप्रतम्।। श्रीभगवानुवाच। सत्यमेतन्महाबुद्धे यथा सञ्चोदितं त्वया। तत्तु क्रियान्तरे प्राप्ते न दोषस्त्वधिकारिणाम्।। यस्मात्सर्वपरत्वं हि तेषामस्त्यच्युतं प्रति। तदाश्रित वाद्देवानामन्येषां पूजनं तु वै।। न दोषो हि यथा लोके भर्तुर्भृत्य गणस्य च। माननाद्धर्मपत्नीनां समक्षे वा परोक्षतः" इत्यादिवचनங்கள் पठितங்கொன்றபடி. भर्ताவுக்கும் तद्भृत्य वर्गத்துக்கும் पतिव्रतै शुश्रूषिக்குமாப் போலே. शुद्धतत्परिवारेषु सपर्याभर्तृभृत्यवत्" என்கிறபடியே शुद्धभागवतार्चनं विरोधिயன்றென்றபடி.

(सा.प्र) वर्तनरूपत्वेन पातिव्रत्यानुगुण्यमेव एवमेव भागवतपर्यन्तशेषत्वस्य तच्छेषत्वानुगुण्यमेवेति न पारमैकान्त्यविरोध इत्याह। இது भर्तुर्भृत्यगणस्य चेत्यादिना। नन्विदं भागवतशेषत्वं...

(सा.वि) हृदयम्। अन्यशेषत्वशङ्कां निराकरोति இது इत्यादिना - भर्तुर्भृत्यगणस्य चेति - न दोषो हि यथा लोके भर्तुर्भृत्यगणस्य च। माननाद्धर्मपत्नीनां समक्षे वा परोक्षत" इति पौष्करसंहितायामैकान्त्याक्षेपसमाराधनपरमिदं वचनं धर्मपत्नीनां भर्तुर्भृत्यगणस्य च शुश्रूषा च यथा न दोषस्तद्वन्न दोष इत्यर्थः - परिकरः, भृत्यवर्गः।...

(सा.सं) ननु भागवतत्वेऽपि भगवदन्यत्वमनपनोद्यमिति तच्छेषित्वमैकान्त्यविरोधीत्यत्राह। இது इति - இது विरुद्धமன்று इत्यन्वयः। यथा भर्तुरन्तरङ्गभृत्यतद्गणपुत्रानुषोषणं पतिचित्तानुवर्तनरूपत्वेन पातिव्रत्यस्यात्यन्तमुचितं तद्वदिहापि इति भर्तुर्भृत्यगणस्य चेत्यस्याशयः। स्वरूपोचितशास्त्रीयवृत्तिमाननन्यप्रयोजन आप्तः। स एव मुक्तावप्यनन्यप्रयोजनवृत्तिमानिति...

**मू-नित्यो वन्द्यो न चानित्यः कर्मवश्यो मुमुक्षुभिः''** என்று ஶ்ரீपौष्करादिகளில் சொன்ன **न्याय**த்தாலே **पतिव्रताधर्म** போலேயிருக்கிற **परमैकान्तित्व**த்துக்கு மிகவும் **उचित**மான **पतिचित्तानुवर्तनं** ஆகையால் **हेत्वन्तर**த்தாலன்றிக்கே **अनन्यार्हशेषत्वज्ञान**மடியாக வருகையாலே இவ்**अन्यशेषत्वं विरुद्ध**மன்று.

---

(सा.दी) னுடைய परिकरं भृत्यवर्गं आप्तமென்றும் अनाप्तமென்றும் இரண்டு विधம். அதில் आप्तो यो नित्यः भागवतादिः सः मुमुक्षुभिः आराधनीयः। अनित्यராய் अनाप्तரான ब्रह्मादिகள் कर्मवश्यतया अवन्द्यர். उपपादितத்தை उपसंहरिக்கிறார். ஆகையால், इति। हेत्वन्तरத்தால், कर्मத்தாலென்றபடி. नचानित्यः என்று निषेधिக்கையால் अनन्यार्हशेषत्वज्ञानமடியாகவும் देवतान्तरशेषत्वமாகாதென்று தோற்றுகிறது...

---

(सा.स्वा) नित्य इति। नित्यः, नित्यमुक्तादिः - आप्तभागवताश्च। कर्मवश्यतया अनित्यः ब्रह्मादि-देवतागणः न वन्द्य इति निषेधात्। ब्रह्मादिகளுக்கு भागवतत्वமுண்டானாலும் तच्छेषत्वं भग-वदनभिमतமாகையாலே ब्रह्मादिदेवतान्तर शेषत्व तदाराधनங்களாகாதென்று கருத்து. இப்படி भागवतशेषत्वमुचितமென்னப்போமோ? भागवतविषयத்தில் भगवच्छेषत्वज्ञानமன்றிக்கே अर्थकामाद्युपाधिकமாக வந்த शेषत्वமும் उचितமாக प्रसङ्गिயாதோ? इष्टापत्तिயென்னில் भागवतदेवतान्तर शेषत्वமும் उचितமாக प्रसङ्गिயாதோ? ஆகையால் இப்भागवत-शेषत्वமும் विरुद्धமன்றோ? என்னவருளிச் செய்கிறார். ஆகையால், इति - ஆகையால், மிகவும் उचितமான पतिचित्तानुवर्तनமாகையால் हेत्वन्तरத்தாலன்றிக்கே इति - अनन्यार्ह-भागवतभगवच्छेषत्वज्ञानமடியாக வந்த अन्यशेषत्वமே विरुद्धமன்று भर्त्रनुबन्धिविषयத்தில் पतिव्रतैக்கு हेत्वन्तरத்தாலே வந்த शेषत्वं போலே भागवतविषयத்திலும் हेत्वन्तरத்தால் வந்த शेषत्वं परमैकान्तिக்கு विरुद्धமென்று கருத்து. இங்கு भागवतனுக்கு भागवत शेषतायां प्रति-संबन्धी भागवतனென்கிற बुद्धिயும் स्वस्य भगवच्छेषताबुद्धिயும் निमित्तम् - प्रतिसंबन्धी भागवतனென்கிற बुद्धिயில்லாவிட்டால் अभागवतशेषत्वं प्रसङ्गिக்கும் स्वस्य भगवच्छेषत्वज्ञानाभावे स्वतन्त्रशेषीष्ट विनियोगार्हताज्ञानाभावेन भागवतशेषत्वज्ञानासंभवात् என்று கருத்து.

---

(सा.प्र) स्वाभाविकमौपाधिकं वा। नाद्यः। भगवदत्यन्त पारतन्त्र्यसंबन्धज्ञानविशेषाद्यधीनत्वात्। नापि द्वितीयः तथा सति मुक्तौ निवर्त्यत्वप्रसङ्गात्। औपाधिकाकार रहितेष्वपि भागवतशेषत्व बोधकेन ''कैङ्कर्यनित्यनिरतैः भवदेकभोगैः नित्यैरनुक्षण नवीनरसार्द्रभावैः। नित्याभिवाञ्छितपरस्परनीचभावै-र्मद्दैवतैः परिजनैस्तवसङ्गनीये''त्यादि कूटस्थवचनेन विरोधश्च। अत उभयाकार बहिर्भूताकार राहित्-याद्भागवतशेषत्वमेव दुर्निरूपमिति तत्प्रयुक्तकैङ्कर्यं दूरनिरस्तमित्यत्र आविर्भूतभगवच्छेषत्वरूपो-पाधेश्शेषत्वप्रतिसन्धानार्हत्वरूपदासत्वोपाधेर्वा मुक्तावस्यानुवृत्तेस्तस्य नित्येष्वनाद्याविर्भूतत्वात् चौपाधिकत्वं, मुक्त्यवस्थाभाव्याकाराणां ''स्वेन रूपेणाभिनिष्पद्यत'' इत्यादि श्रुत्यनुसारात्स्वाभावि-कत्वमपीत्याह।...

---

(सा.वि) नित्यः, अप्राकृतः। ननु भागवतानां परस्परशेषशेषिभावे एकस्यैव शेषत्वं शेषित्वं च...

---

(सा.सं) नित्यः। पौष्करादिवचनस्य साक्षादुक्तार्थपरत्वाभावान्न्यायத்தாலே इत्युक्तं - हेत्वन्तर...

**मू-**இப் **भागवतशेषत्वं स्वाभाविक**மோ? **औपाधिक**மோ? என்னில் **कर्माद्युपाधि**களற, **''नित्याभिवाञ्छितपरस्परनीचभावै:''** என்கிறபடியே **यावदात्मभावि**யாய்க் கொண்டு **मुक्तदशै**யிலும் **अनुवर्ति**ப்பதொன்றாகையாலே **स्वाभाविक**மென்னவுமாம் - **भगवत्सम्बन्धज्ञानविशेषनिबन्धन**மாகையாலே **औपाधिक**மென்னவுமாம். இப்படியாகில் இருவருக்கும் **भागवतत्व**முண்டானால் ஒருவரைப் பற்ற ஒருவர்க்கு **शेषत्व**மும் **शेषित्व**மும் வருகை **विरुद्ध**மன்றோ என்னில்...

---

(सा.दी) नित्येति । अभिवाञ्छित: अन्योन्यं प्रति नीचभाव: शेषत्वं येषां तै: *என்கை*. भगवत्संबन्धज्ञानविशेषनिबन्धनं, भगवता सह भागवतानां यस्संबन्धज्ञानविशेषस्तन्निबन्धनत्वात् *என்கை*. यद्वा स्वस्य य: भगवता सह संबन्ध ज्ञानविशेष: तन्निबन्धनं भागवतशेषत्वमित्यर्थ: । परस्पर शेषभाव*த்தை* उपपादि*க்கிறார்*. *இப்படியாகில்* इत्यादि*யால்*, भागवतशेषत्व*முண்டான* पक्ष*த்தில் என்கை*.

---

(सा.स्वा) *ஆனாலும்*, *இப்*भागवतशेषत्वं भगवच्छेषत्वं *போலே* स्वाभाविक*மாகில்* वस्तुस्वरूपप्रयुक्ततया भगवच्छेषताज्ञानप्रयुक्तत्वाभावात्स्वस्यानन्यार्ह भगवच्छेषत्वं विरोधि*க்கும்*. औपाधिक*மாகில்* मुक्तिदशै*யிலும்* अनुवर्ति*யாதே* देवतान्तर शेषत्वं *போலே அப்* पुरुषार्थ*மாக* प्रसङ्गि*க்குமென்று* तात्पर्य*த்தாலே* शङ्कि*த்து* उत्तर*மருளிச் செய்கிறார்*. *இப்*भागवत शेषत्वम् इति - मुक्तिदशै*யிலும்* इति । मुक्तिदशानुवर्तमानतया स्वाभाविक*மென்று சொல்லப்படும்*. स्व-रूपप्रयुक्तं स्वाभाविक*மன்றென்றபடி*. भगवत्संबन्धेति । भगवत्संबन्धज्ञानप्रयुक्तत्वेन स्वरूपप्रयुक्तत्वाभावादनन्यार्ह शेषत्व विरोध*மில்லை*. देवतान्तरादि शेषत्ववत्कर्माद्युपाधिक*மல்லாமையாலே* पुरुषार्थत्व*மும்* मुक्तिदशानुवृत्ति*யும் கூடுமென்று கருத்து*. *இனி* भागवतयो: परस्परशेषशेषिभावोत्पत्या विरोधं प्रसङ्गि*யாதோ? என்கிற* शङ्कै*யை* अनुवदि*த்து* परिहरि*க்கிறார்*. *இப்படியாகில்* इत्यादिना । परस्परप्रतिद्वन्द्विनो: धर्मयोरेकनिरूप्ययोरेकत्र विरोध*மோ?*

---

(सा.प्र) *இப்*भागवतशेषत्वमित्यादिना । भागवतशेषत्वनिबन्धनभूतोपाधेर्भगवच्छेषत्वस्य स्वाभाविकत्वादस्योभयाकारत्वमिति भाव: । नन्विदं भागवतशेषत्वमप्रामाणिकम् । एकस्ये वैकं प्रत्येवैकदैव स्वाभाविकशेषित्वस्वाभाविकशेषत्व रूपव्याहतार्थपर्यवसायित्वादित्यत्र यथा ज्योतिष्टोमादिकर्तर्यवस्थाभेदो व्याघातशान्तये यथा वा लोके चैकस्यैवैकं प्रति एकदैवोपकार्यत्वमुपकारकत्वं च परस्परमुपकारकत्वं समय एवमेव परस्पर जनितातिशयनैरपेक्ष्येणातिशययोर्जनने तादृशातिशयाश्रयत्वजनकत्वयोरपि व्याघाता भावात्प्रामाणिकतमत्वमेवेत्याह । *இப்படியாகில் இருவருக்கும்* इत्यादिना । नन्वेवं भागवतशेषत्वाङ्गीकारे...

---

(सा.वि) विरुद्धमित्याशङ्क्य परस्परोपकार्योपकारकत्वादिष्विव क्रिया व्यक्तिभेदेन न विरोध इति परिहृत...

---

(सा.सं) *த்தால்*, क्षुद्रप्रयोजनान्तरात् । *இப்* भागवतेति । स्वाभाविकत्वपक्षे भगवच्छेषत्वकाष्ठारूपतया न मध्यमाक्षरवैघट्यम् । औपाधिकत्वपक्षे यावदात्मभावि शेषत्वादिसंबन्धज्ञानविशेष निबन्धनत्वान्नानित्यत्वादि प्रसङ्ग इति भाव: । संबन्धज्ञाने तु विशेष:, कुवासनाद्यनुपहतत्वम् । *இப்படியாகில்*, भागवतशेषत्वस्य स्वाभाविकत्वेन सर्वदाङ्गीकरणीयत्वे । यस्य यं प्रति शेषित्वं तस्यैव...

**मू-परस्परोपकार्योपकारकभावादि**களிற்போலே இங்கு **विरोध**மில்லை **अधिकार्यवस्थै**யிலே **क्रियै**க்கு **शेषि**யானவன் தானே **कर्तृत्वावस्थै**யிலே அதுக்கு **शेष**மாய் நில்லா நின்றான். அப்படியே **अन्योन्यं** பண்ணும்...

(सा.दी) இவ்अर्थத்தை न्यायवित्तுக்களான मीमांसकரும் अङ्गीकरित्தார்களென்று காட்டுகிறார். अधिकार्यवस्थैயில் इत्यादिயால். यक्ष्यमाणனுக்கு प्रथममधिकार्यवस्थै । பின்பு कर्तृत्वा-वस्थै வரும். அங்கு अधिकारिயாயிருக்கும்போது फलित्वத்தாலே कर्मத்தைக் குறித்து शेषि-யான यजमानன் தானே कर्मोत्पादन रूप कर्तृत्वावस्थैயில் कर्मத்துக்கு शेषமாயிருக்குமென்று अङ्गीकरित्தார்கள் என்கை. उक्तार्थத்தை दार्ष्टान्तिकத்தில் ஏத்துகிறார். அப்படியே इत्यादिயால்...

(सा.स्वा) नोचेदेकप्रतियोगिकशेषत्वशेषित्वयोर्विरोधமோ? என்று विकल्पित्து आद्यपक्षத்தில் उत्तरமருளிச் செய்கிறார். परस्पर इति । द्वितीयपक्षத்தில் उत्तरமருளிச் செய்கிறார். अधि-कार्यवस्थैயில் इति । प्रथमं फलकामனாய் स्वस्य फलित्वसिद्ध्यर्थं योगक्रियै विहितैயாகையாலே फलित्वेनयजमानன் அந்த क्रियैக்கு शेषिயானான். फलार्थं क्रियैயைப்பண்ணும்போது कर्तृ-कारकமன்னியிலே क्रियै निष्पन्नैயல்லாமையாலே क्रियैக்கு कर्तृत्वेन शेषமானானென்று न्यायविन्निर्णीतமென்றபடி. இப்படியாகில் परस्परोपकारं போலே இந்த भागवतன் நமக்கு இந்த अतिशयத்தைப் பண்ணினான். அதுக்காக நாம் இந்த अतिशयத்தைப் பண்ணுவோ மென்று बुद्धिविशेषத்தாலே भागवतशेषत्वं वहित्தாலிது वस्तु वृत्तिயிலே स्वातिशयहेतुவாகையாலிது भागवतशेषत्ववहनமாக மாட்டுமோ? भगवच्छेषत्वकार्यமல்லாமையாலே स्वरूपविरुद्धமாகாதோ? என்னவருளிச் செய்கிறார். அப்படியே इति । यजमानனுக்கு क्रियै शेषமாயும் शेषिயாயுமிருக்கிறாப் போலேயும், क्रियैக்கு यजमानன் शेषமாயும், शेषिயாயுமிருக்கிறாப் போலேயும், शेषशेषित्वங்கள் கூடுமென்கையில் दृष्टान्तम्...

(सा.प्र) चेतनत्वेन तत्प्रतिसन्धानार्हात् दासत्वं स्यात् । तच्च लोके दुःखजनकं दृष्टमिति प्रपन्नानां दुःखमेव स्यादित्यत्र महनीय विषयदास्यस्य लोकेऽपि सुकरत्वदर्शनाद्भागवतशेषत्वस्य...

(सा.वि) त्यावस्थाभेदेनापि दृष्टान्तप्रदर्शनमुखेन परिहरति । अधिकार्यवस्थैயிலே इति । एकस्यैव पुंसः फलार्थित्वरूपाधिकारावस्थायां फलस्य पुरुषशेषत्वात् क्रियायास्तत्फलशेषत्वात् क्रियां प्रति शेषत्वं, कर्तृत्वावस्थायां तु यागानुरक्तभावनाया विधेयत्वात् भावनास्वनुष्ठानार्थं स्वशेषत्वेन कर्तारमाक्षिपतीति कर्तुश्शेषत्वमिति मीमांसकैः स्वीकृतम् । अत एव 'स्वर्ग कामो यजेत'' इत्यत्र कामपदगतलिङ्गमुद्देश्य विशेषणत्वादविवक्षितमिति स्त्रिया अप्यधिकारः । यजेतेत्युपाधेय कर्तृकताख्यातोपात्तसंख्याया विव-क्षितत्वेन दर्शपूर्णमासादिषु एककर्तृकत्वं चेति लिङ्गविशेषनिर्देशात्पुं युक्तमैतिशायिनः प्रयोगे पुरुष श्रुतेर्यथाकामीप्रयोगे स्यात्'' इति...

(सा.सं) तं प्रत्येव शेषत्वं च स्यादिति विरोधफलकत्वादयं न प्रामाणिक इति भावः । इमं विरोधमपि दृष्टान्तेन परिहरति । परस्परेति । अधिकारीति । एकस्यैव क्रियां प्रति मत्फलसाधनत्वान्मदर्थमिति बुद्ध्यवस्थायां शेषिणः क्रियानिर्वर्तनावस्थायां शेषत्वमप्युपगतं मीमांसकैस्तद्वदिहापि इति भावः ।

**मू - अतिशय**ங்களை **उपजीवि**யாதே ஒருத்தருக்கொருத்தர் **अतिशयाधानं** பண்ணினால் **अति-शयाधायकत्ववेष**த்தாலே இருவருக்கும் **शेषत्व**முண்டாய், **अतिशय**த்துக்கு **आश्रय**மான **वेष**த்தாலே இருவருக்கும் **शेषित्व**முண்டாகக் குறையில்லை. இப்படி **ईश्वरेच्छै**யாலே இருவரும் **परस्परम्-्अतिशयाधायकराकविनियुक्त**ராகையாலே இருவருக்கும் **भागवतशेषत्वसम्बन्धं प्रमाणिकं**-...

(सा.दी) उपजीवि*யாதே*, कृत*த்துக்கு* प्रतिकृत*மாக எண்ணிச் செய்யில் விலையாமித் தனை என்கை*...

(सा.स्वा) अन्योन्यं *பண்ணும்* अतिशय*ங்களை* उपजीवि*த்தன்றோ* यजमान*ன்* क्रियानिवृत्ति*யைப் பண்ணுகிறதென்று கருத்து. ஆனாலும் இப்படி* परस्परशेषत्वं *கூடுமோ?* परग-तातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं सशेष:परश्शेषी*யென்று* शेषलक्षण*மாகையாலே இங்கிந்த* भागवत*ன் நமக்கு* अतिशयं *பண்ணக்கடவன் என்று* परस्परम् इच्छै*யல்லாமையாலே* इच्छयोपादेयत्वरूप शेषलक्षण*மில்லையே?* एतादृशेच्छै*யில்லாவிட்டாலும் இந்த* भागवत*னுக்கு* अतिशयाधानं *பண்ணக் கடவேனென்று* परस्परम् इच्छै*க்கு* विरोध*மில்லாமையாலே* शेषलक्षणं *கூடுமென்னில் அப்போது இச்*शेषत्वं स्वेच्छायत्त*மாகையால்* ईश्वरेच्छाप्रयुक्त*மல்லாமையாலே* ''इछात एव तव विश्वपदार्थ सत्ता'' *என்கிறபடியே* भागवतशेषत्व*ம்* अप्रामाणिक*மாக* प्रसङ्गि*யாதோ? என்னவருளிச் செய்கிறார். இப்படி* इति । *இதினாலே* लक्षण*த்தில்* इच्छापदं शेषशेषिमध्यस्थान्यतमेच्छापर*மென்றும்* उपादेयत्वपदं विनियुक्तत्वपर*மென்றும் சொல்லிற்றாகிறது. இப்படி* भागवतशेषत्वमीश्वरेच्छासिद्ध*மாகில்* पूर्वम् - ''गुणैर्दास्यमुपागत:'' *என்று* भागवतविषय*த்தில்* गुणाधिक्यदर्शनकृत*மாக* स्वेच्छासिद्ध शेषत्व*மென்று சொன்னது* विरोधि*யாதோ?* भागवतत्व*மடியாக* भगवदिच्छामात्रसिद्ध शेषत्वा-पेक्षया भगवद्विषय*த்தில் போலே* गुणज्ञान*மடியாக* स्वेच्छासिद्ध भागवतशेषत्वं भिन्न*மாகையாலே* विरोध*மில்லை என்னிலிப்படி யிரண்டு* शेषत्वं *உண்டாகிலிரண்டும்* समानाश्रय*மாயும்* कैङ्कर्यरूपसमानकार्य*மும்*...

(सा.प्र) सूत्रयोर्निर्णीतमिति भाव: । उपजीवि*யாதே*, कृतप्रतिकृतबुद्धिं विहाय । तथात्वेऽतिशया सिद्ध्या शेषत्वाभावप्रसङ्गात् । *தன்னேற்றமாயிருக்கும்*, स्वस्यातिशयावहं भवति - प्रदर्शितरीत्या विरोधाभावेन भगवदिच्छासिद्धं भागवतपरस्परशेषत्वं भगवत्प्रीतिहेतुकैङ्कर्यपर्यन्तं प्रमाणसिद्धं स्थापितम् - गुणवशीकृत स्वेच्छाधीन शेषत्वं तु ''क्षीरं शर्करया युक्तम्'' इति न्यायेन महनीय दास्यस्य लोके सुखकरत्व दर्शनान्तानन्दावहत्वेन अत्युत्कृष्टमिति *இப்படி* ईश्वरेच्छै*யாலே* इत्यादि वाक्यद्वयस्य फलितार्थ: । ननु सर्वस्वामी प्रिय: पतिस्स्वभक्तान् स्वभक्तशेषत्वे विनियुङ्क्ते चेत्संसारिणं प्रत्यपि तथा विनियुंजीत । तेषामपि तद्विभूतित्वाविशेषात् ।

(सा.सं) उपजीवि*யாதே* इति । उपजीवने कृतप्रतिकृतरूपत्वात्स्वरूपविरोध एव स्यादिति भाव: । एवमविरुद्धे ईश्वरेच्छायत्ते भागवतशेषत्वे ना प्रमाणिकत्व२ गन्धोऽपीत्याह । चेतनगतशेषत्वस्य दासत्वे पर्यवसन्नत्वात्तन्निर्गुणं विरुद्धगुणं प्रति च चेद्दु:खाय स्यादिति शेषत्वविशेषभूतं भोगवर्धकदासत्वं...

**मू-गुणवशीकृत**மான தன் நினைவாலே **भगवद्विषय**த்திலும் **भागवतविषय**த்திலும் வரும் **दासत्वं भोगवर्धक**மாய்க் கொண்டு தன்னேற்றமாயிருக்கும் இவ்விடத்தில் **ईश्वर**ன்...

(सा.दी) गुणवशीकृतமான, शेषिगुणवशीकृतமான நினைவாலே, प्रीतिயாலே शेषित्व शेषत्वங்களுக்கு हेतुவைக் காட்டுகிறார். இவ்விடத்தில் इत्यादि...

(सा.स्वा) ஆகையால், अन्यतरवैयर्थ्यं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். गुणवशीकृतமான इति - भोगेति शेषत्वकार्यकैङ्कर्यத்தில் गुणकृतदास्यमधिक भोग्यताजनकமுமாகையாலே वैयर्थ्यமுமில்லை. प्रत्युतगुणकृतदास्यमुत्कृष्टமாயுமிருக்கும் என்று கருத்து. இங்கு भागवत विषयத்தில் गुणकृतदास्यं स्वरूपविरुद्धமாகையாலே भागवतत्वமடியாக வந்த शेषत्व-प्रतिसंबन्धिविषयத்தில் தானே गुणकृतदास्यमुचितமாகையால் गुणकृतभागवतदास्यத்துக்கு भागवतत्व प्रयुक्त भागवत शेषत्वमुपजीव्यமாகையால் இரண்டும் सप्रयोजनமென்று கருத்து. இப்படி ईश्वरेच्छैயாலே வந்த शेषत्वं தவிர गुणकृतமாய் स्वेच्छायत्तशेषत्वமுண்டாகில் அந்த शेषत्वप्रतिसंबन्धिशेषित्वமும் स्वेच्छैயாலே வந்ததாகிலும் स्वरूपविरुद्धமன்றோ? किञ्च भागवतशेषत्वमधिकप्रीतिजनकतया ईश्वरेच्छादिसिद्धமானாலும் शेषित्वमीश्वरेच्छासिद्धமல்லாமையாலே शेषित्वमप्रामाणिकமுமாகாதோ? என்னவருளிச் செய்கிறார். இவ்விடத்தில் ईश्वरன் इति । भागवतशेषत्ववदधिक प्रीतिजनकत्वाभावेऽपि...

(सा.प्र) भोगवर्धकत्वमेवेत्याह । गुणवशीकृतமான इति । தன்னேற்றமாயிருக்கும், अधिकं भवति । आधिक्येन भोगवर्धकं भवतीत्यर्थः । नन्वेवं राजादिभिस्स्ववाहनादौ स्वधृत माल्यादि विनियोगवत्सर्वस्वामी श्रियः पतिस्स्वभक्तान् स्वकीयशेषत्वेन शेषित्वेन च विनियुङ्क्ते चेत्तद्वत्संसारिणः प्रत्यपि तथा विनियुञ्जीत । तेषामपि तथा भगवद्विभूतित्वाविशेषात् । एवं च प्रपन्नैस्संसार्याश्रयातिशयजननप्रसङ्गः, न चेष्टापत्तिः । ''मूढैः पापरतैः क्रूरैर्भगवच्छास्त्रदूषकैः संबन्धं नाचरेद्भक्तिर्नश्यत्येतैस्तु सङ्गमः'' इत्यादिविरोध प्रसङ्गादित्यत्र ''मम मद्भक्तभक्तेषु प्रीतिरभ्यधिकाभवेत् । तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः । आराधनानां सर्वेषां विष्णोराराधनं परम् । तस्मात्परतरं प्रोक्तं तदीयाराधनं परम् । तदाश्रितस्याश्रयणात्तस्य तस्य च तस्य च । संसेवनान्नरा लोके पूयन्ते सर्वपातकैः ''इत्यादि प्रमाणैस्स्वतन्त्रस्वामी भागवतानेव शेषित्वेन शेषत्वेन च विनियुङ्क्त इत्यवगमान्नातिप्रसङ्ग इत्यभिप्रेत्याह । இவ்விடத்தில் इत्यादिना ।...

(सा.वि) एवं च प्रपन्नैस्संसार्याश्रयातिशयजननप्रसङ्ग इत्याशंकायामीश्वरेच्छायाश्शास्त्रैकगम्यत्वात् ''अनन्यदेवता भक्ता ये मद्भक्तजनप्रियाः'' इत्यादिभगवद्वाक्यदर्शनादीश्वरस्वातन्त्र्यविशिष्टेच्छाया भागवतान्प्रत्येव भागवतान्विनियुङ्क्ते । न संसार्यात्मनः प्रतीति भागवतानां शेषित्वं न प्राकृतानामित्याह இவ்விடத்தில் ईश्वरன் इति - राजादिभिः...

(सा.प्र) विशेषविषयं पर्यवसाययतीति गुणवशीकृतமான इति । भगवद्विषयத்திலும் दृष्टान्ताभिप्रायेण தன்னேற்றம் इत्युक्तम् । स्वरूपस्यात्यन्तोचितम् । तर्हि गुणवद्भागवता एव शेषिणश्च स्युः इत्यत्राह । இவ்விடத்தில் इति ।

**मूलं**। विनिर्मुक्ता जीवं सङ्कर्षणं ततः। विशन्ति विप्रप्रवरास्सांख्ययोगाश्च तैस्सह ।। ततस्त्रैगुण्यहीनास्ते परमात्मान मञ्जसा। प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ।। सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः। समाहित मनस्कास्तु नियतास्संहृतेन्द्रियाः ।। ऐकान्त्य (एकान्त) भावोपगता वासुदेवं विशन्ति ते'' इत्यादिகளான महा भारतादि वचनங்களிலும். श्वेतद्वीपमितः प्राप्य विश्वरूपधरं हरिम्।। - ...

---

(सा.दी.) जीवं, जीवाधिष्ठातारं - विप्र प्रवराः, आत्मगुणपरिपूर्णश्रेष्ठाः - सांख्यनिष्ठाः - तैस्सह योगनिष्ठाश्च उभयेऽपि - निवृत्तधर्मनिष्ठानां मोक्षोपदेशात् - ततस्त्रैगुण्येति - सङ्कर्षणप्राप्त्यनन्तरमञ्जसा वासुदेवं परमात्मानं विशन्ति - सर्वावासत्वाद्वासुदेवं क्षेत्रज्ञमन्तर्यामिणं - नियताः, नियमयुक्ताः - विषयान्तरेभ्यस्संहृतेन्द्रियास्सन्तः अतो वासुदेवे ऐकान्त्यभावमुपगताः विशन्ति - इत्येतत्तत्त्वतो विद्धीति - श्वेतद्वीपमिति - इतः श्वेतद्वीपं प्राप्य - ...

---

(सा.स्वा.) विनिर्मुक्ताः जीवाधिष्ठितारं सङ्कर्षणम्। विप्रप्रवराः आत्मगुणपूर्णाः साङ्ख्यनिष्ठाः - तैस्सह, योगनिष्ठैस्सह। उभयेऽपि प्रविशन्ति। ततस्सङ्कर्षण प्राप्त्यनन्तरमञ्जसा वासुदेवं परमात्मानं विशन्ति - सर्वा वासत्वात् वासुदेवम् - क्षेत्रज्ञम्, अन्तर्यामिणम्। नियताः, नियमयुक्ताः - विषयान्तरेभ्यस्संहृतेन्द्रियाः। समाहितमनस्काश्च अतः। वासुदेव एकान्तभावमुपागताः विशन्तीत्येतत्तत्त्वतो विद्धि - श्वेतद्वीपमिति। इतश्श्वेतद्वीपं प्राप्य। विश्वरूपधरं हरिम्, तत्रत्यं - ...

---

(सा.प्र.) जीवं सङ्कर्षणं, जीवाधिष्ठातारं सङ्कर्षणमित्यर्थः - एवं सङ्कर्षणं प्रविष्ठानां तत्र प्रकृतिप्राकृत वर्गत्यागपूर्वकं परवासुदेवप्राप्तिमाह - ततस्त्रैगुण्यहीना इत्यादिना-मुक्तप्राप्यस्य निर्गुणजीवत्वमाशङ्क्याह - सर्वावासमिति। ''इदं शरीरं कौन्तैय क्षेत्रमित्यभिधीयते - एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः - क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।।'' इत्युक्तेर्भगवतोऽपि क्षेत्रज्ञत्वमित्यर्थः - ...

---

(सा.वि.) जीवं सङ्कर्षणं, जीवाभिमानिनं सङ्कर्षणमात्मगुणपरिपूर्णश्रेष्ठाः साङ्ख्यनिष्ठाः तैस्सह योगनिष्ठाश्च वासुदेवं विशन्ति - अनन्तरं समाहितमनस्का नियताः नियमयुक्ताः विषयान्तरेभ्यस्संहृतेन्द्रियाः ततो वासुदेवे ऐकान्त्यभावोपपन्नास्त्वं क्षेत्रज्ञं, क्षेत्रज्ञशरीरकं सर्वावासं वासुदेवं परमकारणं विशन्तीति तत्त्वतो विद्धीत्यन्वयः

---

(सा.सं.) जीवं, जीवाधिष्ठितारम्। साङ्ख्ययोगाश्चेति च शब्दस्य सङ्कर्षणं च विशन्तीत्यन्वयः। ''तल्लोके तत्संयुजो भवन्ति'' इति तदर्थः। ये साङ्ख्ययोगनिष्ठतया विप्रप्रवराः। साङ्ख्यं, ज्ञानयोगः। तथा विप्रप्रवराः, आत्मगुणपूर्णाः मधुविद्यानिष्ठाः। सङ्कर्षणप्राप्त्यनन्तरम्। वासुदेवं, परवासुदेवम्। स परवासुदेव एव सर्वक्षेत्र ज्ञान्तर्यामीति तत्त्वतो विद्धीति क्षेत्रज्ञं विद्धीत्युक्तम्। एकान्तभावोपगताः। अनन्यभोगास्सन्तः। क्षेत्रज्ञं वासुदेवं विशन्तीत्येतत्तत्त्वतो विद्धीति वान्वयः। श्वेतद्वीपमिति। इतश्श्वेतद्वीपं प्राप्य अनिरुद्धमासीदन्ति ।।-

मूलं। 'ततोऽनिरुद्धमासाद्य श्रीमत्क्षीरोदधौ हरिम् । ततः प्रद्युम्नमासाद्य देवं सर्वेश्वरेश्वरम् ।। – ततश्सङ्कर्षणं दिव्यं भगवन्तं सनातनम् । अयमप्यपरो मार्गस्सदा ब्रह्मसुखैषिणाम् ।। – परमैकान्तिसिद्धानां पञ्चकालरतात्मनाम्'' என்றிப்புடைகளிலே जयत्संहितादिகளிலும் ''विभवादर्चनाद्व्यूहं प्राप्य व्यूहार्चनात्परं – तद्ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति'' என்று श्रीपाञ्चरात्राधिकरणத்திலும் சில अधिकारविशेषங்களைப் பற்றச் சொல்லுகிற क्रममुक्तिपक्षத்திலும் सत्यलोकादिகளிலிருந்து मुक्त ராமவர்களுக்குமுள்ள गतिविशेषादिகளிருக்கும் கட்டளைகளவ்வோ अधिकारिகளுக்கே ज्ञातव्य மாகையாலிங்கவை வகுத்துச் சொல்லுகை अपेक्षितமன்று - ...

---

(सा.दी.) अनिरुद्धमासीदन्ति - ततः प्रद्युम्नं प्राप्नुवन्ति - ततस्सङ्कर्षणं - सदा ब्रह्मसुखैषिणाम्, सार्वकालिकब्रह्मानुभवसुखापेक्षिणाम् - परमैकान्तिनश्च ते सिद्धाश्च - पञ्चकालरतात्मनां मुमुक्षूणामयमपरो मोक्षमार्गः - सत्यलोकादिகளில் इत्यादि - ''ब्रह्मणा सह ते'' इत्यादिகளில் சொன்ன पक्षम् - அவ்வோ अधिकारिகளுக்கே, तत्तद्विद्याविशेषाधिकारिகளுக்கே - ஆகில் இவ் अर्चिरादिगतिயும் - ...

---

(सा.स्वा.) प्राप्नुवन्ति । ततः क्षीरोदधौ अनिरुद्धमासीदन्ति - ततः प्रद्युम्नं देवं सर्वेश्वरेश्वरं, ब्रह्मादीनामपीश्वरम् । आसीदन्ति - ततस्सङ्कर्षणं दिव्यं भगवन्तमासीदन्ति । सत्यलोकादिகளில் इति ''ब्रह्मणा सह ते सर्वे संप्राप्ते प्रति सञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्'' என்று சொல்லுகிற अधिकारिகளுக்குமென்றபடி - क्रमेण அன்றிக்கே अव्यवधानेन परमपदगन्ताக்களுக்கு अर्चिरादिमार्ग மன்றிக்கே வேறு मार्गமில்லையென்று கருத்து - ஆனாலும் இவ் अर्चिरादिगति उपासकனுக்கு नित्यं चिन्तनीयैயாகையாலே तत्क्रतुन्यायத்தாலேயவனுக்கே नियतैயன்றோ? प्रपन्नனுக்குமது नित्यं चिन्तनीयமென்னில் அப்போது गतिचिन्तैயும் उपायाङ्गமாகையால் साङ्गोपायத்துக்கு सकृत्कर्तव्यत्वभङ्गं प्रसङ्गिயாதோ? அது अङ्ग மன்றென்னில் இம் मार्गनिरूपण மிவ்விடத்தில் व्यर्थமாக- ...

---

(सा.प्र.) सत्यलोकादीति - ''ब्रह्मणा सह ते सर्वे संप्राप्ते प्रति सञ्चरे - परस्यान्ते महात्मानः प्रविशन्ति परं पदम्'' इत्यादिषूक्तानामित्यर्थः - तपोलोकवासिनस्सनकादयस्सान्तानिकलोकतया निर्दिष्टकारणवैकुण्ठ वासिनोऽयोध्यास्थिताश्चादिशब्दार्थः - ननु निर्याणगतिविशेषपरिपूर्णानुभवानामनुसन्धानस्य प्रकरणाद्भक्त्यङ्गत्ववत्प्रपत्त्यङ्गत्वाभावात्प्रपन्नानां - ...

---

(सा.वि.) இப்புடைகளிலே, एतत्स्थलेषु - सत्यलोकादिகளிருந்து इत्यादि शब्देन तपोलोकवासिनस्सनकादयस्सान्तानिकतया निर्दिष्टकारणवैकुण्ठ वासिनोऽयोध्यास्थिताश्च गृहीताः - ननु निर्याणगति विशेष परिपूर्ण ब्रह्मानुभवानां भक्तेरिव प्रपत्त्यङ्गत्वा भावात्प्रपन्नानां तदनुसन्धान मनपेक्षितमिति तन्निरूपणं व्यर्थमित्याशङ्क्य फलार्थित्वादधिकार सिद्ध्यर्थं निर्याणगतिप्रकारेण परिपूर्णानुभव प्रदान पर्यन्त भगवदीय फलप्रदान प्रकारस्योपायदशायां - ...

---

(सा.सं.) ततः क्षीरोदधिं प्राप्य प्रद्युम्नमासीदन्ति । ततस्सङ्कर्षणं ततश्च सनातनं भगवन्तं परमासुदेव मासीदन्तीत्यर्थः । सदेति । सदाब्रह्मानुभवसुखमपेक्षमाणानाम् । विभवेति - व्यूहशब्दः - ...

**मूलं।** இக்गत्यनुसन्धानादिகள் स्वतन्त्रप्रपत्तिनिष्टனான இவனுக்கு सद्वारकप्रपत्तिनिष्ठனுக்குப் போலே उपायाङ्गமாக நாள் தோறும் कर्तव्यங்களன்றேயாகிலும் இவ் उपायத்திலிழியும் போது अधिकारित्व सिद्धिக்காக फलार्थित्वं अपेक्षितமாகையாலே फलपर्वविशेषानुसन्धानமாய்ப் புகுதக்கடவன - பின்பு வரப்புகுகிற கண்ணாலத்துக்கு நாளெண்ணியிருகர் குமாப்போலே पूर्वप्रार्थितपुरुषार्थ स्मरणमात्रமாய் இப்पुरुषार्थं பெறப்புகு கிறோமென்கிற प्रीत्यतिशयத்தை விளைப்பித்துக்கொண்டு स्वयं प्रयोजन மாயிருக்கும் – ...

---

(सा.दी.) ज्ञातव्यமாகாதே யென்னவருளிச்செய்கிறார் - இக்गत्यनुसन्धानादिகள் इत्यादि । आदिशब्दं परमफलानुसन्धानग्राहकम् । இக்गत्यनुसन्धानं उपायारम्भात् प्राक् तदुपयोगिயாய் पश्चात्स्वयं प्रयोजनरूपமாம் - ...

---

(सा.स्वा.) प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார் - இக்गत्यनुसन्धानादिகள் इति आदिशब्देन ब्रह्मयशःप्रवेशादिसङ्ग्रहः - अधिकारित्वसिद्धिக்காக முன்பு चिन्तनीयமானாலும் प्रपत्त्युत्तरकालं चिन्तनीय மாகாமல் प्रसङ्गिயாதோ? அப்போது नित्यचिन्तनीयமென்கிற संप्रदायமும் विरोधिயாதோ என்னவருளிச்செய்கிறார் - பின்பு इति - நாளெண்ணாவிட்டாலும் कल्याणं स्वत एवावर्जनीयமாக வராநிற்கச் செய்தேயும் स्वयं प्रयोजनமாக நாளெண்ணுமாப்போலே என்றபடி - पूर्वेति । अर्चिरादिगतेरपि पूर्वं फलतया प्रार्थित तयोत्तरकालीनगतिचिन्तै पुरुषार्थमात्रस्मरण மென்றபடி - இப்படி अधिकारित्वसिद्धिக்காக भक्तனைப் போலே पूर्वं गतिविशेषपरिज्ञानं வேணுமாகில் अर्चिरादिகளுடைய

---

(सा.प्र.) तदनुसन्धानमपेक्षितमिति तन्निरूपणं व्यर्थं स्यादित्यत्र अङ्गत्वाभावेऽपि प्रपदनात्पूर्वभाव्यनुसन्धानस्य पश्चाद्भाव्यनुसन्धानस्य वा वैयर्थ्यमुच्यत इति विकल्प्योभयोरप्युपयोगमाह - இக்गत्यनुसन्धानादिகள் इत्यादिना - निर्याणानुसन्धानादिरादिशब्दार्थः - புகுரக்கடவன, प्रविशेयुरित्यर्थः - अन्तर्गता भवेयुरिति भावः - பின்பு வரப்புகுகிற इत्यादि - भाव्युत्सवदिवसात्पूर्वभाविदिवस परिगणनवद्गतिविशेषाद्यनुसन्धानस्य भरन्यासात्पूर्वमधिकारि घटकत्वात्पश्चादेवं भूतं फलं लप्स्य इति तुष्टिहेतु त्वाच्चानुसन्धेयत्वसिद्धिरिति भावः - ...

---

(सा.वि.) ज्ञातव्यत्वादनन्तरं प्रीत्यतिशयोत्पादनेन स्वयं प्रयोजनतयानुसन्धेयत्वाच्च न व्यर्थमित्याह - இக்गत्यनुसन्धानादिகள் इति - कर्तव्यங்களன்றேயாகிலும், कर्तव्या न भवन्त्वेव तथा - இழியும்போது, प्रवेशसमये । புகுரக்கடவன, प्रविशेयुः । फलान्तर्गता भवेयुरित्यर्थः । பின்பு, उपायनिष्पत्त्यनन्तरम् வரப்புகுகிற கண்ணாலத்துக்கு நாளெண்ணியிருக்குமாப்போலே, भविष्यत्कल्याणस्य दिवसान् गणयित्वा स्थितिवत् "पुरुषार्थं பெறப்புகுகிறோம், प्राप्स्यामः - என்கிற प्रीत्यतिशयத்தை" इत्यभिलाषकारि प्रीत्यतिशयम् । விளைப்பித்துக்கொண்டு, अभिवर्धयत्सत् - अर्चिरादिमार्गे कृत्स्न -

---

(सा.सं.) उक्तव्यूहत्रयपरः । अस्याधिकारिण उक्तगतिविशेषानुसन्धानं किं त्वेनोपयुज्यत इति शङ्कायामाह । गत्यनुसन्धानादिகள் इत्यादिना । आदिशब्देन निर्याणानुसन्धानं गृह्यते । ...

मूलं। ஆகையாலிங்கு समुदायज्ञानத்தாலும் இவனுக்கு अपेक्षितसिद्धियुண்டு. "समीपं राजसिंहस्य रामस्य विदितात्मनः । सङ्कल्पहयसंयुक्तैर् यान्तीमिव – ...

(सा.दी.) ஆகையால் इत्यादि, उपायाङ्ग மல்லாமையால். समुदायज्ञानமாவது, तद्विषयस्थूलज्ञानम् - இவ்வளவாலும் फलापेक्षै सिद्धिக்கும் - समीपं राजसिंहस्येति - राजसिंहस्य - परत्वத்தில் இல்லாத गुणம் - रामस्य समीपं सङ्कल्पा एव हयाः तत्संयुक्तैः - ...

(सा.स्वा.) कृत्स्नस्वरूपस्वभावங்களையுமவர்களுடைய सत्कारविरोधங்களையும் மற்றும் मध्यवर्ति फलपर्वங்களையும் विशिष्य निरूपिக்க வேண்டாவோ? என்னவருளிச்செய்கிறார் - ஆகையால் इति - ஆகையால், अङ्गமன்றிக்கே गतिचिन्तै फलपर्वविशेषानुसन्धान மாகையாலே - समुदायेति - विशेषाकारपरिज्ञान மில்லாவிட்டாலும் सामान्यकारेण फलपर्वेच्छैயே अधिकार மாகையால் विशिष्य निरूपिயாவிட்டாலும் समुदाय ज्ञानोपयुक्तनिरूपणं पर्याप्तமென்றபடி - ஆனாலும் उपायान्तर कालं இந்த मार्गத்தாலே परमफल மடையக்கடவோமென்று गतिचिन्तै வேணுமோ? अत्यन्ताकिञ्चनனாய் अत्यन्तपरतन्त्रனான दासன்தான் प्रधानफलिயல்லாமையாலே स्वतन्त्रस्वामिதானே स्वार्थமாக फलத்தைத் தருமென்று निर्भरனாய் निश्चिन्तனாயன்றோயிருக்க प्राप्तम्? வேறொரு चिन्तै வேண்டாவே? என்ன पारतन्त्र्यादिகளிருந்தாலும் प्रेमपरवशतैயாலே स्वामिविश्लेषं सहिக்கமாட்டாமல் प्रेमपरीवाहமாக पुरुषार्थत्वरार्थं स्वत एव गतिचिन्तै வருமென்று दृष्टान्तमुखेन समर्थिக்கிறார் - समीपमिति - राजसिंहस्य, स्वत एव पुरुषार्थप्रापणशक्तस्य रामस्य - गुणवत्तया भोग्यतया विश्लेषानर्हस्य - विदितात्मनः, सर्वज्ञस्य - आश्रितसंरक्षणशीलमात्मानं विदुषो वा । समीपं, - ...

(सा.प्र.) एवं तर्ह्यर्चिरादिमार्गे प्रमाणप्रतिपन्नकृत्स्नभोगा मुक्तौ भोगप्रकारविशेषाश्च विशिष्य वक्तव्या इत्यत्राह - ஆகையால் इति। अधिकारस्य पुरुषार्थत्वस्य चैतावतापि सिद्धेस्तदर्थमेव च तेषां ज्ञातव्यत्वादित्यर्थः। இங்கு, प्रकृतार्चिरादि गतिविशेषादावित्यर्थः । नन्वेवं गत्यनुसन्धानस्य सप्रयोजनत्वेऽपि तादृशप्रयोजनापेक्षाभावे तस्य नित्यमनुसन्धेयत्वं न सिद्ध्येदित्यत्र निरुपाधिकशेषभूतस्यात्यर्थ प्रियस्वामि समीपप्रवृत्तेरेवोचितत्वात्कर्मणा तत्प्रतिबन्धेऽपि तत्प्राप्तेरभिलषणीयत्वात्तदभिलाषवर्धकत्वेन गतिविशेषादीनां नित्यमनुसन्धेयत्वसिद्धिरित्यभिप्रेत्य गत्यनुसन्धाननिदर्शनमाह - समीपं राजसिंह स्येत्यादिना

(सा.वि.) भोगप्रकारा मुक्तौ भोगप्रकाराश्च विशिष्य वक्तव्या इत्यत्राह - ஆகையால் इति । समुदायज्ञानं, सामान्यकारेण ज्ञानम् । तावतापि फलार्थित्वसिद्धिर्भवतीति भावः । सङ्कल्पाः त्वरातिशयेन कदा कदेति-

(सा.सं.) उपायाङ्गत्वाभावे स्वयं प्रयोजनत्वं वाच्यम् । तत्त्वमस्य तु इत्यत्र दृष्टान्तेनाह - பின்பு इत्यादिना - ஆகையால், स्वयं प्रयोजनत्वात् - उपायाङ्गत्वे हि संयगेव ज्ञायत इति भावः - प्रकृतिबन्ध दुःखितस्य शुद्धान्तसिद्धान्तिनः - उपायानङ्गेऽपि गत्यनुसन्धाने रागविशेषः प्रेरकः (जात्या) मनोवृत्तिरेवात्र प्रमाणं निदर्शनं चेत्याह - समीपमिति । ...

मूलं। मनोरथैः'' என்னும்படி பிராட்டியிருந்த விருப்பு இவனுடைய गत्यनुसन्धानத்துக்கு निदर्शनम् - நடை பெறவங்கிப்பகலொளி நாளுத்தராயண மாண்டிடைவருகாத்திரவி ...

(सा.दी.) मनोरथैः - यान्तीमिव स्थिताम् என்கை.

இனி आतिवाहिकक्रमेण सत्करिக்கப்படும் अर्चिरादिमार्गத் தைக்காட்டுகிறார் பாட்டால். நடைபெற इत्यादि - நடைபெற, अर्चिरादिमार्गத்தில் நடைபெற்ற मात्रத்திலே. அங்கி, अग्नि - अर्चिर्देवतैயென்றபடி. பகல், दिवसम् - ஒளிநாள், पूर्वपक्षम् - உத்தராயணம் - ஆண்டு, संवत्सरम् - இடைவரு, ...

(सा.स्वा.) सङ्कल्पः निश्चय एवेदानीमेव मया तत्समीपे गन्तव्यमिति निश्चय एव हयः, अश्वः। तत्संयुक्तैर्मनो रथैः - मनोरथाः परमफलोपयुक्तफल पर्वेच्छाः - त एव रथाः - तैर्यान्तीम् गच्छन्तीमिवेत्यर्थः - अत्यन्तपर तन्त्रैயான பிராட்டி प्रेमமுள்ளடங்காதே स्वयमेव स्वामिसमीपगमनத்தை मनोरथिக்கிறாப் போலே இவ் अधिकारिயும் गतिचिन्तै பண்ணுகிறதென்று கருத்து - ...

இப்படி இவ் अधिकारத்திலே सूक्ष्मशरीरं विद्यावशीकृतभगवत्सङ्कल्पத்தாலே गतिमात्रार्थமாக स्थापितமென்று சொன்னது கூடுமோ? அப்போது अर्चिरादिमार्गத்திலே भोगविशेषசொல்லுகிறது विरोधिயாதோ? भोगமுண்டாகிலதிலே தானே अत्यासक्तனாய் तदुपरि गन्तुमनिच्छுவாகானோ? என்ன कर्मफलभोगமன்றிக்கே विद्यामाहात्म्यத்தாலே आनुषङ्गिकफलानुभवपूर्वकमर्चिरादि गमनंகூடுமென்கிறார் - நடைபெற इति - நடைபெற, सूक्ष्मशरीरத்தோடே நடைபெற்றமாத்திரத்திலே - गमनकालத்திலே என்றபடி - அங்கி, अग्निः - अर्चिर्देवतैயென்றபடி - பகல், दिवा - ஒளிநாள், प्रकाशयुक्तदिनங்கள், शुक्लपक्षமென்றபடி - उत्तरायणं, स्पष्टम् - ஆண்டு, संवत्सरम् - இடைவரும், ''संवत्सरादादित्यम्'' என்று சொல்லச் செய்தேயும் न्यायத்தாலே मध्येவரும் - காற்று, वायु - இரவி, सूर्यன் - ...

(सा.प्र.) स्त्रीशूद्रादीनां सुखेन गत्यनुसन्धानार्थं द्रमिडगाधया सङ्गृह्णाति। நடைபெற வங்கி - इत्यादिना। நடைபெற - शरीरान्निर्गत्य गच्छति सति - அங்கி अग्निः। பகல் दिवा। ஒளிநாள் ज्योत्स्नायुक्ताति। दिनानि। शुक्लपक्ष इत्यर्थः ஆண்டு - संवत्सरः - இடைவரு காத்து अवकाशेष्वागच्छन् वायुः-

(सा.वि.) नाथप्राप्तिविषयेच्छाविशेषास्तैरेव हयैयुक्तैर्मनोरथैः प्रीतिविशेषैरेव रथैः रामस्य समीपं यान्तीमिवेति श्लिष्टाश्लिष्टरूपक सङ्कीर्णोत्प्रेक्षा तया सर्वदा तत्प्राप्ति भावना फलति। तद्वद्वर्तितव्यमिति भावः। सीताया विद्यमानावस्थानम्।

गतिप्रकारं गाधया सङ्गृह्णाति। நடைபெற इति। गतिलाभे सति। அங்கி अग्निः। பகல் - दिवसः ஒளிநாள் - ज्योत्स्नादिवसाः। उत्तरायणम्। ஆண்டு संवत्सरम्। இடை अन्तराले। வரு आगच्छन्। காத்து वायुः। ரவி ...

(सा.सं.) एवं निर्गत प्रपन्नस्य ''अथैवममरास्तत्र सह दिव्याप्सरोगणैः - सोपहारा प्रहर्षेण प्रत्युद्गच्छन्त्युपागतम् - अर्चिरादिकया गत्या तत्र तत्रार्चितस्सुरैः - अतीत्य लोकानभ्येति वैकुण्ठं वीतकल्मषः'' इत्याद्युक्तविधयोक्तं गतिविशेषं गाधया सङ्गृह्णाति - நடைபெறவங்கி इति - गतिलाभे सति मूर्धन्यनाड्या निर्गत्य गच्छति सति - अग्निर्दिवा - ज्योत्स्नायुक्तदिवसानि पूर्वपक्ष इत्यर्थः। उत्तरायणं संवत्सरः - अन्तराले आगच्छन् वायुः रविः - ...

**मूलं।** யிரவின் பதி மின் வருணன், குடையுடை வா(னவர்)னோர் கோமான் பிரசாபதி யென்றிவரால், இடையிடைபோகங்களெய்தியெழிற்பத மேறுவரே ।।२८।।

(सा.दी.) आदित्यात्पूर्वं मध्येநிற்கும் - காற்று, वायु - இரவி, रविः, आदित्यன் - இரவின் பதி, रात्रिக்கு पतिயான चन्द्रன் - மின், वैद्युतன். வருணன் - குடையுடை, छत्रविशिष्टனான - வானோர்கோமான், देवेन्द्रன் - प्रजापतिயென்கிற இவ் आतिवाहिकரால் மத்யே மத்யே सत्कारங்களைப் பெற்று எழில் பதம், शोभैயையுடைய अर्चिरादिपदத்தை आरोहिக்கப்பெறுவரென்கை ।।२८।।

இவ் अर्चिरादिगतिपूर्वकभगवत्प्राप्तिயை स्वानुसन्धानद्वारा दर्शिப்பிக்கிறார் - ...

(सा.स्वा.) இரவின் பதி, रात्रिपति - चन्द्रனென்றபடி - மின், विद्युत्து. வருணன், स्पष्टम् குடையுடை, सर्वलोकाधिपत्यं தோன்றும்படி तच्चिह्नமான छत्रத்தையுடையவனான - வானோர் கோமான், देवनायकனான इन्द्रன் - ப்ரசாபதி, प्रजापति - என்றிவராலிடையிடை. मध्ये मध्ये कर्मफल மன்றிக்கே आनुषङ्गिक மாகவந்த - போகங்களெய்தி, भोगங்களையடைந்து - எழில், शोभायुक्तமான - பதம், अर्चिरादिपदपरम्परैயை - उत्तरोत्तरोत्तरमुत्कृष्टपदத்தை - सर्वोत्कृष्टपरमपदத்தை என்றவுமாம் - பெறுவரே, आरोहणं பண்ணுவரென்றபடி - उत्तरोत्तरमुत्कृष्टமாகையாலே आन्तरालिकभोगத்திலே अत्यासक्तனாய் प्रतिष्ठितனாகானென்று கருத்து ।।२८।।

இப்படி अर्चिरादिमार्गगमनं पुरुषार्थरूप மென்று சொன்னது கூடுமோ? आतपा सन्तप्तपुरुषच्छायानुभूतिन्यायத்தாலே संसारदशैயில் दुःखरहितனான अधिकारिக்கிது पुरुषार्थமா(கக்கொள்ளக்கூடுமோ) காதென்னக்கூடுமோ? என்கிற शङ्कावारणार्थं संसारदुःख स्वभावத்தையும் प्राकृतपुरुषार्थத்தையும் प्रत्यक्षமாகக்கண்டு मुक्तனுடைய अनुसन्धानात्मक श्लोकத்தாலே उपपादिக்கிறார் - ...

(सा.प्र.) सूर्यः இரவின் பதி, रात्र्यधिपतिश्चन्द्रः - மின், विद्युत् । குடையுடைவானோர்கோமான், त्रैलोक्याधिपत्यसूचकछत्रवान् देवाधिपतिरिन्द्रः - यद्वा सर्वेषां वरप्रदाता देवेन्द्रः - என்றிவரால், इत्येतैः - இடையிடை போகங்களெய்தி, मध्ये मध्ये तत्कृतसपर्ययाभोगान्प्राप्य - எழில் பதம், "अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः" इत्युक्तं देदीप्यमानं परमपदं - ஏறுவரே, आरोहन्ति ।।२८।।

यथा नरकमार्गस्य दुःखैकफलत्वं तथा धूमादिमार्गस्यापि दुःखैकफलत्वमिति - ...

(सा.वि.) रविः, இரவின், रात्रेः पतिश्चन्द्रः । மின், विद्युत् । வருணன், वरुणः । குடையுடை, छत्रवान् । வானோர் கோமான், देवानां स्वामीन्द्रः । பிரசாபதி, प्रजापतिः - என்றிவரால், इत्येतैः । இடையிடை, मध्ये मध्ये - போகங்கள், भोगान् - எய்தி, प्राप्य - எழில்பதம், समृद्धं परमपदम् - ஏறுவரே, आरोहन्त्येव ।।२८।।

(सा.सं.) रात्रिपतिश्चन्द्रः विद्युद्वरुणः छत्रवान् देवानां नियन्ता चेन्द्रः प्रजापतिश्च । என்றிவரால் इत्यादि । इत्येतैर्मध्ये मध्ये भोगान् प्राप्य तेजिष्ठपदमारोहन्त्येवेत्यर्थः ।।२८।।

सर्वेश्वरस्स्वयमेव स्वर्गनरकपरिभ्रमणसमधिगतश्रान्तींश्चेतनान् केनचिद्व्याजेन - ...

**मूलं।** पितृपथघटीयन्त्रारोहावरोहपरिभ्रमैः, निरयपदवीयातायातक्रमैश्च निरन्तरैः । अधिगतपरिश्रान्ती – ...

(सा.दी.) पितृपथेति - पितृयानं, स्वर्गमार्गமான धूमादिमार्गம் - पितृयानமாகிற घटीयन्त्रम् - பூட்டைக்குண்டிகை. अतिरोह மென்ன अवरोह மென்ன - एतद्रूपपरिभ्रमங்களாலும் निरयपदविயில் निरन्तरமாகப் போகை வருகையாகிற पर्यायங்களாலும் - अधिगत परिश्रान्तीन् नः, மிகவுமிளைத்த நம்மை - ...

(सा.स्वा.) पितृपथेति, पितृपथः, पितृयानमार्गः - धूमादिमार्ग इति यावत् - स एव घटीयन्त्रः - तस्मिन्नारोहश्चावरोहश्चारोहावरोहौ - तद्रूपैः परिभ्रमैः असहायतयारोहावरोहपरिभ्रमणेन ''अनेक जन्म साहस्रीं संसारपदवीं व्रजन् - मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः - जटालवृजिनाविले जननयौवनास्वादने जरामरणभीषणे जगति जन्तुरावर्त्यते'' इत्युक्तरीत्या पुनः पुनः श्रमैकफलपरिभ्रमणैरित्यर्थः - निरन्तरैः, निरयपदव्यां यातायातक्रमैश्च धूमादिमार्गपरिभ्रमणे व्रीह्यादिभावदशायां सुखदुःखरहितो दासीनावस्थाप्यस्ति निरयपदव्यांतु नरकान्नरकान्तरं तस्मादपि नरकान्तरमिति क्रमेण दुःखनैरन्तर्यमिति भावः - अधिगतपरिश्रान्तीन् - परिशब्देन कुत्रापि सुखलेशो नास्तीति व्यज्यते - ...

(सा.प्र.) दर्शयन्नर्चिरादिमार्गस्यातिविलक्षणफलप्राप्तिहेतुत्वमाह - पितृपथेत्यादिना । ''प्राप्यान्तम् कर्मणस्तस्य यत्किञ्चेह करोत्ययम् - तस्मात् लोकात्पुनरेत्य अस्मै लोकाय कर्मणे - एष सोमो राजा तद्देवाना मन्नं देवा भक्षयन्ति - तत्र यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनः पुनर्निवर्तन्ते यथेतमाकाशम्'' इत्युक्तरीत्या स्वानुष्ठितकर्मफलभोगार्थं तस्य क्षये पुनस्तत्साधनानुष्ठानार्थं च पुनः पुनरारोहावरोहविषयत्वेन घटीयन्त्र कल्पधूमादिमार्गसञ्चारेण मध्ये मध्ये वासनावशात्प्राप्तनिषिद्धानुष्ठानफलभोगाय निरयेभ्योऽप्यतिक्रूरतम मार्गसञ्चारेण च -'' अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् - मोहश्रमेम् - ...

(सा.वि.) पितृपथेति - पितृपथः, धूमादिमार्ग एव - घटीयन्त्रः, जलोद्धरणार्थं दण्डकाष्टाधारभूत सोपानविशिष्टदारुयन्त्रविशेषः - धूमादिमार्गस्य ''प्राप्यांतं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् - अस्माँल्लोकात्पुनरेत्य अस्मै लोकाय कर्मण'' इति पुनरावृत्तिहेतुत्वाद्धटीयन्त्रत्वरूपणम् । तस्यारोहावरोहपरि भ्रमैः, आरोहणावरोहणपरिभ्रमणैः । निरन्तरैः, अविच्छिन्नैः । निरयपदवीयातायातक्रमैः, नरकमार्ग गमनागमनक्रमैश्च - अधिगतपरिश्रान्तीन्, - ...

(सा.सं.) प्रपन्नः आज्ञाधरैरातिवाहिकैः स्वसमीपं प्रापय्य स्वानुभवानन्द निर्भरान्करोतीत्याह - पितृपथेति । पितृयानमार्ग इत्यर्थः । धूमरात्र्यपरपक्षदक्षिणायन पितृलोकाकाशचन्द्रक्रमेण स्वर्गारोहणमार्गो यस्स पितृ यानमार्गः । जलोद्धरणसाधनयन्त्रविशेषो घटीयन्त्रः । तत्र यथा आरोहन्त्यवरोहन्ति च तत्तुल्यपरिभ्रमणैः । किञ्च निरयस्य, रौरवादेः । पदव्यां निरन्तरैः - अनवरतं क्रियमाणैः । गतागतरूपैस्सञ्चारैः प्राप्तपरिश्रमान् ।

**मूलं।** नाज्ञाधरैरतिवाह्य नः सुखयति निजच्छायादायी स्वयं ...

(सा.दी.) स्वयमेव - आज्ञाधरेः आज्ञानुवर्तिभिरातिवाहिकैः पुरुषैः - अतिवाह्य सत्कारपूर्वकமாக लीलाविभूतिயைக் கடத்தி. हरिचन्दनः, हरिचन्दनसदृशனான भगवान् - यद्वा, हरिயாகிற चन्दनम्। निजच्छायादायी, स्वपादच्छायां दत्वा यावत्कालम्, ...

(सा.स्वा.) अस्मान् आज्ञाधरैः, अर्चिरादिदेवतैरतिवाह्य - तत्र तत्र सत्कारपूर्वकं संसारपदवीसञ्चारं विनिवर्त्य समीचीनं पन्थानं प्रापय्य। हरिः। सकलतापहरत्वात् हरिः। स एव हरिचन्दन इति वा। रूपकालङ्कारः - स्वयमेव निजच्छायादायी सन्, "वासुदेवतरुच्छाया नातिशीता न घर्मदा" इत्युक्तप्रकारेण दुःखनिवृत्तिं कुर्वन्। सुखयति, "एव ह्येवानन्दयाति" इत्युक्तप्रकारेण निरतिशयानन्दमपि ददाति। इतरे वृक्षाः लोके स्वच्छायया सन्तापजनित तुःखनिवृत्तिमात्रं कुर्वन्ति। चन्दनवृक्षस्तु श्रममपि निवर्त्य सौगन्ध्यादि प्रदानादिना सुखमपि करोतीति चन्दनत्वेन रूपणम्। स्वयमित्यनेन - ...

(सा.प्र.) प्रयात' इत्युक्तरीत्या प्राप्तपरिश्रमान् प्रपन्नानातिवाहिकैरर्चापूर्वकमतिवाह्य प्रकृत्यतिक्रमणपूर्वकं परमपदं प्रापय्य - निजच्छायाम्, स्वकान्तिम्। परमसाम्यं प्रदायनिरतिशयसुखैकहेतुत्वाद्धरिचन्दनकल्पो भगवान् सुखयतीत्यर्थः - यथा लोके निरन्तरघटीयन्त्रारोहावरोहणेन निरन्तरं पदवीषु यातायातैश्चाति श्रान्तान् गन्तुमशक्तान् (निजच्छायायां पतितान् हरिचन्दनस्सुखयति तथेति दृष्टान्तो ध्वन्यते) उद्धृत्यच्छायामानीय चन्दन कर्पूरादिभिस्सुखयन्ति - ...

(सा.वि.) प्राप्तश्रमान्। नः अस्मान् - आज्ञाधरैः, अर्चिराद्यभिमानिभिरतिवाह्य प्रकृत्यतिक्रमणपूर्वकं स्वदेशं प्राप्य हरिरेव हरिचन्दनः देवलोकस्थितवृक्षविशेषः - निजच्छायादायी, स्वसाम्यं प्रदास्यन् - अनातपदायीति गम्यते - सुखयति, दायीत्यत्र भविष्यदाधवर्ण्ययोर्णिनिरिति भविष्यति निणिप्रत्ययः - "आपोयुक्तिण् कृतोः" इति युगागमः - यथानवरतमार्गसञ्चारश्रान्तं नानाविध - ...

(सा.सं.) स्वयं, स्वयमेव। केनचिद्व्याजेनेति शेषः। आज्ञाधरैः, आतिवाहिकपुरुषैः, अतिवाह्य, स्वपदं प्रापय्य - छायादार्ष्टान्तिके शोभानिजसाम्यदायी हरिरूपश्चन्दनः - ...

**मूलं**। हरिचन्दनः ।।४६ ।।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे गतिचिन्तनाधिकार एकविंशः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

---

(सा.दी.) सुखयति, निजकैङ्कर्य साम्राज्यसुखं प्रापयति என்கை ।। ४६ ।।

इति श्रीसारदीपिकायां गतिचिन्तनाधिकार एकविंशः ।।

---

(सा.स्वा.) न पुरुषान्तर मुखेन । न वा सोपाधिकतया - किन्तु स्वत एवेति गम्यते ।। ४६ ।।

इति श्रीमदुत्तरसारास्वादिन्यां गतिचिन्तनाधिकार एकविंशः ।।

---

(सा.प्र.) तथेति दृष्टान्तो ध्वन्यते ।। ४७ ।।

इति श्रीसारप्रकाशिकायां गतिनिन्तनाधिकार एकविंशः ।।

---

(सा.वि.) पुष्पफलाद्याश्रयो वृक्षः स्वच्छायया सुखयति तद्वदिति भावः ।। ४६ ।।

इति श्रीसरविवरिण्यां गतिचिन्तनाधिकार एकविंशः ।।

---

(सा.सं.) हरिचन्दन इति कल्पवृक्षः - सुखयति, आनन्दनिर्भरान् करोति ।। ४६ ।।

इति श्रीसारप्रकाशिकासङ्ग्रहे गतिचिन्तनाधिकार एकविंशः ।।

|| श्रियै नमः ||

|| श्रीमते रामानुजाय नमः ||

|| श्रीमते निगमान्तमहादेशिकाय नमः ||

# || परिपूर्णब्रह्मानुभवाधिकारः ||

मू -वितमसि -

सा. दी -- अर्चिरादिकया गत्या प्राप्तस्यास्य परम्पदम् । परिपूर्णपरब्रह्मानुभवोऽयं निरूप्यते ।। -

सा. स्वा - இப்படி पूर्वाधिकारத்தில் देशविशेषविशिष्टब्रह्मानुभवरूपपुरुषार्थम् अर्चिरादिगति प्राप्यமென்றும் சொன்னது கூடுமோ? 'कार्यं बादरिरस्य गत्युपपत्तेः विशेषितत्वाच्च सामीयात्तु तद्व्यपदेशः कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् स्मृतेश्च' इत्यादिसूत्रங்களாலே कार्यभूतहिरण्यगर्भरूपब्रह्माவுக்கே अर्चिरादिगतिप्राप्यत्वं சொல்லுகையாலே परब्रह्मத்துக்கு अर्चिरादिगतिप्राप्यत्वं சொல்லக் கூடுமோ? पूर्वोत्तरसूत्रங்கள் पूर्वपक्षसूत्रங்களாகையாலே उत्तरेषां सिद्धान्तसूत्रत्वौचित्येन 'परं जैमिनिर्मुख्यत्वात्' इत्यादि सिद्धान्तसूत्रेण निर्गुणं ब्रह्म निराकृत्य प्रकृत्युत्तीर्ण शुद्धसत्त्वमयदेशविशेषवर्ति परब्रह्माभिधानस्य भगवत एवार्चिरादिगतिप्राप्यत्वाभिधानेन उक्तार्थविरोधமில்லையென்னிலானாலும் ब्रह्मानुभवமே पुरुषार्थமாகையாலே அது उपासनदशैயிலே தானே सिद्धिக்கையாலே तदर्थं देशविशेषगतिव्यर्थैயன்றோ? उपासनदशैயில் இங்கு வரும் अनुभवं परिपूर्णब्रह्मगोचरமல்லாமையாலே परिपूर्णब्रह्मानुभवமே पुरुषार्थ மாகையாலது कृत्स्नाविद्यानिवृत्तिसाध्यமாகையால் कृत्स्नविद्यानिवृत्तिगतिशास्त्रबलத்தாலே देशविशेषத்திலே சென்றால் सिद्धिக்கையாலே तदर्थं गतियुपपन्नैயென்னிலானாலும் परिपूर्णब्रह्मानुभवமாவது विभुவாயிருக்கிற विशेष्य ब्रह्मस्वरूप मात्रानुभवமோ? विभूतिगुणविशिष्ट ब्रह्मानुभवமோ? आद्यத்தில் निर्विशेष ब्रह्मानुभवं प्रसङ्गिக்கும். अन्त्यपक्षத்தில் तृणलोष्टाद्यनुभवं போலே भोग्यतागोचरமல்லாத अनुभवமாகில் पुरुषार्थरूपत्वं கூடாது- भोग्यतया सर्वविशिष्टब्रह्मानुभव மென்னில் ब्रह्मस्वरूपத்துக்கு भोग्यतैயில் प्रमाणமுண்டோ? आनन्दादिश्रुतिயினாலே ब्रह्मस्वरूपं भोग्यமானாலும் तदनुबन्धिगुणविभूत्यादिகளுக்கு भोग्यतैயெங்ஙனே? ब्रह्मस्वरूपगुणविग्रहादिகள் भोग्यங்களானாலும் लीलाविभूति -

सा. प्र - एवमर्चिरादिमार्गेण गतेन प्राप्यं सर्वविधकैङ्कर्यपर्यन्तं परिपूर्णानुभवं -

सा. वि - एवमर्चिरादिमार्गेण गतस्य प्राप्यं सर्वविधकैङ्कर्यपर्यन्तपरिपूर्णानुभवं -

सा. सं - अथार्चिरादिना परमपदं प्राप्तस्य परिपूर्णब्रह्मानुभवप्रकारं वक्तुमधिकारान्तर -

मू - पदे लक्ष्मीकान्तं विचित्रविभूतिकं -

सा.दी-இப்படி परमपदप्राप्त्यनन्तरं இவன் பெறும் श्रेयः परम्परैயைக்காட்டுகிறார்.वितमसीति - वितमसि पदे, 'तमसः परस्तात्' என்று சொன்ன अप्राकृतपरमपदे नानाविधाश्चर्यैश्वर्य -

सा. स्वा - யில் चिरकालं प्रतिकूलतयानुभूतपदार्थங்கள் भोग्यங்களாகக் கூடுமோ? भोग्यतैயே யிதுகளுக்கு स्वभावமாகில் बद्धदशैயிலும் भोग्यங்களாக प्रसङ्गिயாதோ? ब्रह्मानुभवமே पुरुषार्थமாகில் 'निरञ्जनः परमं साम्यमुपैति' என்று परमसाम्यं पुरुषार्थ மென்கிறது विरोधिயாதோ? परमसाम्यத்தில் अनुभवमन्तर्गतமாகையால் विरोधமில்லை என்னில் ஆனாலும் स्थानविशेषத்தையும், ब्रह्मस्वरूपத்தையும், जीवस्वरूपத்தையும் परमप्राप्यतार्थकपरमपदशब्दத்தாலே परमपदமென்று சொல்லுகிறது विरोधिயாதோ? ब्रह्मानुभवोपयुक्तமாகையாலே இதுகளையும் परमपदமென்கிற தென்னிலானாலும் कैङ्कर्यं पुरुषार्थமென்று 'तमेव शरणं प्राप्तस्तत्कैङ्कर्यचिकीर्षया - आविस्स्युर्मम सहज कैङ्कर्यविधयः' इत्यादिகளிலே சொல்லுகிறது विरोधिயாதோ? शेषतैकस्वरूपனுக்கு कैङ्कर्यமே पुरुषार्थமென்னில் ब्रह्मानुभवं पुरुषार्थமென்கிறது विरोधिயாதோ? मुक्तिदशैயிலும் शेषत्वமுண்டாகில் 'स स्वराड् भवति' என்று स्वातन्त्र्यं சொல்லுகிறது पुनरावृत्तिயும் प्रसङ्गिயாதோ? किञ्च सायुज्यशब्दार्थமான ब्रह्मैकतापत्तिயே मोक्षமென்று சொல்லுகையாலே ब्रह्मानुभवं पुरुषार्थமென்கிறதுதான் கூடுமோ? सायुज्यशब्दத்துக்கு परमसाम्यத்திலே तात्पर्यமென்னில் 'ब्रह्मैव भवति' इत्यादि श्रुतिகள் विरोधिயாதோ? परमसाम्यं சொல்லில் जगत्कारणत्वादिகளுமிவனுக்கு प्रसङ्गिயாதோ? इत्यादिशङ्कैகளை இந்த अधिकारத்தாலே परिहरिக்கக்கோலி अधिकारार्थத்தை श्लोकத்தாலே सङ्ग्रहिக்கிறார். वितमसीति - अस्मिन् श्लोके 'कार्यं बादरिरस्य गत्युपपत्तेः' इत्यधिकरणमारभ्य अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इत्यधिकरणपर्यन्ताधिकरणार्थाः क्रमेणोच्यन्ते -वितमसि पदे 'आदित्यवर्णं तमसः परस्तात्' इत्युक्ततमश्शब्द वाच्यप्रकृतिमण्डलोत्तीर्णे स्थाने वर्तमानं - विचित्रविभूतिकं 'सहस्रशीर्षा पुरुष' इत्यारभ्य विविधविचित्रसंस्थान -

सा. प्र - दर्शयन् अधिकारार्थं सङ्गृह्याह - वितमसि पद इत्यादिना - 'तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्य निद्राभिस्तन्निबध्नाति भारत' इत्यादिष्वज्ञानहेतुतयावगत तमोगुणशून्ये पदे - आतिवाहिकैर्नानाविधैश्वर्यविशिष्टं श्रियःपतिं प्राप्तः -

सा. वि - दर्शयन् श्लोकेन सङ्गृह्णाति - वितमसि पद इति - वितमसि, तमोगुणरहिते शुद्धसत्वमये - पदे, परमपदे - सचिवगमितः, आतिवाहिकैः क्रमेण सत्कारपूर्वकं प्रापितस्सन् विचित्र -

सा. सं - मवसरसङ्गत्या आरभमाणः प्रतिपाद्यं सङ्गृह्णाति - वितमसीति-अयं सचिवैरातिवाहिकैः परमपदं प्रापितस्सन् । 'तमसस्तु पारे' इत्युक्ते तमोविवर्जितस्थाने - विचित्रविभूतिकम् -

मू-सचिवगमितस्सम्पद्याविर्भवत्सहजाकृतिः। स्फुटतदपृथक्सिद्धिस्सिध्यद्गुणाष्टकतत्फलो भजति-

सा. दी - विशिष्टं श्रियः पतिम् । सचिवैरातिवाहिकैः प्रापितोऽमात्मा - तं परंब्रह्मभूतं सम्पद्य, प्राप्य। आविर्भवन्तः सहजा आकृतयः आकाराः सार्वज्ञादयो यस्य सः । स्फुटा प्रत्यक्षिता स्वस्य परमात्मनोऽपृथक्सिद्धिर्येन सः । सिद् ध्यद्गुणाष्टकम्, अपहतपाप्मत्वं, विजरत्वम्, विमृत्युत्वम्, विशोकत्वम्, विजिघत्सत्वम्, अपिपासत्वम्, सत्यकामत्वं, सत्यसङ्क ल्पत्वम् । तत्फलं तस्य गुणाष्टकस्यफलं-

सा. स्वा - लीलाभोगहेतुविभूतिविशिष्टतया प्रतिपन्नम् । लक्ष्मीकान्तम्, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्युत्तरानुवाके लक्ष्मीनायकत्वेन प्रसिद्धम् - कान्तशब्देन लक्ष्म्या अपि स्वयंवरणयोग्यतया कैमुत्येनेतरान् प्रतिभोग्यतमत्वं व्यज्यते - अनेन लीलाविभूत्यन्तर्गतकार्यब्रह्मव्यावृत्तिः - निर्गुणब्रह्मणस्तुच्छता च द्योत्यते - सचिवगमितः । तस्य देवा असन्वशे । सर्वेऽस्मै देवा बलिमावहन्ति 'इत्यादिभिरुक्त सचिवरूपार्चिरादिदेवैर्गमितः, प्रापितः - मुक्त इति विशेष्य पद मध्याहार्यम् । 'अनेन कार्यं बादरिरस्य गत्युपपत्तेः' इत्यधिकरणार्थ उक्तः - संपद्य, 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमः पुरुषः' इति वाक्योक्तरीत्या पुरुषोत्तमं श्रियः पतिं परंबह्म सम्पद्य प्राप्य । निश्शेषाविद्यानिवर्तनेन आविर्भवत्सहजाकृतिः, आविर्भवन्ति सहजा न त्वागन्तुका आकृतिर्यस्य सः । अनेन 'संपद्याविर्भाविस्स्वेनशब्दात्' इत्यधिकरणसिद्धस्वस्वरूपाविर्भाव उक्तः -स्फुटतदपृथक्सिद्धिः -स्फुटा, प्रत्यक्षिता - तेन, ब्रह्मणा । अपृथक्सिद्धिः, पृथग्व्यपदेशानर्हसंश्लेषविश्लेषो यस्य सः । अनेनाविभागेन दृष्टत्वादित्यधिकरणार्थ उक्तः - सिद् ध्यद्गुणाष्टकतत्फलः, सिद् ध्यन्ति गुणाष्टकानि प्रकरणे ब्रह्मसंबन्धितया श्रुतानि अपहतपाप्मत्वादीनि तत्फलानि च 'स एकधा भवति । त्रिधा भवति - सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति - जक्षन्क्रीडन्रममाण' इत्यादिभिरुक्ताः सङ्कल्पादेव मातापित्रादि-सृष्टिसशरीरत्वादिरूपफलपर्वविशेषो यस्य सः । अत्र गुणाष्टकेत्यनेन --

सा. प्र - प्रपन्न आविर्भूत स्वाभाविकाकारतयापहतपाप्मत्वादिगुणाष्टकं स्वस्य भगवदपृथक्सिद्धविशेषणत्वं च साक्षात्कृत्य तदुभयसाक्षात्कारफलं भगवत्कैङ्कर्यमपि कृत्वा तेन प्रियमाणस्य -

सा. वि - विभूतिकम् आश्चर्यावहलीलाभोगविभूतियुक्तम् - लक्ष्मीकान्तं संपद्य, प्राप्य - 'सम्पद्याविर्भावस्स्वेन शब्दात्' इत्यधिकरणोक्तरीत्या आविर्भवत्सहजाकृतिः, आविर्भूत देवादिशरीरव्यावृत्तस्यासाधारणज्ञानानन्दाकारः, स्फुटतदपृथक्सिद्धिः प्रत्यक्षभूत परमात्मा पृथग्भावः प्रत्यक्षितशरीरशरीरिभाव इत्यर्थः - सिद् ध्यद्गुणाष्टकतत्फलः, सिध्यदभिव्यक्तं गुणाष्टकं 'अपहतपाप्माविजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प' इति प्रजापतिवाक्योक्तं गुणाष्टकं -

सा. सं - अत्यद्भुतैश्वर्ययुक्तम् । श्रियाविशिष्टम् । संपद्य, समीपतः प्राप्य । आविर्भवत्सहजाकृतिः, असङ्कुचितविकासवत्स्वरूपानुबन्धि धर्मभूतज्ञानरूपाकारः - स्फुटतदपृथक्सिद्धिः, तेन परमात्मना सह प्रत्यक्षितशरीरात्मभावसंबन्धः । सिध्यदिति, प्रादुर्भूतापहतपाप्मत्वादि --

मू - परमं साम्यं भोगे निवृत्तिकथोज्झितम् ।। ४७ ।।

सा.दी - भगवत्सर्वविधकैङ्कर्यं यस्य सः । भोगे, ''सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा त्रिपश्चिता'' इत्युक्ते परिपूर्णब्रह्मानुभवरूपे । निवृत्तिकथोज्झितम्, पुनरावृत्ति प्रसङ्गरहितं ब्रह्मणा परमं साम्यं प्राप्नोति । ''तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'' इत्युक्तेः என்கை ।। ४७ ।।

இனி परिपूर्णब्रह्मानुभव மிருக்கும்படியையருளிச் செய்யக் கோலி முந்த तदा-

सा. स्वा - ब्राह्मेण जैमिनिरुपन्यासादिभ्यः - चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः - एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण 'इत्यधिकरणार्थः उक्तः -तत् फलेत्यनेन' सङ्कल्पादेव तच्छ्रतेः 'इत्यधिकरणार्थः' अभावं बादरिराह ह्येवं भावं जैमिनिर्विकल्पामननात् द्वादशाहवदुभयविधं बादरायणाऽेत इत्यधिकरणार्थ उक्तः । निवृत्तिकथोज्झितं, पुनश्च संसारापत्ति गन्धरहितम् । भोगे, ब्रह्मणा परमं साम्यं भजति । न तु जगत्कारणत्वादिना - अत्र भोगे परमं साम्यमित्यनेन जगद्वयापारवर्जग प्रकरणादसन्निहितत्वाच्च भोगमात्रसाम्यलिङ्गाच्च इत्यधिकरणार्थ उक्तः - निवृत्तिकथोज्झितमित्यनेन अनावृत्तिश्शब्दादनावृत्तिशब्दात् इत्यधिकरणार्थश्चानुसंहितः இவ்வளவால் कार्यब्रह्मादिलक्षण परब्रह्मशब्दाभिधेयाप्राकृतदेशविशेषवर्ति भगवत एवार्चिरादिगतिप्राप्यत्व மென்றும் पितृलोकसृष्ट्यादि व्यापारमाविर्भूतस्वरूपस्य । ब्रह्मानुभवपरिवाहरूपकैङ्कर्य மென்றும், परमसाम्यं भोगमात्रத்திலே யென்றும், तत एव जगत्कारणत्वादिகளில்லையென்றும் एवंभूतभोगविशेषं प्राप्तனுக்கு स्वेच्छैயாலே தான் परेच्छैயாலே தான் पुनरावृत्तिயில்லை என்றும் சொல்லப்பட்டது. ।। ४७ ।।

இனி पूर्वोक्तशङ्कैகளைவிட்டு विस्तरेण परिहरिக்கக் கோலி परिपूर्णब्रह्मानुभवविषयपूर्वोक्तशङ्काभिप्राय த்தாலே शङ्किத்து उत्तरமருளிச் செய்கிறார் -

सा. प्र - भगवतोऽनुभवितृत्वरूपं भगवदत्यन्तसाम्यं प्राप्नोतीत्यर्थः ।। ४७ ।।

एवं श्लोके सङ्गृहीतं कैङ्कर्यपर्यन्तपरिपूर्णानुभवरूपफलं विस्तरेण प्रश्नपूर्वकं --

सा. वि - तत्फलं कैङ्कर्यपर्यन्तपरिपूर्णानुभवो यस्य स तथोक्तस्सन् -निवृत्तिकथोज्झितं, निवृत्तिशङ्कारहितं - भोगे ब्रह्मयादात्यम्यानुभव रूपभोगमात्रे परमं साम्यं - 'सोऽश्नूते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इत्युक्तरूपमुपैति ।। ४७ ।।

सा. सं - गुणाष्टकतत्कार्यसर्वविधकैङ्कर्यः -भोगे, विभूतिद्वयनिखिलकल्याणगुणादिविशिष्टपरब्रह्मानुभवे - परमं साम्यं 'सोऽश्नुते सर्वान्कामान्सह-निरञ्जनः परमं साम्यम्' इत्यादि श्रुत्युक्तनिवृत्तिप्रसङ्गवर्जितं निरतिशयं साम्यं भजति ।। ४७ ।।

इत्थं सङ्गृहीतं विपरीतुं प्रथमं परिपूर्णब्रह्मानुभवशब्दार्थमाः ह --

मू - இக்गतिविशेषத்தாலே சென்றவனுடைய परिपूर्णानुभवं இருக்கும்படி எங்ஙனேயென்னில் 'அனைத்துலகுமுடைய அரவிந்தலோசனனைத்தினைத்தனையும் விடாள்' इत्यादिகளிற்படியே सर्वदेशसर्वकालसर्वावस्थैகளிலும் सर्वेश्वरனை अनन्तங்களான विग्रहगुणविभूतिचेष्टितங்களிலொன்றும் குறையாமல் निरतिशयभोग्यமாக विषयीकरित्துக் கொண்டிருக்கும். -

सा. दी - काङ्क्षैயை उद्गाविக்கிறார். இக்गतिविशेषத்தால் इत्यादिயால்- இப்परिपूर्णानुभवं सर्वविधकैङ्कर्यமாயிருக்குமென்கிறார். அனைத்துலகும் इत्यादिயால். அனைத்துலகும், सर्वलोकम् । தினைத்தனையும், देशकालादिகளிலிவனை तिलांशமும் விடாள். தினை, एकदेशம். गद्यத்தில் 'सर्वदेशसर्वकाल' इत्यादि சொல்லிற்றிறே. -

सा. स्वा - இக்गतिविशेषத்தாலே इत्यादिना । அனைத்துலகும் इति । அனைத்துலகுமுடைய, कृत्स्नलोकத்தையுடைய विभूतिद्वय विशिष्टனான अरविन्दलोचनனை. தினைத்தனையும். ईषदंशமும் एकदेशமும் விடாள்- सर्वेति - देशविशेषे वा कालविशेषे वा अवस्थाविशेषे वा संसारदशैயில் போலே सङ्कुचितविषयकமன்றென்று கருத்து- निरतिशयेति -तृणलोष्टाद्यनुभवं போலேயன்றிக்கே निरतिशयभोग्यत्वप्रकार மென்றபடி- இக்गतिविशेषத்தாலே देशविशेषं प्राप्तனுக்கு ईश्वरனுண்டாகிலன்றோ தனக்கு ईश्वरानुभवं पुरुषार्थமாவது? 'निरञ्जनः परमं साम्यमुपैति' என்று ईश्वरனோடு परमसाम्यं சொல்லுகையாலே தனக்கும் ईश्वरत्वமுண்டாகையால் स्वसमानेश्वरान्तरानुभवं पुरुषार्थமாகமாட்டுமோ? -

सा.प्र-दर्शयति - இக்गतिविशेषेत्यादिना - சென்றவனுடைய, गतस्य இருக்கும்படி யெங்ஙனேயென்னில், स्वरूपस्थितिः कीदृशीति चेदित्यर्थः एवमनुयोगे उत्तरं वक्ष्यन् कैङ्कर्यपर्यन्तपरिपूर्णानुभवाख्यफलस्य सांप्रदायिकत्वमाह - அனைத்துலகும் इत्यादिना - उभयविभूतिविशिष्टारविन्दलोचने अनुभाव्ये अल्पमपि न परित्यजन्तीत्येवमादिषूक्तप्रकारेणेत्यर्थः-

सा. वि - एवं सङ्गृहीतमर्थं प्रश्नपूर्वकं विस्तरेण दर्शयति - இக்गतिविशेषेत्यादिना - சென்றவனுடைய, गतस्य - அனைத்துலகுமுடைய अरविन्दलोचनனைத் தினைத்தனையும் விடாள். அனைத் துலகுமுடைய, सर्वलोकविशिष्टम् - अरविन्दलोचनனை, अरविन्दलोचनं - தினைத்தனையும், तिलांशम् एकदेशमपि - விடாள், न त्यजति - सर्वविधकैङ्कर्यத்தையும் इति समुच्चयेनानुभवोऽपि सङ्गृहीतः - பலகாலம், विस्तरेण । 'तथाविधभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचितशेषशेषतैकरसरूपनित्यकिङ्करो भवानि' इत्यादिना भाष्यकारा उक्तवन्त इत्यर्थः अत्र सर्वदेशसर्वकालसर्वावस्थैகளிலும் सर्वेश्वरனுடைய सर्वविधकैङ्कर्यத்தையும் गद्यத்திலே பலகாலமருளிச் செய்தார் इति सांप्रदायिकः पाठः । केषुचित्कोशेषु सर्वावस्थैகளிலும் सर्वेश्वरனை अनन्तங்களான विग्रहगुणविभूतिचेष्टितங்களிலொன்றும் குறையாமை निरतिशयभोग्यமாக विषयीकरित्துக் கொண்டு நிற்கும் इत्यादि । முன்பு சொன்ன कैङ्कर्यं இப்படி परिपूर्णानुभवத்தாலே பிறந்த प्रीतिविशेषத்துக்குப் परिवाहமாமென்னுமிடத்தை गद्यத்திலே इत्यन्तं परिपूर्णानुभवप्रकारविवरणरूपो ग्रन्थः प्रक्षिप्तो दृश्यते - सोऽपि व्याख्यायते -குறையாமை,

सा. सं - இக்गतिविशेषத்தால் इत्यादिना । அனைத்துலகும் इत्यादि । அனைத்து इत्यादिनोपात्त गाधाविवरणं सर्व -

मू - இவ்அनुभवम् இவனுக்கும் ईश्वरனுக்கும் अत्यन्ततुल्यமாகையாலே परमसाम्यं சொல்லுகிறது 'உணர்முழுநலம்' என்றும் 'निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता' என்றும் சொல்லுகிறபடியே भगवत्स्वरूपं भोग्यமாக प्राप्तम्- மற்றுள்ளவை भोग्यமாம்படியெங்ஙனேயென்னில் राजमहिषिக்கு राजा भोग्यனானால் -

---

सा. स्वा - परमसाम्यं சொல்லுகிறது पुरुषार्थप्रकरणமாகையாலே भोगांशத்திலே ईश्वरனோடு परमसाम्यपरமாகையால் विरोधமில்லையென்னில் அப்போது यत्किञ्चिद्धर्मसाम्यத்தை परमसाम्यமென்று சொல்லப்போமோ? என்னவருளிச் செய்கிறார் - இவ் अनुभवमिति இவ் अनुभवम्, निरतिशयभोग्यत्वप्रकारविग्रहगुणविभूति सकलाकारविशिष्टेश्वरानुभवरूपभोगम् - अत्यन्तेति, अत्यन्तसाम्यத்தை परमसाम्यமென்று சொல்லக்குறையில்லையென்று கருத்து. ईश्वरனும் विशिष्टस्वस्वरूपத்தை निरतिशयभोग्यतया अनुभविக்கையாலே இங்கு இருவருக்குமிது अत्यन्ततुल्यமென்றபடி- இப்படி विशिष्टब्रह्मத்தை भोग्यतयानुभविக்கக் கூடுமோ? मुक्तனுக்கு स्वात्मा अनुकूलतया स्वप्रकाशனாகையாலே भोग्यனானாலும் ब्रह्मस्वरूपं भोग्यமென்கைக்கு प्रमाणமுண்டோ? உண்டானாலும் तदनुबन्धिविग्रहविभूत्यादिகளுக்கு भोग्यतै எங்ஙனேயென்று शङ्कित्तु उत्तर மருளிச் செய்கிறார். உணர்முழுநலம் इत्यादिनाமுழு என்கிற काकाक्षिन्यायத்தாலே उभयत्रान्वयिக்கிறது. முழுவுணர்வு, कृत्स्नांशமும் ज्ञानस्वरूपம். முழுநலம், कात्स्न्येनानन्दस्वरूपं - निरस्तेति श्रीविष्णुपुराणवचनम् - निरस्तातिशयाः उत्कृष्टावधिरहिताः - अन्येषामप्याह्लादजनकतया सुखभावैकलक्षणा - एकान्ता, प्रयोजनान्तरगन्धरहिता - आत्यन्तिकी, सर्वकालानुवृत्ता -भगवत्प्राप्तिः, संसारव्याधिभेषजमित्यर्थः - राजाவினுடைய भोग्यத்துக்குறுப் பானவையும் कदाचिद्राजाவுக்கு अनभिमत -

---

सा.वि - न्युनताराहित्येन - இவ்अनुभवमिति - बिग्रहगुणविभूति चेष्टितानां मध्ये कस्यचिदंशस्यापरित्यागेन विषयीकरणविशिष्टभगवदनुभवः परमसाम्यमिति सार्वज्ञस्यो-ऽभयोस्तुल्यत्वात्तदनुभवजनितानन्दस्य चोभयोस्तुल्यत्वादिदमेवहि भोगसाम्यमिति विवक्षितम् - इयान् परं विशेषः, भगवतस्सर्वमिदं मदीयमित्यानन्दः दासानान्तु मत्स्वामिनस्स्वमिति तादृशानन्देन किञ्चिदपि तारतम्यमिति हृदयम् - निरस्तातिशयेति निरस्तातिशयेत्यर्थः - भगवत्स्वरूपमिति । -

---

सा. सं - देशेत्याति - तर्हि मुक्तस्य ब्रह्मणा परमं साम्यं कस्मिन्नर्थे श्रुतिरभिदधातीत्यत्राह - இவ்अनुभवमिति - निरतिशयभोग्यं ब्रह्मस्वरूपमित्यत्र मानं உணர் इति - आह्लादः, सन्तोषः । भगवत्प्राप्तिः, दिव्यात्मस्वरूपानुभवरूपा । सुखभावः, सुखत्वम् । तदेकनिरूप्य विषयिणी सदानुभवेऽपि स्वविषयानुभवाभिलाषाया एव उत्तरोत्तरमभिवर्धनकरीति सुखभावैकलक्षणेत्युक्तिः - अत एव निरस्तातिशयाह्लादा, स्वजन्याह्लादातिरिक्तातिशयिताह्लादशून्या । शब्दादिविषयानुभवरूपव्याधिनिवर्तिका - एकान्ता, गुणग्रहाद्यनुभवरागस्याप्यनुदयकरी - आत्यन्तिकी, यावदात्मभाविनी । इतिमता । स्वरूप मनुभवितुः भगवतो नित्यानां मुक्तानां योगिनां चात्यन्ताभिमतेत्यर्थः -

मू - அவனுக்கு अभिमतங்களாய் அவனுடைய भोगத்துக்குறுப்பான भोगोपकरणभोगस्थानादिகளும் இவளுக்கும் अनुकूलமாயிருக்குமாப்போலே இங்கும் भगवत्स्वरूपानुबन्धिகளானவையெல்லாம் भोग्यமாகக் குறையில்லை. இப்படி सर्वप्रकारविशिष्टனாய்க் கொண்டு सर्वेश्वरன் भोग्यனென்னுமிடம் श्रुतिस्मृत्यादिகளிலே प्रसिद्धम् । இவ்अर्थத்தை भूमाधिकरणத்திலே साधिத்தருளினார். -

सा. स्वा - மாகில் अनुकूलமாகமாட்டாதே? என்னவருளிச் செய்கிறார். அவனுக்கு अभिमतங்களாய் इति - यद्वा, भोगोपकरणत्वादेव अभिमतங்களாயென்று हेतुहेतुमद्भावेन अन्वयिக்கவுமாம். இப்படி लोकदृष्टिप्रक्रियैயை अतीन्द्रियभगवद्विग्रहविभूतिगुणादिகளிலே सञ्चरिப்பிக்கப்போமோ? அப்படியாகில் राजभोग्यवस्तु विशेषं व्याध्यादिदशैயிலே राजपत्नीக்கு प्रतिकूलமாயும் காண்கையாலே वैपरीत्यं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். இப்படி इति - सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता - रसँह्येवायं लब्ध्वानन्दी भवति - न पश्यो मृत्युं पश्यति - नरोगन्नोत दुःखताम् - सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश 'इत्यादि श्रुतिस्मृतिसिद्धமென்றபடி. இப்படி सर्वप्रकारविशिष्ट सर्वेश्वरன் भोग्यனாகில் सूत्रभाष्यादिகளிலே சொல்ல வேண்டாவோ? என்னவருளிச் செய்கிறார். இவ்अर्थத்தை इति -இப்படி सर्वप्रकार विशिष्टब्रह्मानुभवமே -

सा.वि - यथा 'पुराभूदस्माकं प्रथममविभिन्ना तनुरिति' न्यायेन तादृशावस्थायां प्रियायाः प्रियस्वरूपं भोग्यं तथा भगवत्स्वरूपं भोग्यमित्यर्थः । भोग्यமாம்படி எங்ஙனேயென்னில் इतिभोगமாக विषयीकरिத்துக் கொண்டு इत्युपक्षिप्तभोग्यतायामयमाक्षेपः - भोग्यமாகக் குறையில்லை इति - एतेन तदनुभवस्यानन्दवत्वं स्थापितम् - भूमाधिकरणத்தில் इति - भूमा संप्रसादादध्युपदेशादित्यधिकरणे सत्यशब्दामिधेयस्य ब्रह्मणस्सुखत्वेन विजिज्ञासितव्यमित्युपदिश्य निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवति - तस्यैव ब्रह्मणस्सुखरूपस्य निरतिशयविपुलता ज्ञातव्येति भूमात्वेव विजिज्ञासितव्य इत्युपदिश्य निरतिशय विपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते - 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति भूमेति' अयमर्थः - अनवधिकातिशयसुखरूपब्रह्मण्यनुभूयमाने ततोऽन्यत्किमपि न पश्यति - अयमनुभविता ब्रह्मस्वरूप तद्विभूत्यन्तर्गतत्वात्कृत्स्नस्य वस्तुजातस्य - अत ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवन् तद्‌व्यतिरिक्तस्य -

सा. सं - श्रुतिस्मृतीत्यादि - 'सर्वं ह पश्यः पश्यति । सर्वमाप्नोति सर्वशः । स वा एष एवं पश्यन्नेवं मन्वानः एवं बिजानन् - आत्मरतिरात्मक्रीड आत्ममिथुनमात्रानन्दस्स स्वराड् भवति - तस्य सेर्वेषु लोकेषु कामचारो भवति' इत्यादि श्रुतयोऽत्राभिप्रेताः - उक्तार्थस्य न्यायानुगृहीतश्रुतिसिद्धत्वेन भाष्यकृदभिमतत्वमाह - இவ்अर्थத்தை इति - 'यत्र नान्यत्पश्यति नान्यच्छ्रुणोति नान्यद्विजानाति' इति श्रुतिविवरणरूपेऽयमर्थ इत्यादिके जगन्निरतिशय प्रीतये भवत्येवेत्यन्तभूमाधिकरणभाष्ये इत्यर्थः - इत्थं विभूत्यादीनामपि भोग्यत्वेन परमपदशब्दः --

मू - இவற்றில் निरतिशयानुकूल्यத்தாலே परमप्राप्यமாகையாலே भगवत्स्वरूपத்தை परमपदं என்கிறது– இப் भगवत्स्वरूपத்தினுடைய परिपूर्णानुभवं பெறுவது भोग्यतमமாய் सर्वोत्तरமாய் இருப்பதொரு स्थानविशेषத்திலே சென்றாலாகையாலே அந்த स्थानविशेषத்தையும் परमपदं என்கிறது. இவ் अनुभवத்துக்கு आश्रयமாய்க்கொண்டு अनुभाव्यமாகையாலே भगवद्विभूतिभूत மாய் ज्ञानानन्दलक्षणமானதன் स्वरूपத்தையும் परमपदंஎன்கிறது. -

सा. स्वा - परमप्राप्यமானால் 'विष्णवाख्यं परमं पदं - विष्णोः पदे परमे मध्व उत्सः - तद्विष्णोः परमं पदे सदा पश्यन्ति सूरयः-यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इत्यादिகளிலே परमप्राप्यवाचिயான परमपदशब्दத்தாலே तुल्यமாக भगवत्स्वरूपத்தையும் स्थानविशेषத்தையும், जीवस्वरूपத்தையும் परमपदமென்று சொல்லக்கூடுமோ? என்னவருளிச் செய்கிறார்- निरतिशयानुकूल्यத்தாலே इत्यादिना - परमप्राप्यமாகையாலே स्वरूपं परमपदशब्दमुख्यार्थम् - स्थानविशेषं तदुपयुक्त மாகையாலும் सर्वोत्तरस्थानமாகையாலும் இவ்விशेषद्योतनार्थमुपचारத்தாலே परमपदமென்று சொல்லுகிறது- जीवस्वरूपं परमप्राप्य भगवदनुभवाश्रयतया अचिद्व्यावृत्तज्ञानानन्दलक्षणविभूतितया च विशेषद्योतनार्थमुपचारத்தாலே परमपदமென்று சொல்லப்படுமென்று கருத்து. இப்படி परमपदशब्दमौपचारिकமாகில் प्राप्यतैயிருக்கையாலே प्रकृति

सा. वि - वस्तुनो भावादेव किमप्यन्यन्न पश्यति - अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति - तदेव हि सुखं यदनुभूयमानं पुरुषानुकूलं भवति - ननु चेदमेव जगद्ब्रह्मणोऽन्यतयानुभूयमानं दुःखरूपं परिमितसुखरूपं च भवत्कथमिव ब्रह्मविभूतित्वेन तदात्मकतयानुभूयमानं सुखरूपं भवेदित्युच्यते - कर्म वश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति - अतो ब्रह्मणोऽन्यतया परिमितसुख रूपत्वेन च जगदनुभवस्य कर्मनिमित्तत्वात्कर्मरूपा विद्यावासना विमुक्तस्य तदेव जगद्विभूति विशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति यथा- 'पित्तोपहतेन पीयमानं पय' इत्यादिना भाष्यकारास्साधितवन्त इति भावः - सर्वस्यापि प्राप्यत्वाविशेषाद्वैकुण्ठस्यैव कथं परमपदत्वमित्यत्र तत एव प्रवृत्तिनिमित्तं दर्शयितुमाह - இவற்றில் इति । यद्वा, प्रसङ्गात्परमपदप्रवृत्तिविषयभूतं त्रिविधमित्याह - இவற்றில் इति - पद्यते गम्यत इति पदं प्राप्यं परिपूर्णानुभव प्राप्तिः -ஆகையாலே, एष्यत्तया -அதுதான் स्थानविशेषத்திலே சென்றால், स्वस्मिन् स्थानविशेषे प्रविष्टे सति - अनुभवத்துக்கு आश्रयமாய்க் கொண்டு अनुभाव्यமாகையாலே, अनुभवाश्रयतया स्वरूपस्यानुभाव्यत्वादित्यर्थः -

सा. सं - किं विषयः? विशेषविषयश्चेत्स किं निमित्तक इत्यत्राह । இவற்றில் इत्यादिना - दिव्यात्मस्वरूपविग्रहगुणविभूत्यादिषु मध्य इत्यर्थः - निरतिशयानुकूलयं गुणविग्रहयोरप्यविशिष्टमिति स्वरूपத்தை इत्युक्त्या तौ लक्षितौ - स्थानविशेषस्वरूपयोः परमपदशब्दबोध्यत्वेन बद्धदशायामपि -

मू - இவை மூன்றுக்கும் மற்றுமுள்ளவற்றுக்கும் प्राप्यत्वमात्रमविशिष्टम् - இப்படி भगवत्स्वरूपगुणविग्रहादिகளும் शुद्धसत्त्वाश्रयமான नित्यविभूतियும் स्वस्वरूपமும் भोग्यமானாலும் प्रतिकूलமாக प्रत्यक्षादिप्रमाणसिद्धமாய் मुमुक्षुவுக்கு त्याज्यமாக शास्त्रங்களிற் சொல்லப்பட்ட लीलाविभूतिயில் पदार्थங்கள் मुक्तனுக்கு भोग्यமாகக் கூடுமோவென்னில் அதிலும் குறையில்லை- पित्तोपहतனுக்கு प्रतिकूलமான பால் பித்தம் शमिத்தால் अनुकूलமாமாப் போலவும், सार्वभौमனான पिताவினுடைய சிறைக்கூடம் சிறைகிடக்கிற राजकुमारனுக்கு அப்போது प्रतिकूलமாய்

सा. स्वा - कालादिகளிலும் परमपदशब्दप्रयोगं प्रसङ्गियாதோ? என்னவருளிச் செய்கிறார் - இவை மூன்றுக்கும் इति - प्राप्यत्वमात्रमविशिष्टम् । विशेषविशिष्टं न भवति । இவைமூன்றுக்கும் इतरापेक्षया प्राप्यतैயிலே पूर्वोक्तविशेषமிருக்கையாலே அங்கே औपचारिकप्रयोगं विशेष द्योतनार्थतया सार्थकமானாலும் इतरங்களிலே प्रयोजनமில்லாமையாலே औपचारिकप्रयोगं கூடாதென்று கருத்து. இப்படி सर्वप्रकारविशिष्टसर्वेश्वरன் भोग्यனென்னுமிடம் श्रुतिस्मृत्यादि सिद्धமென்றது கூடுமோ? प्रबलप्रत्यक्षविरोधமில்லாதவிடத்திலேயன்றோ श्रुतिस्मृत्यादिகள் अर्थशिक्षै பண்ணுவது? अतीन्द्रिय भगवत्स्वरूपविग्रहगुणस्थानविशेषங்களுக்கு आनुकूल्यस्वरूपத்தை श्रुतिस्मृत्यादिகள் प्रापिத்தாலும் लीलाविभूत्यन्तर्गत पदार्थங்களுக்கு இவ் अधिकारिயைக் குறித்து प्रातिकूल्यं प्रत्यक्षसिद्धமாகையாலும் 'सर्वधर्मांश्च संत्यजय सर्वकामांश्च साक्षरान् । एते वै निरयास्तात स्थानस्य परमात्मन' इत्यादि स्मृत्यादिகளாலும் प्रातिकूल्यं बोधितமாகையாலும் तद्विरुद्धமாக आनुकूल्यத்தை केवलशास्त्रं प्रापिக்கக்கூடாதே? என்று शङ्किத்து उत्तरமருளிச் செய்கிறார்- भगवदित्यादिना । संसारदशैயில் स्वतस्सिद्धानुकूल्यं தோற்றாமைக்கு प्रथमदृष्टान्तम् . । उत्क्रमणानन्तरंதானே लीलावि-भूत्यन्तर्गतपदार्थங்களுக்கு प्रातिकूल्यं प्रयोजककर्मங்கழிகையாலே स्वतस्सिद्धानुकूल्यं தோற்ற வேண்டாவோவென்கிற शङ्कावारणार्थं द्वितीयदृष्टान्तम् । कारागृहतुल्यமான सूक्ष्मशरीरं கழிகையாலே विरजातरणानन्तरं தானே ब्रह्मोपसंपत्तेः पूर्वं स्वतः -

सा. वि - बद्धदशायां न तादृशानुभवाश्रयानुभाव्यत्वमिति न परमपदत्वं संसारदशायां दुःखरूपतया प्रतिपन्नलीलाविभूतेर्मुक्तदशायां कथं भोग्यत्वमित्याशङ्कापूर्वकं सदृष्टान्तं परिहारमाह- இப்படி भगवत्स्वरूपेत्यादिना ।

सा. सं - निरतिशयानुकूल्यं भगवत्स्वरूपस्यैवेत्यभिप्रेतं - மற்றுள்ளவற்றுக்கும் इति, विभूति चेष्टिताधीनामित्यर्थः - स्वस्वरूपे विभूतिभूतமாய் इत्युक्तिर्मुक्तौ भोगोपकरणत्वेन बद्धदशायां नामरूपव्याकरणाद्यर्थानुप्रवेशद्वारत्वकृतलीलोपकरणत्वेन च उपादेयत्वकृतामुक्तं प्रति त्याज्यतयोक्तानां लीलाविभूतिगतपदार्थानां तं प्रतिभोग्यत्वमाक्षिप्य समाधत्ते - இப்படி इत्यादिना उपपन्नमित्यन्तेन लीलाविभूतिगतपदार्था अनुकूलवर्गतया प्रतिकूलवर्गतया विभक्ता इति क्षीरं कारागृहं च दृष्टान्तितम् । प्रकृतिविमुक्तस्य कर्मसंबन्धरूप -

मू - राजा சிறைக்கூடத்தில் நின்றும் புறப்படவிட்டுகந்து तुल्यभोगனாக வைத்தவளவில் சிறைக்கூடமான கோப்புக் குலையாதிருக்கச் செய்தே पिताவின் विभूतिயென்று अनुकूलமாப் போலவும்- 'यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना' என்றும் 'नहि मे जीवितेनार्थो नैवार्थैर्नच भूषणैः । वसन्त्या राक्षसीमध्ये विना रामं महारथम्' என்றும் 'ஏராளுமிறையோனிலும்' சொல்லுகிறபடியே भगवत्संश्लेषமன்றிக்கேதான் நின்றபோது कर्मानुरूपமாகத் தனக்கு प्रतिकूलமாயும் अल्पानुकूलமாயும் தோற்றின लीलाविभूतिயில் पदार्थங்கள் मुक्तனாய் निरन्तरभगवदनुभवं பண்ணுகிற இவனுக்கு निरतिशयभोग्यवर्गத்திலே சேருகை उपपन्नम् -இப்படி बद्धருக்கு प्रतिकूलமாயும், अल्पानुकूलமாயும் -

सा,स्वा - सिद्धानुकूल्यं தோற்றாதென்கைக்காக तृतीयदृष्टान्तम् । संसारदशैயில் कदाचित्प्रातिकूल्यமும், कदाचिदल्पप्रातिकूल्यமும், कदाचिदानुकूल्यமும், एकदैव पुरुषभेदेन आनुकूल्यமும், प्रातिकूल्यமும் तरतमभावग्रस्तமாகத் தோற்றுகையாலே प्रत्यक्षादिसिद्धप्रातिकूल्यं पदार्थங்களுக்கு स्वतस्सिद्धமல்லாமையாலே मुक्तिदशैயில் सर्वமும் अनुकूलமென்று சொல்லுகிற श्रुत्यादिகள் स्वतस्सिद्धानुकूल्यத்தை बोधिக்கையாலே प्रत्यक्षादिகள் बद्धदशैயில் कर्मोपाधिकप्रातिकूल्यविषयமாகையால் परस्परविरोधமில்லையென்று கருத்து. राजकुमारனுக்கு சிறைக்கூடமிப்போது வேறொரு आकारமாகையால் अनुकूलமாகத் தோற்றலாமே என்கிற शङ्कावारणार्थ கோப்புக் குலையாதே इति । கோப்பு, आकारम् இப்படி ஒரு वस्तुதானே ஒரு कालத்திலே मुक्तனைப்பற்ற अनुकूलமாயும், बद्धனைப்பற்ற प्रतिकूलமாயும் இருக்கை विरुद्धமன்றோ? एककालத்திலே தானே प्रातिकूल्यस्वभावமும் आनुकूल्यस्वभावமுமுண்டாகில் सर्वज्ञரான नित्यमुक्तர்களுக்கு இரண்டும் தோற்ற வேண்டாவோ? என்னவருளிச் செய்கிறார்- இப்படி इति । बद्धர்க்கு இப்पदार्थजातं प्रतिकूलமாயிருக்கக் கடவதென்றும், भगवदिच्छासिद्धமாகையாலே एककालத்திலே भिन्नसंबन्धिनिरूप्य प्रातिकूल्यानुकूल्यங்களுக்கு विरोधமில்லை. बद्धருக்கு -

सा. वि - சிறைக்கூடத்தில் நின்றும், कारागृहात् - புறப்படவிட்டு, बहिर्निर्गमय्य உகந்து तुल्यभोगனாக, यथा, सन्तुष्टो गच्छेत्तथाவிட்டவளவில், विमोचनसमये கோப்பு, प्रकारे குறையாதேயிருக்க, अविनाशेन तिष्ठति सति - अयमर्थो भाष्यकारैर्यथैव राजपुत्रस्य पितुर्लीलोपकरणमत धात्वेनानुसन्धीयमान प्रियतमत्वमनुपगतं तथात्वानुसन्धाने प्रियतमं भवतीत्यर्थःதான் நின்றபோது, स्वातन्त्र्येणावस्थिति समये - भोग्यवर्गசேர்க்கை उपपन्नम् लीलाविभूतिस्थपदार्थानां भोग्यवर्गे अन्तर्भाव उपपन्न इति भावः ।

सा.सं - दोषापगमात्स्वेन तुल्यभोगतया भगवतैवावस्थापनाच्च भगवत इव मुक्तस्य च लीलाविभूतिरप्यनुकूलैवेति भावः - बह्माणि सक्तचित्तानां लीलाविभूतावपि स्वीय एव क्वचिद्विषये स्वाननुकूलत्वाभिसन्धिर्भगवदनुकूलेत्व प्रसक्ति कृतैवेति प्रदर्शनाय यस्त्वया सहेत्याद्युपन्यस्तम् - वृषभवाहनो भूतगणाधिपः - एवं च बद्धस्यापि भगवदनुकूलानि चेन्मुक्तस्य -

मू - कर्मबन्धमில்லாதார்க்கு अनुकूलस्वभावமாயும் இருக்கை அப்पदार्थங்களுக்கு भगवदिच्छासिद्धம் - இப்படி स्वेच्छासिद्धமான आनुकूल्यத்தையுடைத்தான தன் प्रकारங்களெல்லாத்தோடும் கூடின श्रीमाனான नारायणன் प्राप्यனென்னுமிடம் திருमन्त्रத்திலும் द्वयத்திலும் चतुर्थ्यन्तपदங்களிலே अभिप्रेतम् । முன்பு சொன்ன कैङ्कर्य इப்படி परिपूर्णानुभवத்தாலே பிறந்த प्रीतिविशेषத்துக்கு परीवाहமென்னுமிடத்தை गद्यத்திலே பலகாலும் அருளிச் செய்தார்-

सा. दी - 'जक्षत्क्रीडन्रममाणस्त्रीभिर्वा यानैर्वा' इत्यादिकृत्यங்களுண்டாயிருக்க -

सा. स्वा - प्रतिकूलமென்று मुक्तादिகளுக்கும் प्रत्यक्षமாகையும் विरुद्धமன்றென்று கருத்து. अनुकूलस्वभावेति - आनुकूल्यं यावदात्मभाविயாயிருக்கையாலே स्वभावसिद्धமென்றபடி. இப்படி सर्वप्रकारविशिष्टेश्वरன் प्राप्यனென்கிறது கூடுமோ? रहस्यत्रयத்திலே चतुर्थ्यन्तपदங்களிலே कैङ्कर्यத்தையன்றோ प्रार्थिக்கிறது. அங்கே भगवदनुभवத்துக்கு प्राप्यतै சொல்லவில்லையே? என்னவருளிச் செய்கிறார். स्वेच्छासिद्धமான इति-परेच्छासिद्धமாகில் स्वोत्कृष्टान्तरसद्भावात्स्वप्राप्यतैயே கூடாதொழியுமென்றபடி- कैङ्कर्यपर चतुर्थिயிலே अभिप्रेतமாகையாலே विरोधமில்லையென்று கருத்து- இப்படி अभिप्रेतமென்று சொல்லக் கூடுமோ? स्फुटமான कैङ्कर्यपरत्वं अनुभवं विना अनुपपन्नமானாலன்றோ. अभिप्रेतமென்னலாவது? இவ்अनुभवं कैङ्कर्यத்துக்கு कारणமாகையால் कार्यभूतकैङ्कर्यपरத்துக்குக் காரணமாகையால் कार्यभूतकैङ्कर्यपरचतुर्थिயிலே कारणமும் अभिप्रेतமென்னிலப்போது अनुभवத்தைச் சொல்லாமல் द्वयविवरण श्रीवैकुण्ठगद्यத்திலே कैङ्कर्यத்தையே சொல்லுகிறது विरोधिயாதோ? शरणागतिगद्यத்திலே प्रीतिकारितं कैङ्कर्यமென்று சொல்லுகிறதுவும் विरोधिயாதோ? என்னவருளிச் செய்கிறார் - முன்பு इति- अनुभवத்தாலே इति- परम्परयानुभवजनितமாகையாலே कैङ्कर्यपरचतुर्थिயிலே अभिप्रेतமென்று சொல்லக் குறையில்லையென்று கருத்து. இப்படி भगवदनुभवமே पुरुषार्थமாகில் 'जक्षत् -

सा. प्र - नुनु 'जक्षन्क्रीडन्' इत्यादिभिः 'स यदि पितृलोककामो भवति' इत्यादिभिश्च जक्षणादि योगो मातापित्रादि योगश्चावगम्यत इति कथं कैङ्कर्य पर्यन्त परिपूर्णानुभव एव फलमित्युच्यत -

सा.वि- स्वेच्छासिद्धமான, भगवदिच्छा सिद्धेत्यर्थः एततपर्यन्तो ग्रन्थः पूर्वव्या ख्यातृभि-रव्याख्यातत्वात्तद्वयख्यातग्रन्थ सन्दर्भविरोधाच्च प्रक्षिप्त इति निश्चीयते । ननु 'जक्षत्क्रीडन्रम -

सा. सं - कैमुतिकन्यायेनैव लीलाविभूतिरनुकूलेति भावः - एव मुभयविभूति विशिष्ट श्रीमत एव प्राप्यत्वं मन्त्र एव सिद्धमित्याह -இப்படி इति-सर्वमपि भगवदिच्छासिद्धानुकूल्यवदित्यत्र नारायणशब्द व्युत्पत्तय एव प्रमाणमिति भावः - इत्थं परिपूर्णब्रह्मानुभववतो भक्तस्येव स्वगतस्वीकारनिष्ठस्य च न केवलपरार्थकैङ्कर्यान्वय इत्यादि पराभिमतमुक्तितारतम्यनिरासायाह - முன்பு சொன்ன इति - उत्तरकृत्त्याधिकारोक्ता इत्यर्थः - प्रीतिविशेषो नाम स्वपरस्वरूपयाथात्म्यापरोक्षकृतस्वनिष्ठान्त-पारार्थ्यदशरूपः - तेन भक्तस्य न कैङ्कर्यान्विपः - प्रपन्नस्य च न केवलपरार्थकैङ्कर्यान्वय इत्थादिना र्शनावादिनिरासः फलितः - एवं कैङ्कर्य -

मू - उत्तमः पुरुषस्त्वन्यः - तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः । स तु नारायणो ज्ञेयस्सर्वात्मा पुरुषो हि सः । न लिप्यते कर्मफलैः पद्मपत्रमिवांभसा । कर्मात्मा त्ववरो योऽसौ मोक्षबन्धैस्स युज्यते । अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत् । तथा विश्वमिदं देवो ह्यावृत्य परितिष्ठति'' इत्यादि प्रमाणसहस्रं विरोधिக்கும்.

सा. दी - उत्तमः पुरुषस्तु क्षराक्षराभ्यमन्यः என்கை. तत्रेति - जीवात्मनि अन्तरात्मतया यः परमात्मा वर्तते । जीवपरमात्मनोर्मध्ये इति वा नित्यो निर्गुणश्च स एव नारायणः स एव सर्वान्तिर्यामी । पुरुषः, पुरुषशब्दवाच्यः । कर्मफलैर्नलिप्यते - कर्मवश्यो योऽसौ अपरः जीवात्मनः । कर्मात्कित्वादेव संसारबन्धेन मोक्षेण च युज्यते वह्निस्स्वत अयसो भिन्नोऽपि यथा अयःपिण्डादभिन्नवत्तिष्ठति - अभिन्नवदित्यनेनात्यन्तसंश्लेषविशेषो विवक्षितः - तथा देवो नारायणः स्वरूपतो भिन्नोऽपि इदं सर्वं विश्वं चेतनाचेतनं व्याप्यपरितस्तिष्ठति என்கை.

सा. स्वा - विषयीकुर्वन्तीत्यर्थः - उत्तमः पुरुषस्त्वन्यः, क्षराक्षराभ्यां बद्धमुक्ताभ्यां भिन्न इत्यर्थः- तत्रेति । तत्र जीवात्मन्यन्तर्यामितयावस्थितः परमात्मा यः स तु नित्यः निर्गुणः - सत्वादिगुणरहितः-स किं रुद्रादिदेवतान्तरमित्यत्राह - सत्विति - नारायणो ज्ञेयः - स नारायणः हि यस्मात् - सर्वात्मा, सर्वान्तिर्यामी पुरुषशब्दवाच्यश्च तस्मादिति पूर्वेणान्वयः - कर्मफलैर्न लिप्यते - यः असौ जीवः अपरः सतु कर्मात्मा सन् मोक्षबन्धैर्युज्यते - एवं तत्वमुपदिश्य शास्त्रेष्वैक्यव्यपदेशस्य निर्वाहमाह अय इति - अयः पिण्डे वह्निस्तस्माद्भिन्नोऽपि अभिन्नवत्तिष्ठति - नतु वस्तुत अभिन्न इति भावः - तथा विश्वमिदं देव आवृत्य व्याप्य परितिष्ठति - तस्मादयो दहतीतिवत् तत्वमस्याद्यभेदव्यपदेश इति भावः - प्रमाणसहस्रमिति विरोधबाधकबहुप्रमाणमित्यर्थः यद्वा तात्विकभेदबोधकबहुप्रमाणमित्यर्थः - अनेनाभेदबोधक प्रमाणापेक्षया मुक्तिदशायां भेदबोधकप्रमाणानन्त्यात् अनन्तप्रमाणविरोधापेक्षया कति पयप्रमाणस्य शास्त्रानुमतोऽपचारान्नयनं न्याय्यमिति ध्वनित மாகிறதென்று கருத்து- ஆனாலும் परमसाम्यं सर्वाकारेण साम्यமன்றோ? அது ऐक्यத்திலே पर्यवसिயாதோ? என்னவருளிச் செய்கிறார். -

सा. प्र - तत्वोपदेशोऽपि भेदविषय एवेत्युक्तमुत्तमः पुरुष इत्यादिना - प्रमाण सहस्रमिति भेदावगाहिप्रमाणानामैक्यावगाहिभ्यो बहुत्वाद्बहूनामनुग्रहो न्याय्य इति भेद एव तात्विक इति भावः । एवं चोभयविभूति विशिष्टब्रह्मानुभवरूपभोगेन सार्वज्ञापहतपाप्मत्वादिना च -

सा. वि - मोक्षबन्धैः, बन्धैर्मोक्षेण च युज्यत इत्यर्थः ।

सा.सं- पश्यन्ति, आत्मावलोकनद्वारा पश्यन्ति । व्यापनभरणस्वाम्यैर्भगवतो जीववैलक्षण्यपरगीतावचनमाह । उत्तम इति । तत्र य इत्यादि सार्धवचनद्वयं कर्म बन्धादिसदसद्भावाभ्यां जीवेश्वरयोर्वैलक्षण्यपरम् । नित्यः पुरुषः । विग्रहविशिष्टवेषेण च नित्यस्सन् निरुपाधिकपुरुष पदवाच्यः - कर्मात्मा, कर्मवश्यः अचिद्ब्रह्मणोरपि व्याप्यव्यापकभावेन भेदपरमयः पिण्डः इति । -

मू - ஆகையால் मुक्तனுக்கு ज्ञानभोगादिகளால் வந்த परमसाम्यமேயுள்ளது. ईश्वरனுக்கு छत्रचामरादिகளைப்போலே लक्षणமாகச் சொன்ன जगत्कारणत्व, मोक्षप्रदत्व, सर्वाधारत्व, सर्वनियन्तृत्व, सर्वशेषित्व, सर्वशरीरत्व, सर्वशब्दवाच्यत्व, सर्ववेदवेद्यत्व, सर्वलोकशरण्यत्व, सर्वमुमुक्षूपास्यत्व, सर्वफलप्रदत्व, सर्वव्याप्त (त्व) ज्ञानानन्दस्वरूपत्व, लक्ष्मीसहायत्वादिகள் प्रतिनियतங்கள். मुक्तனுக்கு आधेयत्वविधेयत्यशेषत्वाणुत्वादिகள் व्यवस्थितங்கள்-

सा. दी - இத்தால் फलितार्थத்தைக் காட்டுகிறார்- ஆகையால் मुक्तனுக்கு इत्यादि - ஆனால் मुक्तனுக்கில்லாத परमात्मधर्मங்களெவை? என்னவருளிச் செய்கிறார். ईश्वरனுக்கு इत्यादिயால் लक्षणं, असाधारणाकारम् । जीवர்களுக்கில்லாததென்கை. कारणत्वप्रयुक्तं मोक्षप्रदत्वम् । सर्वाधारत्वादिप्रयुक्तं सर्वशरिरत्वम् । सर्वशरीरत्वप्रयुक्तं सर्वशब्दवाच्यत्वम् । - तत्प्रयुक्तं सर्ववेदवेद्यत्वम् - सर्वत्रव्याप्तज्ञानानन्द स्वरूपत्वम् । विभुस्वरूपत्वமென்றபடி. இனி परमात्माவுக்கில்லாதே मुक्तனுக்கு व्यवस्थित गुणங்களைக் காட்டுகிறார். मुक्तனுக்கென்று துடங்கி. आदिशब्दं शरीरत्वादिग्राहकम् । இப்படி मुक्तனுக்கு परमात्मवैधर्म्य முண்டாகில் இவனுக்கு परमात्मस्वातन्त्र्यादिகளடியாக पुनरावृतिயை -

सा. स्वा - ஆகையால் इति - मुक्तिदशैயிலும் भेदं சொல்லுகையாலென்றபடி सर्वाकारेण साम्यं சொன்னால் ऐक्यं प्रसङ्गिக்கையாலே भेदकथनं विरोधिக்குமென்றபடி- ஆனாலும் जगत्कारणत्वादि कतिपयाकारத்தாலே साम्यंசொல்லலாகாதோ? जीवगताणुत्वाद्याकारந்தான் ईश्वरனுக்கு வந்து அதனாலேதான் साम्यं சொல்லலாகாதோ? என்னவருளிச் செய்கிறார்- ईश्वरனுக்கு इत्यादि वाक्यद्वयத்தாலே लक्षणेति - लक्षणमसाधारणधर्मமாகையாலே अन्यत्र वृत्ति கூடாமையால் ज्ञानभोगादिसाम्यத்திலேயே परमसाम्यश्रुतिக்குத் तात्पर्यமென்று கருத்து- आधेयत्वेतिसर्वत्र चेतनेत्यध्याहारः । चेतनत्वे सत्याधेयत्वादिகளென்றபடி இப்படி मुक्तिदशैயிலும் शेषत्वविधेयत्वं व्यवस्थितமாகில் 'स संपदां समाहारे' என்கிறபடியே विपन्निवर्तनवद्विपत्प्रापणமும் ईश्वराधीनமாகையாலே-

सा. प्र - साम्यं सावधारणं वदन्नुभययोर्व्यवस्थितान् कांश्चन धर्मानाह । ஆகையால் इत्यादिना लक्ष्मीसहायत्वादिகள் इति भूमिनीलानायकत्वानन्तभोगपर्यङ्कत्वगरुडध्वजत्वादि रादिशब्दार्थः - अणुत्वादिகள் इति - पारतन्त्र्यरक्ष्यत्वादिरादिशब्दार्थः । नन्वेवं मुक्तानां भगवत्परतन्त्रत्वे स्वतन्त्रो भगवान्मुक्तान् केनचिद्धेतुना पुनस्संसारं प्रापयेदिति शङ्कायां किं मुक्तानां पुरुषार्थान्तिरेच्छया पुनरावृत्तिश्शङ्क्यते? उत तेषामज्ञानाद्वा? उपायानुष्ठान-

सा. सं - उपपादितमर्थं निगमयति । ஆகையால் इति ज्ञानं युगपदखिल विषयी परोक्षज्ञानम् । भोगः स्वानुकूलत्वप्रकारकयावद्वस्तु शरीरकत्वेन निखिलगुणविशिष्टब्रह्मस्वरूपसाक्षात्कारः । आदि शब्दादपहतपाप्मत्वादिग्रहणम् - इदं सायुज्यं भेदकधर्मविधुरं चेदभेद एव पर्यवसन्नमितीममर्थं प्रतिनियतधर्मवर्गप्रदर्शनेन निवर्तयति - ईश्वरனுக்கு इत्यादिना - ननु 'निरञ्जनः' इति श्रुतौ परम पदबलात्साम्यमैक्यमेवेति वाच्यम् । अन्यथा मुक्तस्य अस्वतन्त्र --

मू - இப்படியாகில் 'न संपदां समाहारे विपदां विनिवर्तने । समर्थो विद्यते कश्चित्तं विना पुरुषोत्तमम्' என்கிற நிலையாய் स्वतन्त्रரல்லாத मुक्तருக்கு ஏதேனுமொரு हेतुவாலே आवृत्तिशङ्कै வாராதோவென்னில்? அது வாராது- 'सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः' என்று தானே அருளிச் செய்தானிறே-

सा. दी - शङ्कित्तु 'अनावृत्तिश्शब्दात्' என்கிற न्यायத்தாலே परिहरिக்கிறார். இப்படியாகில் इत्यादिயால். न सम्पदामिति - समाहारे, प्रदाने । शेषभूतராகையால் अस्वतन्त्रரான मुक्तருக்கு. ஏதேனுமொரு हेतुவாலே, मुक्तனுடைய इच्छै என்ன? अज्ञानமென்ன? ईश्वरेच्छैயென்ன? इत्यादिகளாலென்கை. तीव्रभक्ताः, परमभक्तिपरिष्कृताः । भक्तिनिष्ठाः என்றபடி. तपस्विनः, न्यासरूपतपोनिष्ठाः । 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' என்றதிறே ते सायुज्यं प्राप्ताः मम किङ्करा भूत्वा नित्यं निरुपद्रवा भवन्ति । नित्यशब्देनापुनरावृत्तिरुच्यते । முக்தன் इच्छैயால் வரும் आवृत्तिशङ्कैயில்லை-

सा. स्वा - भगवदिच्छादिरूपवक्ष्यमाणहेतुக்களாலே पुनरावृत्तिவாராதோ? என்று शङ्किக்கிறார்- இப்படியாகில் इति - 'मोक्षयिष्यामि' என்கிற उक्तिபோலே 'पुनश्च निवर्तयिष्यामि' என்று भगवदुक्त्यादिप्रबलप्रमाणத்தாலே पुनरावृत्ति शङ्किக்கிறதோ? पुरुषार्थान्तरத்திலே தனக்கு इच्छै பிறக்கையாலே पुनरावृत्ति शङ्किக்கிறதோ? स्वाज्ञानத்தாலே शङ्किக்கிறதோ? स्वतन्त्रனான ईश्वरனுடைய अप्रीतिயாலே शङ्किக்கிறதோ? என்று विकल्पमभिप्रेत्य क्रमेण उत्तरமருளிச் செய்கிறார். அது வாராது इत्यादिना सायुज्येति - तीव्रभक्ताः, परमभक्तियुक्ताः - भक्तियोगनिष्ठाः - तपस्विनः, अतिशयार्थे मतुप्प्रत्ययः - 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः' इति वचनादतिशयिते तपोयुक्ताः 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इत्युक्तरीत्या न्यासरूपातिशयित तपोनिष्ठा इत्यर्थः - एवं भूता ये सायुज्यं प्रतिपन्नाः ते मम नित्यकिङ्कराः सन्तः यावदात्मसत्तं कैङ्कर्यरतास्सन्तः निरुपद्रवाः पुनरावृत्त्यादिशङ्कारहिता भवन्तीत्यर्थः - स्वयं தானே இப்படியருளிச் செய்கையாலே आद्यकल्पम् -

सा. प्र - समयसिद्धभगवदनुभवप्रीतिरूपत्वस्य मुक्तावगमाद्वा? 'अहं स च मम प्रियः' इत्युक्तोपासनसमयसिद्धभगवन्निरतिशयप्रीतिः विषयत्वस्यापगमात्केवलभगवदिच्छया वा? आज्ञप्राननुष्ठानाद्वा? तदभिमत विपरीतानुष्ठानाद्वेति विकल्प्य मुक्तेषु तेषामभावं वक्तुं प्रथमं मुक्तानां पुनस्संसाराभावं वचनतो दर्शयति - இப்படியாகில் इत्यादिना उक्तेषु विकल्पेषु-

सा. वि - न संपदामिति - समाहारे । ஏதேனுமொரு हेतुவாலே, मुक्तस्येच्छया अज्ञानाद्वा स्वतन्त्रस्वेच्छया वा आज्ञोल्लङ्घनाद्वेत्यर्थः तीव्रभक्ताः, भक्तिनिष्ठाः तपस्विनः, न्यासविद्यानिष्ठाः । 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इति श्रुतेः - नित्यकिङ्करा इत्यनेन पुनरावृत्तिर्नास्तीति सूचितम् - येन केनापि प्रकारेण पुनरावृत्तिर्नास्तीति भावः । तदेवोपपादयति । -

सा. सं - त्वायत्तावृत्तिशङ्कापत्तेरित्याशङ्क्य परिहरति - இப்படியாகில் इत्यादिना -

मू - मुमुक्षुदशैயில் केवलाचित्தையும், केवलचित्தையும் अनुभविக்கையாகிற ऐश्वर्यकैवल्यங்களில் वैराग्यं பிறந்தவிது मुक्तனுக்கு ब्रह्मात्मकமாக सर्वத்தையும் காண்கையாலே केवलानुभवप्रसङ्ग மில்லாமையாலும் அந்த पुरुषार्थान्तरங்களினுடைய दोषமெல்லாம் नित्यप्रत्यक्षित மாகையாலும் प्रतिष्ठितமாயிற்று. ஆகையால் தன்னிச்சையடியாக आवृत्तिशङ्कैயில்லை -

सा. दी - யென்றுமத்தைக் காட்டுகிறார்- मुमुक्षुदशैயில் इत्यादिயால். केवलाचित्தை, अब्रह्मात्मकत्वेनाचित्தையும் अब्रह्मात्मकत्वेन चित्तதையும் अनुभविக்கை केवलानुभवप्रसङ्गम्। அந்த पुरुषार्थान्तरங்களினுடைய, ऐश्वर्यकैवल्यங்களினுடைய दोषम्, अल्पास्थिरत्वादिदोषसप्तकम् । प्रतिष्ठितமாயிற்று अपुनरावृत्तिயென்று शेषम् दोषज्ञानமும் ब्रह्मात्मकत्वज्ञानமுமில்லாதபோது -

सा. स्वा - கூடாதென்றபடி- द्वितीयத்துக்கு उत्तरமருளிச் செய்கிறார்- मुमुक्षुदशैயிலே इति - इतरपुरुषार्थवैराग्यनिवृत्तिக்கு उत्कृष्ट पुरुषार्थान्तरदर्शनं தான் इतरपुरुषार्थத்தில் दोषदर्शनंதான் कारणम्। இதிரண்டுமில்லையென்கிறார்- मुक्तனுக்கு इत्यादिना - तृतीयத்தில் उत्तरமருளிச் செய்கிறார்-

सा. प्र - पुरुषार्थान्तरेच्छारूपं संसारहेतुं सोपपत्तिकं निरस्यति - मुमुक्षुदशैயில் इत्यादिना ।

सा. वि - मुमुक्षुदशैயில் इत्यादिना । तत्र स्वेच्छया आवृत्तिशङ्कां वारयति । मुमुक्षुदशैயிலே इति - अनुभविக்கையாகிற ऐश्वर्यकैवल्यங்களில், अनुभवरूपैश्वर्यकैवल्ययोः वैराग्योत्पत्तौ - இது, मुमुक्षुदशायामुत्पन्नमिदम् । वैराग्यं प्रतिष्ठितமாயிற்று, मुक्तदशायां दृढं भवतीत्यर्थः । तत्र हेतुपरो मुक्तன் इत्यादिग्रन्थः । ஆகையால், अतः कारणात् - தன்னிச்சையடியாக आवृत्तिशङ्कैயில்லை, ऐश्वर्यकैवल्यानुभवार्थं स्वेच्छया आवृत्तिशङ्का नास्तीति भावः । ऐश्वर्यकैवल्ये पुरुषार्था-वित्यज्ञानोत्पत्तिहेत्वभावेन अज्ञानासम्भवादज्ञानहेतुकावृत्ति -

सा. सं - साम्यमित्युक्त्यैव भेदे सिद्धे साम्यस्य परमत्वम् 'नतत्समश्च' इति श्रुत्यविरुद्धं ज्ञानभोगादिषु लेशतोऽपि वैषम्यवैधुर्यमेवेति भावः । तेषां सर्वेषु लोकेषु- इमान्लोकान्कामान्ही । स यदि पितृलोककाम इत्यादीनां स्वच्छन्दवृत्तिपराणां पुनस्संसरणप्रयोजकावृत्तावप्रमाणत्वात् -'एतेन प्रतिपद्यमाना' इत्यादि श्रवणान्मुक्तिदेनैव नित्यं निरुपद्रवा इत्युक्तेश्च नावृत्तिप्रसङ्ग इति हृदयम् - अहेतुका वृत्त्ययोगादावृत्तिः पुरुषार्थान्तरेषु दोषादर्शनाद्वा? तद्दर्शनेऽपि वैराग्याभावनिबन्धनस्वेच्छया वा? ज्ञानविकासवैधुर्येण हेयोपादेयाज्ञानाद्वा? तदज्ञानेऽपि भगवद्वैलक्षण्यप्रत्यक्षाभावनिबन्धनभगवदप्रीतिविषयत्वकृत भगवदिच्छया वा? मुक्तावपि शास्त्रवश्यत्वभङ्गेन तन्निबन्धनाज्ञातिलङ्घनेन वा? तद्भङ्गेऽपि स्वाम्यभिमत विपरीतानुष्ठानाद्वा स्यात् । तत्र न तावदाद्य इतिविधया क्रमेण प्रत्युत्तरम् - मुमुक्षुदशैயில் इत्यादिना । विपरीतமான अनुष्ठानமில்லை इत्यन्तेन - பிறந்த वैराग्यं प्रतिष्ठितமாயிற்று इत्यन्वयः । ततः फलितमुपसंहरति । ஆகையால் इति -

मू - चिदचिदीश्वरतत्त्वत्रयविषयமாகவும், हेयोपादेयविषयமாகவும், முன்பு பிறந்த ज्ञानமிப்போது विच्छेदसङ्कोचங்களில்லாதபடி विकसितமாயிற்று. ஆகையால் தன் अज्ञानமடியாக आवृत्तिशङ्कிக்கவொண்ணாது भगवद्विषयवैलक्षण्यज्ञानத்தாலே முன்பு பிறந்த भक्तिशब्दवाच्यமான प्रीतिरूपापन्नज्ञानமிப்போது शास्त्रங்களுக்கு நிலமல்லாத भगवद्वैलक्षण्यமெல்லாம் प्रत्यक्षமானபடியாலே निरतिशयप्रीतिरूपापन्नज्ञानமாய்த்தலைக்கட்டிற்று- இப்படி இருக்கையாலே 'स च मम प्रियः' என்று ईश्वरனுடைய प्रीत्यतिशयं அவன் தன்னாலும் नियमिக்க வொண்ணாதபடி கரைபுரண்டிவனோடு परम्परयासंबन्धமுடைய-திடர் நிலங்களிலுமேறிப் பாயும்படியாயிற்று. ஆகையால் कर्मமில்லையேயாகிலும் स्वतन्त्रனான-

सा. दी - तन्नज्ञानமடியாகவரும் आवृत्तिशङ्कैயை निरसिக்கிறார். चिदचिदीश्वरीत्यादिயால்- विच्छेदसङ्कोचकारणமான कर्मं निश्शेषं निवृत्तமாகையாலென்று கருத்து. विकसितமாயிற்று, विकसितமாமென்கை. இனி स्वतन्त्रனான ईश्वरனுடைய इच्छैயால் வரும் आवृत्तिशङ्कैயைக் கழிக்கிறார்- भगवद्विषयेत्यादिயால். ज्ञानमात्रத்தாலென்றபடி. முன்பு मुमुक्षुदशैயில், இப்போது, मुक्तदशैயில்- தலைக்கட்டிற்று, தலைக்கட்டுமென்றபடி. கரைபுரண்டுபாயும் इत्यादि । பாயும்படியாமென்கை. -

सा. स्वा - चिदचिदिति - अज्ञानेति - सांसारिकभोगத்தின் हेयता विषयाज्ञानத்தாலேயென்றபடி- तुरीयपक्षத்தில் भगवदप्रीतिயும் தனக்கு भगवद्विषयकाप्रीतिயாலேயோ? भगवदाज्ञातिलङ्घनத்தாலேயோ? भगवद्विरुद्धाचरणத்தினாலேயோ? என்று विकल्पमभिप्रेत्य क्रमेणोत्तरமருளிச் செய்கிறார். भगवदिति - स्वतन्त्रेति ।

सा. प्र - द्वितीयं निरस्यति - चिदचिदीश्वरेत्यादिना - முன்பு பிறந்த इत्यादिपूर्वोत्पन्नस्य ज्ञानस्येदानीं विकसितत्वादित्यर्थः । तृतीयं निरस्यति । भगवद्विषयेत्यादिना । एवं भूतत्वात्कृत्स्नं भगवद्वैलक्षण्यं प्रत्यक्षेणानुभूय भगवति निरतिशयप्रीतिमत्वादित्यर्थः - திடர் நிலங்களிலும், उन्नतस्थलेष्वपि - पापप्राचुर्येण भगवत्प्रीतिदवीयस्वपीत्यर्थः ஏறிப் பாயும்படியாயிற்று, अधिरुह्य यथा प्रवहेत्तथाभूत् -

सा. वि - शङ्कापि नास्तीत्याह - चिदचिदीश्वरेति - सार्वज्ञवशान्निरतिशय प्रीतिरूपान्न भक्त्युत्पत्तेः 'स च मम प्रियः' इत्यभिमानवान् सत्यसङ्कल्पो भगवानपि न निवर्तयतीत्याह - भगवद्विषयवैलक्षण्येति - அப்போது, मुक्तदशायां - शास्त्रங்களுக்கு நிலமில்லாத भगवद्वैलक्षण्यமெல்லாம், शास्त्रेण ज्ञातुमशक्यस्यापि कृत्स्नवैलक्षण्यस्य- प्रत्यक्षமானபடியாலே, प्रत्यक्षतया - निरतिशयप्रीतिरूपापन्नமாய், முன்பு பிறந்த भक्तिशब्दवाच्यமான प्रीतिरूपापन्नज्ञानमित्येतदिह विशेष्यम्-தலைக்கட்டிற்று, समाप्नोति संपूर्णं भवतीत्यर्थः - ईश्वरனுடைய प्रीत्यतिशयம், ईश्वरस्य प्रीत्यतिशयः । அவன் தன்னாலும், भगवतापि । नियमिக்கவொண்ணாதபடி, नियमयितुमशक्यतया । கரைபுரண்டு, उद्वेलस्सन् । இவனோடு, अनेन मुक्तेन सह । परंपरयासंबन्धமுடைய, परम्परया संबन्धविशिष्टानि - திடர்நிலங்களும், उन्नतस्थलास्वपि - पापप्राचुर्येण प्रीतिविषयत्वानर्हाण्यपि । ஏறிப் பாயும்படியாயிற்று, अधिरुह्य प्रवहन्निवीव भवति- अतो भगवान् स्वेच्छया न पुन -

मू - ईश्वरனுடைய इच्छैயாலே पुनरावृत्तिயுண்டாகிறதோவென்று शङ्किக்கவொண்ணாது. शास्त्रवश्याधिकारं கழிகையாலே मुक्तदशैயில் आज्ञातिलङ्घनமில்லை. அவனுகப்பே தனக்குகப்பாகையால் ईश्वराभिमतத்துக்கு विपरीतமான अनुष्ठानமில்லை. ஆகையால் कैङ्कर्यपर्यन्तपरिपूर्ण ब्रह्मानुभवरूपமான मोक्षाख्यपुरुषार्थं மேல் यावदात्मभाविயாயிற்று.

सा. दी - विहिताकरणादिमूलமான भगवदप्रीतिயால் வரும் आवृत्तिशङ्कैயைப் परिहरिக்கிறார். शास्त्रवश्याधिकारमित्यादिயால்- ईश्वरानभिमतानुष्ठानத்தால் शङ्कैயைப் परिहरिக்கிறார். அவனுகப்பாலே इत्यादिயால் ईश्वरன் मुमुक्षुदशैயில் शास्त्रजन्यकतिपयवैलक्षण्यज्ञानத்தால் प्रियனானவனிப்போது सकलवैलक्षण्यप्रत्यक्षज्ञानமுடைய मुक्तविषयத்தில் अतिशयितप्रियனாம் - இவனும் ईश्वरனுக்கு पूर्वपिक्षया प्रीतिविषयனாம் ஆகையால் पुनरावृत्तिशङ्कैயில்லையென்று கருத்து- पुनरावृत्तिशङ्काभावத்தை निगमिக்கிறார்- ஆகையால் कैङ्कर्यपर्यन्तेत्यादिயால்.

सा. स्वा - स्वतन्त्रனுக்கு अप्रीतिनिमित्तமில்லையென்று கருத்து- द्वितीयविकल्पத்தில் उत्तरமருளிச் செய்கிறார்- शास्त्रेति - तृतीयத்தில் उत्तरமருளிச் செய்கிறார்- அவன் इति - भक्तियोगनिष्ठனுக்கு अनुभवमात्रं पुरुषार्थமென்றும், प्रपன்னனுக்கு कैङ्कर्यं पुरुषार्थமென்றும், சிலர் பிரியச் சொல்லா நிற்க एकरूपமாக पुरुषार्थस्वरूपकथनं கூடுமோ? किञ्च இவ் अनुभवं विद्याजनितமாகையாலே जन्यमात्रத்துக்கு अनित्यत्वமும் சொல்ல வேண்டாவோ? என்கிற शङ्कैயை परिहरिயா நின்றுகொண்டு उपसंहरिக்கிறார்- ஆகையால் इत्यादि ஆகையால் 'किङ्करा मम ते नित्यम्' என்று भक्तனுக்கும் कैङ्कर्यं சொல்லுகையாலே पुरुषार्थभेदकथनमसङ्गत மென்றபடி मोक्षाख्येत्ति - जन्यமானாலும் अविद्याकर्मवासनादि समस्तप्रतिबन्धक ध्वंसात्मकமாகையாலே जन्यत्वेऽपि प्रध्वंसस्य मतान्तरे नित्यत्ववद्भावान्तराभावपक्षத்திலும் संसारध्वंसात्मक परिपूर्णब्रह्मानुभवस्योत्तरावधिरहितत्वरूप नित्यत्वोपपत्ति என்று கருத்து- இப்படி पुनरावृत्तिशङ्का परिहारமாகையால் परमसाम्यश्रुतिக்கு- 'जगद्व्यापारवर्जनं प्रकरणादसन्निहितत्वाच्चभोगमात्रसाम्यलिङ्गाच्च' என்று सूत्रकारர் भोगमात्रத்திலே साम्यமென்று समर्थिக்கிறாப்போலே இப்படி शङ्कैகளையும் परिहरिக்க வேண்டாவோ?

सा. प्र - पूर्वं भगवत्प्रीति दवीयसामपि प्रपन्नसंबन्धि सम्बन्धे सति प्रीतिविषयत्वं यथा भवेत्तथाऽभवदित्यर्थः पञ्चमं पुनरावृत्तिहेतुं निरस्यति शास्त्रवश्येत्यादिना - षष्ठं निरस्यति - அவனுகப்பாலே इत्यादिना तत्प्रीत्यैव स्वस्य प्रीतिमत्वात् - एवं पुनस्संसरणहेतून् सोपपत्तिकं निरस्य अत एव परिपूर्णानुभवो यावदात्मभावीति निगमयति - ஆகையால் इति - आवृत्तिहेतूनामभावादित्यर्थः மேல், अर्चिरादिना देशविशेषप्राप्त्यनन्तरमित्यर्थः । -

सा. वि - निर्वर्तयतीति भावः - आज्ञातिलङ्घननिमित्तपुनरावृत्तिशङ्कां वारयति शास्त्रवश्याधिकारं கழிகையாலே इति - उत्तरावधिराहित्यप्रतिपादनमुपसंहरति - ஆகையாலே इति - अपुनरावृत्ति -

सा. सं - ततः फलितमुपसंहरति - ஆகையால் इति । -

मू - இவையெல்லாத்தையும் நினைத்து- 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' என்று -

सा. दी - यावदात्मभाविயாய் விட்டதென்றபடி. இவ்अर्थத்தில் सूत्रसंमतिயையும் காட்டிய ருளுகிறார்- இவையெல்லாத்தையும் इत्यादिயால்- இவை, शङ्काहेत्वाभासங்கள். अनावृत्तिश्शब्दादिति । இதன் अर्थம் 'यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञस्सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्त-समाभ्यधिकसम्भावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शब्दादवगम्यते - एवमहर-हरनुष्ठीयमानवर्णाश्रमधमनिुगृहीत तदुपासनरूपतत्समाराथनप्रीतः उपासीनानाननादिकाल प्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविधां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकाति शयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते-शब्दश्च स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते । न च पुनरावर्तते न च पुनरावर्तत इत्यादिः । तथा च भगवता स्वयमेवोक्तम् । -

सा. स्वा - என்னவருளிச் செய்கிறார். இவையெல்லாத்தையும் इतिशङ्कानिवर्तकமான இவ்अर्थம் एतत् -

सा. प्र - मुक्तस्य पुनस्संसाराभावस्सांप्रदायिक इत्याह । இவையெல்லாத்தையும் इति । 'अनावृत्तिश्शब्दात्' इति सूत्र व्याख्यानावसरे 'नचोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैक स्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षा तदर्थारम्भाद्यसंभवात् पुनरावृत्तिशङ्का' इत्युक्तम् - अस्मिन् वाक्ये उच्छिन्नकर्मबन्धस्येत्यत्राज्ञातिलङ्घनभगवदभिमत विपरीतानुष्ठानरूपमावृत्तिहेतुद्वयमनयोः कारणाभावप्रतिपादनेन निरस्तं वेदितव्यम् - असङ्कुचितज्ञानस्ये त्यनेनाज्ञानरूपो हेतुर्निरस्तः - तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवत इत्यनेन उपासनसमयसिद्धभगवदनुभवनिरतिशयप्रीतिरूपत्वावगमरूपहेतुर्निरस्तः उक्तः पदैस्तत्तद्धेत्व-भावविरोधाकारयोरन्यतरोपस्थापनेन -

सा. वि - प्रतिपादनरूपस्वोक्तार्थे सूत्रकारसंमतिमाह - இவையெல்லாம் इति நினைத்து, अभिप्रेत्य । अयमभिप्रायः । 'यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तु विलक्षणस्सर्वज्ञस्सत्यसङ्कल्प आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिक संभावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शब्दादगम्यते - एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीत तदुपासनरूपतत्समाराधनप्रीत उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते - शब्दश्च स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते 'इत्यादिः - तथा च भगवता स्वयमेवोक्तं' - मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः ।। -

सा. सं - उपपादितमर्थं सूत्रकारोक्त्या दृढयति இவை इति ।

मू - सूत्रकारரும் அருளிச் செய்தார்- 'ஏறி எழிற்பத -

सा. दी - मामुपेत्य पुनर्जन्म दुःखाल्यमशाखतम् । नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाँल्लोका पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ इत्यादिभाष्यமிங்கே अनुसन्धेयम् -

पुनरावृत्तिயில்லாத कैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवமே मोक्षशब्दवाच्यமென்னு மத்தை பாட்டாலும் सङ्ग्रहित्துக் காட்டியருள்கிறார். ஏறி इत्यादि । எழில் பதம், शोभैயையுடைய

सा. स्वा - सूत्रभाष्यத்திலே व्यक्तமென்று கருத்து -

இப்படி இவ்अधिकारத்திலே परमपुरुषार्थनिर्णयं பண்ணினது கூடுமோ? 'भगवद्वन्दनं स्वाद्यं गुरुवन्दनपूर्वकम् । क्षीरं शर्करयायुक्तं स्वदते हि विशेषतः' इत्याद्युक्त प्रकारेणाचार्यवन्दन सन्निधानानुमतिயில்லாத कैङ्कर्यं रसिக்குமோ? என்கிற शङ्कैயைப் परिहरिயாநின்று கொண்டு अधिकारार्थத்தை मुक्तानुसन्धानरूपமான பாட்டாலே सङ्ग्रहिக்கிறார்- ஏறி इति எழில், उज्वलम् । பதம், 'आदित्यवर्णं तमसः परस्तात्' इत्युक्तप्रकारेणोज्वलமாகா நிற்கிற -

सा. प्र - तत्तन्निरासो ज्ञातव्यः - 'न च परमपुरुषस्सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा', इत्यनेनो परितनवाक्येनोपासनसमयसिद्ध भगवन्निरतिशयप्रीतिविषयत्वाभावहेतुक भगवत्स्वतन्त्रेच्छारूपहेतुर्निरस्त इति ज्ञेयम्-

प्रापकस्यैव प्राप्यत्वं प्रदर्शयन् प्राप्तिफले निरतिशय प्रियभगवदनुभवपरिवाहे कैङ्कर्ये 'चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन । पादमूलं गमिष्यामि यानहं पर्यचारिषम्' इत्याद्युक्तम् स्वाचार्यपर्यन्तत्वरूपं विशेषं चाह - ஏறி எழிற்பதம் इत्यादिना -

सा. वि - आब्रह्मभुवनाँल्लोकाः पुनरावर्तिनोऽर्जुन मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते इत्यादिना भाष्यकारैस्सूत्रं व्याख्याय । 'तस्य च उच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षा तदर्थारम्भाद्यसम्भवान्न पुनरावृत्तिशङ्का' इत्युक्तम् । तत्रोच्छिन्नकर्मबन्धेत्यनेन आज्ञातिलङ्घनभगवदभिमतविपरीतकर्मानुष्ठानरूपावृत्तिहेतुः कारणाभावप्रतिपादनेन निरस्तो वेदितव्यः - असङ्कुचितज्ञानस्येत्यनेन अज्ञानरूपहेतुर्निरस्तः - परब्रह्मानुभवैकस्वभावस्येत्यनेन पुरुषार्थान्तरेच्छारूपहेतुर्निरस्तः - तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवत इत्यनेन भगवन्निरतिशयप्रीतिविषयत्वाभावहेतुकभगवत्स्वतन्त्रेच्छारूपहेतुर्निरस्त इति स्वोक्तार्थे संमतिः ।

प्राप्यस्यैव प्रापकत्वं दर्शयन् प्राप्तिफले निरतिशयप्रिय भगवदनुभवपरीवाहकैङ्कर्यकार्ये 'चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन । पादमूलं गमिष्यामि यानहं पर्यचारिषम्' इत्याद्युक्तरूपत्वं स्वाचार्यपर्यन्त्वं चाह - ஏறியெழில் பதம் इत्यादि गाधया । எழில்பதம்.

सा. सं - उक्तमधिकारार्थं गाधया सङ्गृह्णाति । ஏறி इति । सर्वसमृद्धिमत्पदमारुह्य -

मू - மெல்லாவுயிர்க்குமிதமுகக்கும், நாறுதுழாய் முடிநாதனை நண்ணியடிமையினம், கூறுகவர்ந்து குருக்கள் குழாங்கள் குறைகழற்கீழ்,

सा. दी - पदத்தை, परमपदத்தையென்றபடி. ஏறி, अर्चिरादिमार्गத்தால் आरोहित्து. எல்லாவுயிர்க்கும், सकलचेतनர்க்கும். இதமுகக்கும், हितத்தை உகந்திருக்குமவரான. நாறுதுழாய் முடிநாதனை, இது सर्वाकारविशिष्टत्वोपलक्षणम् - நண்ணி, கிட்டி, அடிமையில் நம் கூறுகவர்ந்த குருக்கள் குழாங்கள், भगवत्कैङ्कर्यத்தில் நம் अंशத்தை இவர்களுக் குமாகவேணுமென்று आशैப்பட்ட गुरूपरम्परैயினுடைய குறைகழல்கீழ், आभरणध्वनिயால் शब्दिக்கின்ற श्रीपादपद्मपरिसरத்தில்- அவர்களோடே-

सा. स्वा - பதம், परमपदத்தை- ஏறி, अर्चिरादिमार्गத்தாலேயடைந்து-எல்லாவுயிர்க்கும், समस्तात्माக்களுக்கும், இதமுகக்கும் 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' என்கிறபடியே अल्पव्याजरूपहितத்தையும் 'प्रेम्णा भूर्यैव मे भवेत् । कथञ्चिदुपकारेण कृतेनैकेन तुष्यति' என்கிறபடியே உகக்குமவனான- நாறுதுழாய்முடி, परिमलयुक्तமான திருத்துழாயை முடியிலேயுடையவனான. நாதனை, परमशेषिயை. நண்ணி, கிட்டி அடிமையில், कैङ्कर्यத்தில். நம் கூறு. நம்முடைய अंशத்தை, கவர்ந்து, இவர்களுக்குமிந்த दायभूतपुरुषार्थமுண்டாகவேணுமென்று आशैப்பட்ட 'எம்மீசர் விண்ணோர்பெருமான் மாசின் மலரடிக்கீழெம்மைச் சேர்விக்கும் வண்டுகளே' என்கிறபடியே நம் कृषिफलित्ததென்று உகந்து अभिनिवेशित्திருக்கிறவென்றபடி- குருக்கள், गुरुக்களுடைய குழாங்கள், समूहத்தினுடைய, குறைகழல்கீழ், शिरस्सु-

सा. प्र - எழில்பதமேறி, 'यं यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठते - तेन संपन्नो महीयत' इत्युक्तप्रकारेण सर्वाभीष्टाभिवर्धकं परमपदमधिरुह्य । எல்லாவுயிர்க்கும் இதமுகக்கும் 'सर्वस्य शरणं सुहृत् । समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति कश्चन' इत्युक्तप्रकारेण सर्वप्राणिहितपरम् - நாறுதுழாய்முடி நாதனை, दिव्यगन्धतुलसीदामालङ्कृतमकुटविराजितं स्वामिनं - நண்ணி, समीपं प्राप्य -அடிமையில் நம் கூறுகவர்ந்த, कैङ्कर्ये अस्मदंशं स्वीकृत्य भगवदिच्छानुगुणस्वेच्छया सर्वविधकैङ्कर्यं कृत्वेत्यर्थः குருக்கள் குழாங்கள், गुरुसमूहानां, குறைகழல்கீழ், मञ्जीरशब्दविशिष्ट पादारविन्दाधस्तात् -

सा. वि - सर्वाभीष्टवर्धकं पदम् । ஏறி आरुह्य । எல்லா உயிர்க்குமிதமுகக்கும், 'सर्वस्य शरणं सुहृत्' इत्युक्तप्रकारेण सर्वेषामात्मनां हितम् । உகக்கும், अभिलषितम् । நாறுதுழாய் முடி நாதனை நண்ணி, सुगन्धतुलसीदामालङ्कृतकिरीटं स्वामिनं संनिहितं प्राप्य । அடிமையில், कैङ्कर्ये - நம்கூறு अस्माकमंशम् । एतावत्पर्यन्तं त्यक्तं भागम् । கவர்ந்த, स्वीकृत्य । குருக்கள் குழாங்கள், गुरुसमूहानां -குறைகழல் கீழ், मञ्जीरविशिष्ट चरणारविन्दयोरधस्तात् -

सा. सं - सर्वेषामात्मनाम् । இதமுகக்கும், स्वरूपानुरूपपुरुषार्थसिद्धौ प्रियमाणं सुगन्ध-तुलसीदामालङ्कृतकिरीटवान्नाथसमीपं प्राप्य । அடிமையில் நம் கூறுகவர்ந்து, कैङ्कर्येऽस्मदंशं स्वीकृत्य गुरूणां सङ्घस्य मञ्जीरशिञ्जितवच्चरणारविन्दाधस्तात् । -

मू - மாறுதலின்றி மகிழ்ந்தெழும்போகத்துமன்னுவமே ॥ 29 ॥

सा. दी - கூடவென்று கருத்து, மாறுதலின்றி पुनरावृत्तिயில்லாதபடி. மகிழ்ந்தெழும்போகத்து, परिपूर्णब्रह्मानुभवத்தால் निरतिशयानन्दयुक्तராய், எழும்போகத்து, उपर्युपरि वर्धिக்கின்ற कैङ्कर्यसाम्राज्याभिवृद्धिயைப் பெறுகையாகிற भोगத்தில் स्थिरமாக वर्तिக்க பெறக் கடவோமென்கை ॥ 29 ॥

सर्वदेशसर्वकाल सर्वावस्थोचित सर्वविधभगवत्कैङ्कर्यமுமிங்கேயடியேன் मनस्ஸிலே-

सा. स्वा - निहितं मया पदमदक्षिणं लक्ष्यताम् என்கிற विमतस्थजयद्योतकமாக त्रय्यन्तस्थापकोऽयं दृढतरममुना तत्त्वदृष्टिश्च दृष्टा दिष्ट्या चादिष्टमेतद्दिशिदिशिप (ल) टहो डिण्डिमस्ताडनीयः । शुष्कोपन्यासशिक्षापटिमकटुरटद्वैरिविद्वत्करोटी कुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु என்கிறாப் போலே नित्यविभूतिயிலும் भगवता सबहुमानदत्तपादकटकादिशब्दங்களோடே கூடியிருக்கிற திருவடிகளுடைய अधोभागத்தில். அவ்விடத்திலேயிருந்து वन्दनादिपूर्वकமாகவென்றபடி- மாறுதலின்றி, पुनरावृत्तिயில்லாத, மகிழ்ந்தெழும், மகிழ்ந்தென்கிறத்துக்கு மன்னுவமேயென் கிறத்தோடே अन्वयம். எழும், उज्ज्वलமாகாநிற்கிற. गुरुपरम्परासन्निधानத்தாலே 'प्राप्स्यत्यसौ गुरुजनैः प्रथमादिरूढम्' என்கிறபடியே अत्यन्तभोग्यமான. भोगத்து, भोगத்திலே. सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविधकैङ्कर्य पर्यन्तपरिपूर्ण ब्रह्मानुभवानन्दத்திலே- மகிழ்ந்து, निरतिश्यप्रीतियुक्तராய். மன்னுவமே, प्रतिष्टितர்களானோமென்கை. ॥ 29 ॥

இப்படி गुणविग्रहविभूत्यादि विशिष्टब्रह्मणो भोग्यतयानुभवं पुरुषार्थமென்று சொன்னது கூடுமோ? गुणविभूत्यादिகளுக்கு भोग्यतया अनुभवமுண்டாகில் मुक्तனுக்கு ब्रह्मமென்றுமே भोग्यமென்கிறது विरोधिயாதோ? अनुभवமே पुरुषार्थமானால் कैङ्कर्यं पुरुषार्थமென்கிறது विरोधिயாதோ? कैङ्कर्यं अनुभवपरीवाहமாய்க் கொண்டு पुरुषार्थமென்னில் அந்த कैङ्कर्यं अच्छिद्रपंञ्च कालपरायणனான இவ்अधिकारिக்கு संसारदशैயிலும் सिद्धिத்திருக்கையாலே कैङ्कर्यத்திலே मुक्तिदशैயில் विशेषமுண்டோ? किंच, இப்पुरुषार्थनिरूपणமிங்கு व्यर्थமன்றோ? मुक्तனுக்கு இதினாலே -

सा. प्र -மாறுதலின்றி, विच्छेदराहित्येन- மகிழ்ந்தெழும்போகத்து மன்னுவமே, निरतिशयप्रीत्यावर्धमान कैङ्कर्याख्यभोगे दृढं प्रतिष्ठिता भवेमेत्यर्थः ॥ २९ ॥

तत्तन्मुक्तानां तत्तत्कैङ्कर्यचिकीर्षारूपश्रद्धाशतैः कल्लोलवत् प्रतिक्षणमुत्पाद्यमानकलहेन कर्बुरिताः एकस्मिन् क्षणे परिपूर्णानुभवः, अनन्तरक्षणे कैङ्कर्यचिकीर्षा, अनन्तरक्षणे च कैङ्कर्यकरणम्, पुनश्चानुभव इत्येवं निरन्तरं जायमानाः शुकशौनकनारदादि -

सा. वि - மாறுதலின்றி, विच्छेदराहित्येन । மகிழ்ந்து, प्रीत्या । எழும், वर्धमाने - போகத்து, भोगे कैङ्कर्याख्ये - மன்னுவமே, दृढं प्रतिष्ठास्यामः ॥ २९ ॥

सा. सं - மாறுதல் इत्यादि । विच्छेदराहित्येन प्रीत्यावर्धमानभोगे प्रतिष्टिता भवेमेत्यर्थः । परमपदेऽप्याचार्याधीनतयैव परिपूर्णानुभवजनित कैङ्कर्यमेव स्यादिति भावः ॥ २९ ॥

मू - अविश्रान्तश्रद्धाशतकलहकल्लोल (विषमा) कलुषा ममाविर्भूयासुर्मनसि मुनिसिद्धादिसुलभाः ।-

सा दी - प्रत्यक्षமாகத் தோன்றக்கடவதென்று प्रार्थिக்கிறார். अविश्रान्तेति मुनिसिद्धादिसुलभाः । मुनयः, श्वेतद्वीपवासिகள். सिद्धाः, नित्यसिद्धர் अनन्तगरुडविष्वक्सेनादिகள் - आदिशब्दத்தால் मुक्तं गृहीतम्-यद्वा, 'வைகுந்தத்தமரரும் முனிவரும்' என்று नित्यमुक्तர்க்கு सुलभங்களாய். अविश्रान्तेति-मम मनसि अविश्रान्तम्, अनुपरतम् । यच्छ्रद्धाशतं तत्तत्कैङ्कर्यविषयादरशतम् । अविश्रान्तशब्दं कलहविशेषणமாகவுமாம்- तस्यान्योन्यकलहाः, इदं मया कर्तव्यं-इदमपिमया कर्तव्यमित्येवंरूपங்களான. त एव कल्लोलसदृशाः, तैः कलुषाः-अन्यत्र शब्दवशात्क्रियमाणं -

सा. स्वा - प्रयोजनமில்லையே? என்கிற शङ्कैகளைப் परिहरियாநின்றுகொண்டு பெருவிடாய்ப்பட்டவன் तटाकத்தைக் கண்டு कृत्स्नतीर्थपानத்தை आशिக்கிறாப்போலே मुमुक्षुவான இவ்अधिकारी, सप्रकारமாக पुरुषार्थनिर्णयं பிறந்தவாறே मुक्तिदशैயில் संसारदशाद्यावृत्तமான नित्यரெல்லாரும் பண்ணும் कैङ्कर्यपरम्परैயெல்லாமிந்த क्षणத்திலே ஒருத்தனாகத்தானே பண்ணும்படி अनुभवமுண்டாக வேணுமென்று त्वरैயாலே प्रार्थिக்கிறாரென்று அருளிச் செய்கிறார்- अविश्रान्तेति । अविश्रान्तम्, अनुपरतम् । संसारदशैயில் शास्त्रवश्यतया परिमितप्रज्ञतया च ஒரு कैङ्कर्य श्रद्धै कैङ्कर्यसिद्धियாலே उपरतैயாய் வேறு श्रद्धैயுண்டாகிறாப்போலேயன்றிக்கே एकक्षणத்திலே தானே अनेकश्रद्धै वस्तुपरतैயாகாமால் उत्तरमभिवृद्धैயாகா நிற்கிற என்றபடி- श्रद्धाशतங்களுடைய, कैङ्कर्यं कर्तव्यமென்கிற त्वराशतங்களுடைய इदानीमेव पादसंवाहनं कर्तव्यम् - इदानीमेव छत्रचामरादिधारणवीजनं कर्तव्यमित्यादित्वरारूप श्रद्धाशतங்களுடைய. कलहங்களாகிற कल्लोलங்களாலே. कलुषाः, कालुष्यமாவது कैङ्कर्यங்களுக்கு ஒரு कैङ्कर्यத்தைப் பார்த்தால் பின்னையுமென்று उत्कृष्टமாக தோன்றுகை. एवम्भूतकालुष्य युक्ताः । मुनिसिद्धादिसुलभाः, 'வைகுந்தத்தமரரும் முனிவரும்'

सा. प्र - मुनीनां श्वेतद्वीपवासिप्रभृतिसिद्धानां च सुलभाः - शेषत्वनियाम्य त्वापहतपाप्मत्वादि स्वगुणविशिष्टब्रह्मविषयतया मधुसंसृष्टक्षीरवदत्यन्तं भोग्यतमाः अनुभवपरिवाहा अस्माकं भवेयुरित्याह- अविश्रन्तेत्यादिना यद्वा, अनवरतकैङ्कर्यचिकीर्षारूपश्रद्धा-

सा. वि - अविश्रान्तेति - मुनिसिद्धादिसुलभाः । मुनयः । श्वेतद्वीपवासिनः । सिद्धाः, नित्यसिद्धाः । अनन्तगरुडादयः । तेषां सुलभाः । अविश्रान्तं, अनवरतम् । यच्छ्रद्धाशतम्, तत्तङ्कैर्यवियादरशतम् । तस्य कलहाः, 'अहं पूर्वमहंपूर्वम्' इति परस्परस्पर्धाः कल्लोल इव प्रतिक्षणं जाय -

सा. सं - अथ परिपूर्णानुभवपरिवाहरूपाखिलकैङ्कर्याविर्भावं प्रार्थयते अविश्रान्तेति - उपर्युपरि वर्धमानाः - अहं सर्वं करिष्यामि अहं सर्वं करिष्यामीत्यादिरूपया श्रद्धा तस्याश्शतं, असंख्यात श्रद्धासमूहः - तदुभयोर्यः कलहः कलहा एव कल्लोलाः - तैर्विषमाः, दुरवगाहाः - मुनयः, शुकादयः । सिद्धा, श्वेतद्वीपवासिनः, आदिशब्देन नाथमुनि -

मू - मधुक्षीरन्यायस्वगुणविभवासञ्जनकनन्महानन्दब्रह्मानुभवपरिवाहा-

सा. दी - तिरोहितोत्कर्षமாம்- विषमाः என்று पाठமானபோதும் उत्तरोत्तरविषयश्रद्धातिशयेन विषमங்களென்கை- मधुक्षीरेत्यादि - मधुसंप्रक्तक्षीरन्यायத்தாலே அதாவது, मधुसंप्रक्तक्षीरं अत्यन्तं रस्यமாமே. அப்படியென்றபடி स्वगुणविभवासञ्जनेन, स्वस्य जीवात्मनो मुक्तस्य ये गुणविभवाः, अपहतपाप्मत्वादिसंबन्धः - तैरासञ्जनं, सम्मिश्रणम् एकமாகக் கலக்கை तेन कनत् आदीप्यमानम् - अत्यन्तभोग्यभूतமென்றபடி- जीवगुणसंबन्धाद्ब्रह्मगुणानां रसाधिक्यं भवति यन्महानन्दं, ब्रह्म, निरतिशयानन्दस्वरूपस्वभावं परं ब्रह्म श्रीमन्नारायणः तस्यानुभवपरिवाहाः, परिपूर्णानुभव जनितप्रीतिकारितकैङ्कर्यस्वरूपங்களாய்- परिवाहाः, கடைவாய்த்தல் बहुविधाः, छत्रचामर भृङ्गारपतद्ग्रहादिरूपेण नानाविधाः - ममाविर्भूयासुः, देहात् परतः प्रत्यक्षा भवेयुः என்று प्रार्थिக்கப்படுகிறதென்கை यद्वा, मम मनसि -

सा. स्वा - என்கிறபடியே- मुनयः, सनकादयः । श्वेतद्वीपवासिनो वा - सिद्धाः नित्याः । आदिशब्दத்தாலே मुक्तர்கள் ग्रहिக்கப்படுகிறார்கள். இவர்களுக்கு सुलभाः सुखलभ्याः । அவர்களாலே नित्यं भोग्यமாகப் பண்ணப்படுகிற என்றபடி- स्वगुणेति, स्वेति ब्रह्मपरम् - स्वस्य गुणाः, वात्सल्यादयः । विभवाः, विभूतयश्च-तेषामासञ्जनेन, संसर्गेण- कनत्, अत्यन्तभोग्यतया देदीप्यमानम्- स्वत एव महानन्दरूपं ब्रह्म 'स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठ स्वातन्त्र्यं भवति च न चान्या हितगुणम्' என்கிறபடியே स्वगुणத்தாலே வந்த भोग्यतातिशयं गुणिக்கு गुणமாகையாலேயும் गुणविभूत्यादिभोग्यத்தை गुणी भोग्यताशेषமாகையாலே स्वतन्त्रब्रह्मव्यतिरिक्त भोग्यान्तरமில்லாமையாலே ब्रह्मமே भोग्यமென்கிறத்துக்கும் विरोधமில்லையென்று கருத்து- एवं भूतस्य जन्मानुभवस्य परिवाहाः, कैङ्कर्यविशेषाः बहुविधाः, अनन्तप्रकाराः - मम मनसि आविर्भूयासुः, करणसापेक्षமானால் करणानुसारத்தாலே किञ्चिद्विलंबादिसंभावितम् । அன்றிக்கே தானே स्वत एवाविर्भविக்கக்கடவதுகளென்றபடி. இவ்अधिकारिக்கு இப்படிப்பட்ட -

सा. प्र - शतैरहं प्रथमिकायामत्यन्तं कलहायमानाः? मुनिसिद्धादि सुलभाः मधुसंसृष्टक्षीरवदत्यन्तभोग्यतमा ब्रह्मगुणविविष्टब्रह्मानुभवपरिवाहा इदानीं मम मनस्याविर्भूयासुः -

सा. वि - मासा इत्यर्थः तैः कलुषाः मिश्राः । विषमा इति पाठान्तरम् । बहुविधाः, मधुक्षीरन्यायेन । मधुसंसृष्टक्षीरवत्स्वगुणविभवासञ्जनेन, स्वानन्दादिगुणसंबन्धेन । कनत्, अत्यन्तभोग्यं यन्महानन्दं, ब्रह्म - तस्यानुभवः तद्विषयानुभवः तस्य परिवाहाः अभिवृद्धयः अनुभवातिशयेन -

सा. सं - प्रभृतय उच्यन्ते - मधुमिश्रक्षीरन्यायेन स्वस्य मुक्तात्मनो गुणानां ज्ञानानन्दादीनां विभवः, ऐश्वर्यम् । तदासञ्जनेन, जीवसंबन्ध्यानन्दसंमिश्रणेन - कनत्, अधिकं शोभमानः । महान्निरतिशयः; आनन्दो यस्य तस्य ब्रह्मणो योऽनुभवः तत्परिवाहरूपाणि कैङ्कर्याण्याविर्भवेयुः ।

मू - बहुविधाः ।। ४९ ।।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

श्रीमद्रहस्यत्रयसारे परिपूर्णब्रह्मानुभवाधिकारो द्वाविंशः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

सा. दी - आविर्भूयासुः என்கை प्रथमपक्षத்தில் मोक्षं प्रार्थितமாய் இப்पक्षத்தில் प्राप्यत्वरासिद्ध्यर्थமாக फलस्वरूपத்தில் विशदज्ञानं प्रार्थितமாம் ।। ४९ ।।

इति श्रीसारदीपिकायां परिपूर्णब्रह्मानुभवाधिकारो द्वाविंशः ।।

सा. स्वा - कैङ्कर्यத்தில் प्रार्थनातिरेकமே இவ்अधिकारத்தில் फलव्युत्पादनத்துக்கு प्रयोजनமென்று கருத்து ।। ४९ ।।

इति श्रीमदुत्तरसारास्वादिन्यां परिपूर्णब्रह्मानुभवाधिकारो द्वाविंशः ।।

सा. प्र - रित्यादिना । अविश्रान्तेत्यादिना ।। ५० ।।

इति श्रीसारप्रकाशिकायां परिपूर्णब्रह्मानुभवाधिकारो द्वाविंशः ।।

सा. वि - प्रीत्या बहुविधकैङ्कर्याणीति बुद्धिमुत्पाद्य कैङ्कर्याणि कार्यन्ते - अतः प्रीतिकारितकैङ्कर्याण्येव परिवाहा इत्यध्यवसीयन्ते - मम मनसि आविर्भूयासुः, विशदं भासन्ताम् । प्राप्य त्वरातिशयसिद्धय इति भावः ।। ४९ ।।

इति श्रीसारविवरिण्यां परिपूर्णब्रह्मानुभवाधिकारो द्वाविंशः ।।

सा. सं - इत्थं प्रार्थितसिद्धि कैङ्कर्यान्तिमाविर्भविन आद्यापि मनोवृत्तिप्रतिघातकाभावेन मनसीदानीं माविर्भूयासुरितीव प्रार्थनम् ।। ४९ ।।

इति श्री सारप्रकाशिकासङ्ग्रहे परिपूर्णब्रह्मानुभवाधिकारो द्वाविंशः ।।

मू - सन्दृष्टस्सारवाग्वित् स्वपरनिशितधीः --

सा. दी - இனி இந்த अर्थानुशासनरूपभागத்தில் अधिकारार्थங்களையெல்லாமொரு श्लोकத்தால் अनुक्रमिத்தருளுகிறார். सन्दृष्ट इति-सन्दृष्टः, अयं संसारि चेतनः प्रथमं सन्दृष्टः प्रथमगुरुकृपाकटाक्षितः-उपोद्धाताधिकारार्थ उक्तः सारवाग्वित्, रहस्यत्रयरूपसारज्ञः - सारनिष्कर्षाधिकारार्थः । स्वपरनिशितधीः - स्वविषया परमात्मविषया निशिता -

सा. स्वा - இப்படி இவ்अधिकारान्तग्रन्थसम्भवத்தாலே उपपादिத்த अर्थं கூடுமோ? लोकத்தில் जनங்களிப்படி उपपादितமாயிருக்கச் செய்தேயும் कुतर्कங்களாலே व्यामोहं வந்து त्रिवर्गनिरतராய் अनधिकारिகளாகவிருக்கையாலே निरूपणं व्यर्थமாக प्रसङ्गिயாதோ? என்ன लोकத்திலே प्रायेण जनங்கள் त्रैवर्गिகர்களானாலும் 'मुक्तैश्वर्यान्तसम्पन्निधिरपि भविता कश्चिदित्थं विपश्चित्' என்கிற न्यायத்தாலே कुयुक्तिகளிலகப்படாதே எப்படியும் मोक्षपर्यन्तानुभवं பெறும்படி ஒரு मुख्याधिकारिसंभावितனென்று उपोद्धाताधिकारத்திலே. 'मुक्तैश्वर्यान्तसंपन्निधिरपि कश्चिदित्थं विपश्चित्' என்று भाविயாக निर्दिष्टமான अर्थத்தை 'அவாவற்று வீடு பெற்ற' என்கிறபடியே वर्तमानமாக சொல்லாநின்று கொண்டு उक्ताधिकारार्थங்களை क्रमेण सङ्ग्रहिக்கிறார். सन्दृष्ट इति - एकः, कश्चित् मुख्याधिकारी । सर्वेषामेतन्न सुलभमिति भावः-सन्दृष्टः, भगवता कटाक्षितः - प्रथमगुरुकृपागृह्यमाण इत्युपोद्धाताधिकारार्थस्सूचितः - सारवाग्वित्, सारशब्दरूपरहस्यत्रयवित् - सारनिष्कर्षाधिकारार्थ उक्तः - स्वपरनिशितधीः, स्वश्च स्वश्च स्वौ - स्वौ च परश्च स्वपरे, प्रथमस्वशब्दस्स्वात्ममुखेन चेतनवचनः - द्वितीयस्वशब्द आत्मीयवचन -

सा. प्र - एवं तत्त्वहितपुरुषार्थान् रहस्यत्रयप्रतिपादितानुपदिश्यतोऽधिकमुपदिष्ट स्थिरीकरणमन्त रेणोपदेश्याभावादुपोद्धाताधिकारमारभ्य परिपूर्णब्रह्मानुभवाधिकारपर्यन्तानामधिकाराणामर्थं सङ्कल्य्य दर्शयन्नुपदेशं निगमयति - सन्दृष्ट इत्यादिना - सन्दृष्टः, सदाचार्येण भगवत्कैङ्कर्य योग्यस्स्यादित्यवलोकितः । तद्धेतुभूतजायमाणकालीन भगवत्कटाक्षविषयभूतश्चेत्यर्थः - एतेनोपोद्धाताधि कारस्सङ्गृहीतः - सारवाग्वित्, सकलशास्त्रसारभूतं रहस्यत्रयं जानन् । एतेन सारनिष्कर्षाधिकारस्संङ्गृहीतः - स्वपरनिशितधीः, स्वपरविषयसंयङ्ज्ञानवानित्यर्थः चिदचिदीश्वराणां निष्कृष्टस्वरूपस्य प्रधानप्रतितन्त्रार्थ-

सा. वि- अनुशासनभागाधिकारार्थनिकेन श्लोकेन सङ्गृह्णाति - सन्टृष्ट इति - अयं संसरन् चेतनः-सन्दृष्टः प्रथमं गुरुकटाक्षेण विषयीकृतः - अयमुपोद्धाताधिकारार्थः - सारवाग्वित्, रहस्यत्रयसारज्ञः - सारनिष्कर्षधिकारार्थः - स्वपरनिशितधीः, शरीरशरीरिभावादि -

सा. सं अथ बुद्धिसौकर्याय द्वाविंशत्यधिकाराथनिकेन श्लोकेन सङ्गृह्णाति- सन्दृष्ट इत्यादि- सन्दृष्ट इत्यनेन विधिपरिणतिभेदाद्वीक्षित इत्युपोद्धाताधिकारार्थस्य - सारवाग्विदित्यनेन सारनिष्कर्षाधिकारार्थस्य, स्वपरनिशितधीरित्यनेन प्रधानप्रतितन्त्राधिकारार्थपञ्चकाधि -

मू - सङ्गजिन्नैकसंस्थः, स्पष्टोपायोऽतिखिन्नस्सपरिकरभरन्यासनिष्पन्नकृत्यः । -

सा. दी - निश्चिता धीर्यस्य सः - तेन प्रतितन्त्रार्थपञ्चकतत्त्वत्रय परदेवता पारमार्थ्याधिकारार्थास्सूचिताः- सङ्गजित्, ऐश्वर्य कैवल्यानभिलाषःतेन मुमुक्षुत्वाधिकारार्थः । नैकसंस्थः, अधिकारद्वयज्ञानवान्- अधिकारविभागाधिकारार्थः - स्पष्टोपायः, स्पष्टत्वेन निर्णीतः उपायविभागाधिकारार्थः - अतिखिन्नः, सञ्जाताकिञ्चनत्वानन्य गतित्ववान् - प्रपत्तियोग्याधिकारार्थः - सपरिकरभरन्यासनिष्पन्नकृत्यः, सपरिकरशब्देन परिकरविभागाधिकारार्थः - भरन्यासशब्देन साङ्गप्रपदनाधिकारार्थः- निष्पन्नकृत्यशब्देन कृतकृत्याधिकारार्थस्सूचितः -

सा. स्वा - स्सन् स्वस्य भोग्यतयाभिमतचेतनपरः । परः, ईश्वरः । तेषु निशिता निश्चिता धीर्यस्य सः - अनेन प्रधानप्रतितन्त्रार्थपञ्चकतत्त्वत्रयपरदेवतापारमार्थ्याधिकारार्थ उक्तः - सङ्गजित्, सङ्गो विषयसङ्गः - तज्जित्, मुमुक्षुत्वाधिकारार्थ उक्तः - नैकसंस्थः - नैकेषु, अनेकेषु । भक्ति प्रपत्त्यादिभेदेषु संस्थानिष्ठाऽधिकारः यस्य सः- अधिकारविभागाधि कारार्थ उक्तः - स्पष्टोपायः - स्पष्टो उपायो यस्य सः - उपायविभागाधिकारार्थ उक्तः । अतिखिन्नः, उपायान्तरानधिकारेण शोकाविष्टः- प्रपत्तियोग्याधिकारार्थ उक्तः - सपरिकरेण भरन्यासेन निष्पन्नं कृत्यं यस्य सः । सपरिकरभरन्यास निष्पन्नकृत्यः- परिकरेति परिकरविभागाधिकारार्थः भरन्यासेति साङ्गप्रपदनाधिकारार्थः -

सा. प्र - पञ्चकतत्त्वत्रय परदेवतापारमार्थ्याधिकारे निर्णीतत्वात्स्वपरनिशितधीरित्यनेनाधिकार चतुष्टयार्थस्सङ्गृहीतः- सङ्गजिदित्यनेन मुमुक्षुत्वाधिकारस्सङ्गृहीतः नैकसंस्थः, एकत्र भक्तिप्रपत्त्योरन्य तरस्मिन्नेव संयक्स्थितः- कर्तव्यताज्ञानं यस्य सः । एकसंस्थस्स न भवतीति नैकसंस्थः - अनेकाधिकारज्ञ इत्यर्थः । एतेनाधिकारविभागाधिकारार्थस्सङ्गृहीतः - स्पष्टोपाय इत्युपायविभागाधिकारार्थः सङ्गृहीतः - अतिखिन्नः, अकिञ्चनत्वे सत्वे सत्यनन्यगतिकात्वादित्यर्थः - एतेन प्रपत्तियोग्याधिकारार्थस्सङ्गृहीतः- सपरिकरभरन्यासनिष्पन्नकृत्य इत्यनेन परिकरविभागाधिकारसाङ्ग -

सा. वि- रूपेण स्वपरज्ञानवान् - अनेन प्रतितन्त्राधिकारार्थपञ्चकतत्त्वत्रयपरदेवता पारमार्थ्यनिर्णयाधिकारास्सङ्गृहीताः - सङ्गजित्, ऐश्वर्यकैवल्याभिलाषजित् - मुमुक्षुत्वाधिकारः - नैकसंस्थः । नैका, अनेका । संस्था, अधिकारो यस्य स तथोक्तः । - अत्र ज्ञानद्वारा अनेकाधिकारवत्वं विवक्षितम् । एकस्य विरुद्धानेकाधिकारासंभवात् । अधिकारविभागार्थः । स्पष्टोपायः, उपायविभागाधिकारार्थः - अतिखिन्नः, शोकवान् । प्रपत्तियोग्याधिकारार्थः - सपरिकर भरन्यासनिष्पन्नकृत्यः- अत्र परिकरविभागाधिकारसाङ्गप्रपदनाधिकारकृतकृत्यत्वाधिकारार्था विवक्षिताः-

सा. सं - कारतत्त्वत्रयाधिकारपरदेवतापारमार्थ्याधिकारार्थानां, सङ्गजिदित्यनेन मुमुक्षुत्वाधिकारार्थस्य, अनेकस्संस्था यस्य सः नैकसंस्थः इत्यनेन अधिकारिविभागाधिकारार्थस्य, स्पष्टोपाय इत्यनेन उपायविभागाधि कारार्थस्य, अतिखिन्न इत्यनेन प्रपत्तियोग्याधिकारार्थस्य, परिकरेत्यनेन परिकरविभागाधिकारार्थस्य, भरन्यास इत्यनेन साङ्गप्रपदनाधिकारार्थस्य, निष्पन्नकृत्य -

मू - स्वावस्थार्हं सपर्याविधिमिह नियतं व्यागसं क्वापि बिभ्रन्निर्मुक्तस्थूलसूक्ष्मप्रकृतिरनुभवत्यच्युतम् -

सा. दी - स्वावस्थार्हम्, स्वनिष्ठाभिज्ञानाधिकारार्थः - सपर्याविधिम्, उत्तरकृत्याधिकारार्थः - सपर्या, काष्ठभूतभागवतकैङ्कर्यरूपपुरुषार्थकाष्ठाधिकारार्थश्च- इह नियतं, शास्त्रीयनियमनाधिकारार्थः - व्यागसम्, अपराधपरिहाराधिकारार्थः - क्वापि बिभ्रदित्यनेन स्थानविशेषाधिकारार्थः - निर्मुक्तस्थूलसूक्ष्म- प्रकृतिरित्यनेन निर्याणाधिकारगतिविशेषाधि-

सा. स्वा - निष्पन्नकृत्य इति कृतकृत्याधिकारार्थ उक्तः - स्वावस्थार्हम्, स्वनिष्ठानुगुणं - स्वनिष्ठाभिज्ञानाधिकारार्थ उक्तः - सपर्याविधिं, कैङ्कर्यविधिम्- उत्तरकृत्याधिकारार्थ पुरुषार्थकाष्ठाधिकारार्थश्चोक्तः इह, बद्धदशायां - नियतं, शास्त्रेण नियतम् - शास्त्रीयनियमनाधिकारार्थ उक्तः- व्यागसम्- अपराधरहितम् - अपराधपरिहाराधिकारार्थ उक्तः- एवंभूतं सपर्याविधिं -क्वापि, स्वयंव्यक्तादि क्षेत्रे स्थित्वेति शेषः- बिभ्रत्स्थानविशेषाधिकारार्थ उक्तः -निर्मुक्तास्थूला सूक्ष्मा च प्रकृतिःयस्य सः । निर्मुक्तस्थूलसूक्ष्मप्रकृतिः स्थूलेत्यनेन निर्याणाधिकारार्थ उक्तः सूक्ष्मेत्यनेन गतिविशेषाधिकारार्थ उक्तः-एकः कश्चिदुपपत्त्यानुसन्धानं विना उपदेशमात्रेण अनुष्ठान पर्यन्ततत्त्वहितपुरुषार्थनिर्णयक्षमतया मुख्याधिकी यादृच्छिक सुकृतवशादेवंभूतस्सन् - अच्युतं, विभूति-

सा. प्र - प्रपदनकृतकृत्याधिकारार्थस्सङ्गृहीतः - स्वावस्थार्हमिति स्वनिष्ठाभिज्ञानार्थसङ्ग्रहः - सपर्याविधि मित्युत्तरकृतकृत्याधिकारपुरुषार्थकाष्ठाधिकारयोरर्थसंङ्ग्रहः - इह नियतं यावच्छरीरं नियतम् - एतेन शास्त्रीयनियमनाधिकारार्थस्संगृहीतः - व्यागसमित्यपराधपरिहाराधिकारार्थसङ्ग्रहः निर्मुक्तस्थूलसूक्ष्म प्रकृतिरिति निर्याणाधिकारगतिविशेषाधिकारयोरर्थसङ्ग्रहः अनुभवत्यच्युतं नित्यमिति परिपूर्णानुभवादि-

सा. वि - स्वावस्थार्हम्, स्वनिष्ठाभिज्ञानाधिकारार्थः - सपर्याविधिमित्युत्तरकृत्याधिकारार्थः पुरुषार्थकाष्ठाधिकारार्थश्च विवक्षितः - नियतमिति शास्त्रीयनियमनाधिकारार्थः - व्यागसमित्यपराध परिहाराधिकारार्थः - क्वापि बिभ्रदिति स्थानविशेषाधिकारार्थः निर्मुक्तस्थूलेतिनिर्याणाधिकारार्थः सूक्ष्मप्रकृतिरिति गतिविशेषाधिकारार्थः - अनुभवत्यच्युतमिति परिपूर्णब्रह्मानुभवादि -

सा. सं - इत्यनेन कृतकृत्याधिकारार्थस्य, स्वावस्थार्हमित्यनेन स्वनिष्ठाभिज्ञानाधिकारार्थस्य, सपर्यामित्यनेन उत्तरकृत्याधिकारार्थस्य, पुरुषार्थकाष्टाधिकारार्थस्य च, इहविधिनियतमित्यनेन शास्त्रीय नियमनाधिकारार्थस्य, व्यागसमित्यनेन विगतागसमित्यर्थः तेन अपराधपरिहाराधिकारार्थस्य, क्वापि बिभ्रदित्यनेन स्थानविशेषाधिकारार्थस्य, निर्मुक्तप्रकृतिरित्यनेन निर्याणाधिकारार्थस्य, निर्मुक्तस्थूल सूक्ष्मप्रकृतिरित्यनेन गतिविशेषाधिकारार्थस्य, शेषेण परिपूर्णब्रह्मानुभवाधिकारार्थस्य च सङ्ग्रहः अना -

मू - नित्यमेकः ।। ५० ।।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे अर्थानुशासनभागः प्रथमः ।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

सा. दी-कारार्थ उक्तः-नित्यमच्युतमनुभवतीत्यनेन परिपूर्णब्रह्मानुभवाधिकारार्थस्सूचितः ।। ५० ।।

इति श्रीवाधूलकुलतिलक श्रीलक्ष्मणाचार्यकृपापात्रभूतस्य पेरियप्प देशिककृपालब्धोभयवेदान्तस्य श्रीभाष्य श्रीनिवासकृतिषु श्रीसारदीपिकायां अर्थानुशासनभागः प्रथमः ।

सा. स्वा - द्वयादिविशिष्टं भगवन्तं - नित्यं, सदानुभवति - वर्तमानसामीप्ये वर्तमानव्यपदेशः - यद्वा पुण्डरीकक्षत्रबन्धु श्रीमच्छठकोपयोगि नाथमुनिप्रभृतिरनुभवतीत्यर्थः - न सर्वेऽपीति भावः - अनेन परिपूर्णब्रह्मानुभवाधिकारार्थश्चोक्तः ।। ५० ।।

इति श्रीमदात्रेय कृष्णार्यतनूजेन तच्चरणारविन्दचञ्चरीकेण श्रीमद्वेदान्त- रामानुजयोगीन्द्रमहादेशिक कटाक्षलब्धवेदान्तरहस्य जातेनगोपालदासेन विरचितायामुत्तर सारास्वादिन्याम्अर्थानुशासन भागः । प्रथमः

सा. प्र - कारार्थसङ्ग्रहः । अर्थानुशासनभागः, द्वाविंशत्यधिकाराणां ये अर्था उक्तास्तेषां प्रमाणानुगुण्येन शाशकश्शिक्षको भाग इत्यर्थः ।। ५१ ।।

इति श्रीभारद्वाजकुलतिलकस्य संस्कृतद्रामिडभेदभिन्नवेदान्तविद्याविहार भूमेः पर्याय भाष्यकारस्य श्रीनिवासाचार्यस्य पुत्रेण श्रीनिवासेन विरचितायां सारप्रकाशिकायांम् अर्थानुशासनभागः प्रथमः ।

सा. वि - कारार्थ इति द्वाविंशत्यधिकारार्थास्सङ्गृहीताः ।। ५० ।।

इति श्रीशैलवंशतिलक श्रीवेङ्कटसोमसुत्वनस्सुतेन श्रीवासदेशिककृपालब्धसारार्थज्ञानेन श्रीनिवासेन लिखितायां श्रीसारविवरिण्याम् अर्थानुशासनभागः प्रथमः ।।

सा.सं - प्रकृत्यर्थकं नित्यपदम् । एकपदस्य आविर्भूतस्वभावान्यथाभावरहितस्सन् इत्यर्थः ।। ५० ।।

इति श्रीमद्वरदराजवेदशिरोमणिवरकरुणैकभाजनेन श्रीमद्घनगिरिकुलतिलक श्रीनिवासगुरुवर करुणैकलब्ध श्रीमच्छारीरकभाष्यश्रीरहस्यत्रयसारार्थयादात्म्यविज्ञानेन श्रीमद्वरददेशिककटाक्षैकलक्ष्यतामुपगेन कविकथक कण्ठीरवचरणयुगल विन्यस्तभारेण वेदान्त ० यतिराजानुकम्पासंलब्ध तुर्याश्रमधर्मेण परकालाभिधानयतिना प्रणीते श्रीमद्रहस्यत्रयसारसारप्रकाशिकासंङ्ग्रहे अर्थानुशासन भागः प्रथमः ।।

।। श्रियै नमः ।।

।। श्रीमते श्रीहयवदनपरब्रह्मणे नमः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

## ।। अथ स्थिरीकरणभागे सिद्धोपायशोधनाधिकारः ।।

मू - युगपदखिलं -

सा.दी-இப்படி अर्थानुशासनभागं व्यारव्यात மாயிற்று - अनन्तरமிவ் अर्थங்களினுடைய स्थिरीकरण-

सा.स्वा - सत्तर्कमन्थाचलमन्थनेन समृद्धतामागममौलि वार्धेः ।
उपायतत्त्वार्थसुधां प्रयच्छन् सत्भस्त्रया मौलिगुरुस्स जीयात् ।।

இப்படி अर्थानुशासनभागத்தில் उपदिष्टार्थங்கள் கூடுமோ? संबन्धादेवेश्वरன் रक्षकனாகையாலே स्तनन्धयप्रायனானவிவ் अधिकारिக்கு मोक्षार्थமாக कर्तव्यமென்றொன்றுண்டானதாகச் சொல்கிறது தாய்முலைப்பாலுக்கு கைக்கூலிபோலே असङ्गतமன்றோ? "ये नाथवन्तो हि भवन्ति लोके तानात्मकर्माणि समारभन्ते । तेषां हि कार्येषु भवन्ति नाथाश्शैब्यादयोराम पथाययातेः" इत्यादिप्रमाणமும் विरोधिயாதோ? तत्त्वत्रयचिन्तनाधिकारத்தில் "सर्वावस्थैயிலும் सपत्नीकனாயிருக்கு" மென்று பிராட்டிக்கு विशेषणतया उपायतया स्वयं சொன்னதுவும் असङ्गतமன்றோ? பிராட்டி उपाय दशैயிலே उपलक्षणभूतै யென்றன்றோ सम्प्रदायम्?

सा.प्र - एवं प्रमाणानुगुण्येन तत्त्वहितपुरुषार्थान्रहस्यत्रय प्रतिपाद्यतया प्रदर्श्य परिपूर्णानुभवं प्रत्यव्यवधानेन जनकतया हिततमभूत सिद्धोपायविषये तत्प्रसादनसाध्योपायविषये -

सा.वि - स्थिरीकरणभागार्थचिन्तनं मम मानसम् । चरीकरोतु करुणापरिणाम बलाद्गुरोः ।। इत्थं प्रपन्नस्य ज्ञातव्यार्थास्सिंयगनुशिष्टाः - इदानीमुपायविषये उपाय प्रभाव -

सा.सं - एवं निरूपितेषु मुमुक्षुज्ञातव्येषु प्रधानभूत सिद्धोपायविषये साध्योपायविषये -

सा. दी - रूपமான द्वितीयभागं நடக்கிறது.

अथोपरितनैरस्य चतुर्भिरधिकारतः ।
स्थिरीकरणभागस्तु द्वितीयस्साधु वर्ण्यते ।।

இதில் நான்கு अधिकारங்கள் - அவையாவன - सिद्धोपायशोधनाधिकारமும், साध्योपायशोधनाधिकारமும், उपायप्रभावव्यवस्थाधिकारமும் उपायप्रभावरक्षाधिकारமுமென்று இவற்றில் -

सा.स्वा - பிராட்டிக்கு उपायत्वं சொன்னால் अनन्योपायत्वமும் विरोधिயாதோ? चरमश्लोकத்திலே एकன் उपायமென்கிறதுவும் विरोधिயாதோ? प्रपत्ति भरसमर्पणरूपै யென்று निष्कर्षिத்ததுதான் கூடுமோ? ''तदेकोपायता याच्ना। त्वमेवोपायभूतो मे भव प्रपत्ति विश्वास'' इत्यादिप्रमाणसंप्रदायங்களாலே प्रार्थनाविश्वासादिகள் प्रपत्तिயென்று சொல்லுகிறது विरोधिயாதோ? प्रपत्तिக்கு आनुकूल्यादिகள் अङ्गங்களென்கிறதுவும் असङ्गतமன்றோ? அப்போது ''प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यत'' इत्यादि प्रमाणं विरोधिயாதோ? प्रपदनं सर्वाधिकारமென்று சொன்னதுதான் கூடுமோ? இதுவும் वेदान्तविहितமானபடியாலே त्रैवर्णिकनियतत्वं சொல்லவேண்டாவோ? शूद्राधिकारமாகில் अपशूद्राधिகரணமும் विरोधिயாதோ? उपायविभागाधिकारத்திலே भक्तियोगமென்றொரு मुख्योपायந்தான் சொன்னது கூடுமோ? அது स्वरूपविरुद्धமன்றோ? पुरुषार्थकाष्ठैயிலே शूद्रभागवतविषयத்தில் व्यवस्थित वृत्ति சொன்னதுவும் असङ्गतமன்றோ? ''न शूद्रा भगवद्भक्ता विप्रा भागवता स्मृताः'' इत्यादिप्रमाणங்களாலே भागवतत्वமடியாக ब्राह्मण्यं சொல்லுகிறது विरुद्धமாகாதோ? शास्त्रीयनियमनाधिकारத்தில் नित्यनैमित्तिकमवश्यं कर्तव्यं என்று சொன்னதுதான் கூடுமோ? ''सर्वधर्मान्परित्यज्य'' என்றும் ''त्यज धर्ममधर्मं च - त्यज सत्यानृते अपि इत्यादि प्रमाणங்களாலே இவ் आधिकारिக்கு सर्व धर्म स्वरूपत्यागं சொல்கிறது विरोधिயாதோ? अपराधपरिहाराधिकारத்தில் प्रपत्तिக்கு प्रारब्धनिवर्तकत्वந்தான் சொன்னது கூடுமோ? அப்போது प्रारब्धफलமான दुःखानुभवं प्रत्यक्षसिद्धமாகத்தோற்றுகிறது विरोधिயாதோ? ஆகையால்

सा.प्र - तत्प्रभावविषये च मन्दमतीनां व्यामोहजनक तत्तदाचार्यवचनानां तात्पर्यं प्रदर्शयिष्यन् तत्तद्वाक्य जनितव्यामोहप्रदर्शनपूर्वकं व्यामोहनिवृतिप्रकारं च प्रदर्शयितुं प्रवृत्तसिद्धोपायस्य सर्वप्रधानत्वात्प्रथमं तद्विषयव्यामोहं निवर्तयितुं तत्स्व -

सा.वि - विषये च तत्तत्पूर्वाचार्याणां तत्तंदशप्राधान्यप्राशस्त्य परैर्वाक्यैः मन्दमतीनामन्यथा प्रतीतिर्जायत इति तद्वारणाय स्थिरीकरणभाग आरब्धः - यद्यपि तत्तत्प्रकरण एव तत्तदनुबन्धिविरुद्धार्थाः प्रतिक्षिप्ताः । तथापि शङ्काबाहुल्यात्वार्यां तत्रविशेष निराकरणाभावात् प्रकरणप्रतिपाद्यार्थ बहुग्रन्थसन्दर्भेण कलुषितत्त्वेन सुखप्रतिपत्त्यभावाच्च पृथगारब्ध इति मन्तव्यम् - तत्रोपायो द्विविधः- सिद्धोपायस्साध्योपायश्चेति - तत्र सिद्धोपायस्य -

सा.सं - तन्निष्ठप्रभावाधिक्यविषये तन्न्यूनताविषये च संभावितमतिकालुष्यपरिहरणेन निरूपितार्थ स्थिरीकरणार्थमधिकारचतुष्टयमाक्षेपिक्या सङ्गत्या आरभमाणः प्रथममुपजीव्यं -

मू - प्रत्यक्षेण स्वतस्सततं विदन्निरवधिदयानित्यो (दिव्यो) दन्वानशक्यविवर्जितः ।

सा.दी - प्रधानமாகையால் सिद्धोपायशोधनं प्रथमமாகிறது. "अथ तत्र त्रयोविंशे सिद्धोपायस्य शेषिणः । शोधनं क्रियते तैस्तैः प्रकारैस्साधुवर्णितैः" அதில் முந்த सिद्धोपायस्वरूपத்தை सङ्क्षेपेण காட்டுகிறார் आदिश्लोकத்தால் युगपदिति - सर्वज्ञस्सर्वशक्तिस्सहजकारुणिकः श्रियः पतिर्नारायणस्सिद्धोपाय इति निष्कृष्टोऽर्थः - अखिलम्, उभय विभूतिगतமான वस्तुக்களை.

सा. स्वा - "सन्दृष्टस्सारवाग्वित्" इति श्लोकத்தில் "अनुभवत्यच्युतं नित्यमेकः" என்று निष्कर्षिக்கைக் கூடுமோ? इत्यादि बहुविधशङ्कैகள் பிறக்க अधिकारचतुष्टयात्मकस्थिरीकरणभागத்தாலே समस्तशङ्कैகளையும் सत्तर्कानुगृहीत श्रुत्यादिप्रमाणवर्गத்தாலே परिहरித்து अर्थानुशासन भागोपदिष्टार्थस्थिरीकरणं பண்ணக்கடவராய் प्रथमं सिद्धोपायं प्रधानமாகையாலே तन्मुखेन அந்த शङ्कैகளை सिद्धोपाय शोधनाधिकारத்தாலே परिहरिக்கடவராய் "इष्टं हि विदुषां लोके समासव्यासधारणम्" என்கிற न्यायத்தாலே अधिकारार्थத்தை सङ्ग्रहिக்கிறார் - युगपदिति - अखिलं वस्तु जातम् - युगपत्, एकदैव न तु क्रमेण - सततं, न तु कदाचित् - स्वतः, नतु तपः प्रभृतिकारण वशेन - प्रत्यक्षेण, न त्वनुमानादिना - विदन्, "यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः । तं प्रणम्य हरिं शास्त्रं न्यायतत्वं प्रचक्ष्महे" इति श्रीमन्नाथमुनिप्रणीतश्लोकार्थो व्यज्यते - अनेन स्वदासजन समस्तसांसारिकदुःखदर्शित्वमुक्तम् - निरवधीति - स्वत इत्येतत् काकाक्षिन्यायेन उभयत्रान्वीयते - स्वतः निरवधिः दया दिव्योदन्वान्, दिव्यसमुद्रः - निरवधीति प्रसिद्ध समुद्रव्यतिरेकस्सूच्यते - अनेन स्वत एव रक्षणोपयुक्त परमकारुणिकत्वं व्यज्यते -अशक्यविवर्जितः, स्वसङ्कल्पितार्थस्य स्वेनापि प्रति -

सा.प्र - रूपमाह - युगपदखिलमित्यादिना । अकिञ्चनानामनन्यगतीनाम् उपायान्ताभावं गर्भजन्मजरामरणचक्रपरिभ्रमणेन दुःखाकुलत्वं च जानन्मोक्षप्रदानशक्तो निरवधिकसहजकारुण्य -

सा.वि - प्राधान्यात्प्रथमं सिद्धोपायानुबन्धिशङ्कां परिहरिष्यन् अधिकारार्थंश्लोकेन सङ्गृह्णाति - युगपदिति सर्वज्ञस्सर्वशक्तिः परमकारुणिकः श्रिया सह सर्वनियन्ता सर्वरक्षकः पुरुषोत्तमस्सिद्धोपाय इति निष्कृष्टार्थः "यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः "इति सर्वज्ञलक्षणं तदेतदशिसन्धयोक्तुं युगपदखिलमिति - स्वतः, योगजधर्मप्रत्यासत्त्याद्युपाधिमन्तरेण-प्रत्यक्षेण, अपरोक्षरूपज्ञानेन - नतु चक्षुरादिना" पश्चत्ययचक्षुः "इति श्रुतेः- अत्र जन्मपरम्परायां क्रमेण सर्वविषय साक्षात्कारवति बद्धेऽतिव्याप्तिवारणाय युगपदिति ।। -

सा.सं - सिद्धोपायं शोधयितुमारभमाणः अधिकारार्थं सङ्गृह्णाति - सिद्धोपायत्वानुगुणं सर्वज्ञत्वम्, परमकारुणिकत्वं, सर्वशक्तित्वं च क्रमेणाह - युगपदित्यादिना - स्वत इति नित्यव्यावृत्तिः - सततमिति मुक्तव्यावृत्तिः - दया निरवधित्वमुत्कृष्टावधिराहित्यम् । दयारूपोदधे दिव्यत्वं निर्दुष्टत्वंदयाम्बुराशिरित्यर्थः - अवतारदशायामप्यचिन्त्यशक्तित्वद्योतनाया शक्यविवर्जित इति व्यतिरेकमुखेनाभिधानम् - जगत्परिपालरूपधर्मस्य.

मू - जलधिसुतया सार्धं देवो जगत्परिपालयन् -

सा.दी - प्रत्यक्षरूपज्ञानத்தாலொருக்காலே யெப்போதும் स्वतः उपाधिயன்றியே அறியுமவனாய் - अशक्यविवर्जितः, अशक्यமான कार्यமில்லாதவனாய் - निरवधिदयानित्योदन्वान्, निरवधिकदयैக்கு नित्यसमुद्रस्थानीयனாய். जलधिसुतया सहैव सर्वजगद्रक्षकனாய். இத்தால் "लक्ष्म्या सह हृषीकेशः" என்றும் -

सा.स्वा - हतिर्नास्तीत्यर्थः पदत्रयेणाप्यधिकारे वर्तिष्यमाणशङ्का द्योत्यते देवः, लील प्रवृत्त एव- स्वत एव रक्षकत्वे लीलाप्रवृत्तिरेव न स्यादिति भावः - जलधिसुतया सार्धं जगत्परिपालयन्, न तु लक्ष्मीनैरपेक्ष्येण स्वत एव परिपालयन् - परमपुरुषः - "लक्ष्म्या सह हृषीकेश" इत्यादि प्रमाणेन लक्ष्मीसाहित्येन रक्षकतया प्रतिपन्नः परमपुरुषः - "पुरुषान्न परं किञ्चित्" इति प्रतिपन्नः श्रियः पतिः - प्रतीष्टभरस्सन्, स्वीकृत भरस्सन् - भरन्यासरूपव्याजविशेषेण स्वीकृतभरस्सन् -

सा.प्र - विशिष्टः पुरुषकारभूतया लक्ष्म्या विशिष्ट एव जगद्रक्षक इति "लक्ष्म्या सह हृषीकेश" इत्यादिषु -

सा.वि - प्रमेयत्वादि सामान्यमुखेन वा सर्वविषयसाक्षात्कारवत्यतिव्याप्तिवारणायाखिलमिति - तत्तत्प्रकारविशिष्टं विदन् तत्तत्प्रकारेणावगाहनं यथा स्यात्तथा विदन्निति यावत् - सर्वमित्यादिज्ञानेन तु तत्तत्प्रकारवैशिष्ट्येन न ज्ञायते - सामान्यप्रत्यासत्त्याङ्गीकारे तु युगपत्सततं बहुपदार्थविषय साक्षात्कारवति बद्धे ऽतिव्याप्तिवारणायाखिलं पदम् - न च तस्य सुषुप्तिदशायां तत्साक्षात्काराभावात्सततं तत्साक्षात्कारो नास्तीनि नातिव्याप्तिरिति वाच्यम् - चतुर्मुखादीनां सुषुप्त्यभावेनातिव्याप्तिसत्वात् अखिलपदं प्रामाणिकमित्यभिप्रेतम् - अथ ईश्वरस्याप्यनन्तब्रह्माण्डेषु संख्याया अभावाद विद्यमानवस्त्वज्ञानमादाय नासंभवशङ्का - आनुमानिकादिज्ञानसर्वविषयज्ञानवत्यतिव्याप्तिवारणाय प्रत्यक्षेति - योगि न्यतिव्याप्तिवारणाय स्वत इति - मुक्तेऽतिव्याप्तिवारणाय सततमिति - यद्यपि मुक्तस्यापि सर्वज्ञत्वमस्ति। तथापि तद्व्यावृत्तमीश्वरसर्वज्ञत्वमिति तद्व्यावृत्तिः - सततमिति त्रैकालिकाखिलवेदनस्य विवक्षितत्वान्मुक्तस्य पूर्वकालावच्छेदेन तदभावात् - एवं च चतुर्मुखादिष्वतिव्याप्त्यभावादखिलं पदं स्पष्टार्थम् अपरोक्षेण स्वतस्सर्वदाप्यात्मसाक्षात्कारवति जीवेऽतिव्याप्तिवारणायाखिलपदम् - वस्तुतस्तु भूतभाविस्वरूपसाक्षात्काराभावात्स्पष्टार्थमित्येव तत्त्वम् - स्वत इत्यनेनैव नित्येष्वतिव्याप्तिः परिहृता - तेषां सततवेदनस्य भगवन्नित्येच्छा सिद्धत्वात्। नित्यमुक्तसाधारणसार्वज्ञविवक्षायां सततमित्येतन्निष्प्रयोजनं स्यात् सततमखिलवेदित्वं युगपत्प्रत्यक्षेण स्वतोऽखिलवेदित्वमिति लक्षणद्वये तात्पर्यम् - अस्मिन्पक्षेऽखिलपदं सार्थकमेवेति दिक्- अशक्यविवर्जितः, सर्वशक्तिः - अत एव सतां प्रतीष्टभरः, स्वीकृतभरः । देवः, सर्वस्वामी - जलधिसुतया सार्धं जगद्विभूतियुग्मं परिपालयन् पालनावस्थस्सन् - लक्षणे शतृप्रत्ययः - तत्तदभिमतफलप्रदानादि सङ्कल्प -

सा. सं - व्यासज्य वृत्तिधर्मत्वस्फोरणाय सार्धमित्युक्तिः देवः, जगत्सृष्ट्यादि क्रीडनशीलः - अथापि सार्धमित्यन्वेति - 'युवां तु विश्वस्य विभू जगतः कारणं परम्' इत्युक्तेः-

(सा.वि) निरूपणाय विषयीकरणम्। सत्यसङ्कल्पत्वस्यापेक्षितकाल एव पुरुषार्थं दातुं समर्थ इति ज्ञापनेन आश्रयणोपयोगितया विषयीकरणम् - परमकारुणिकत्वस्य भरन्यासव्याजमात्रेण रक्षतीति ज्ञापनार्थत्वात् विषयीकरणम् - वात्सल्यस्य दोषोपेक्षणरूपस्य ज्ञानेन स्वस्मिन् दोषानुसन्धानप्रतिबन्धः फलमिति स्वायोग्यता स्मृतिजनितभीतिपूर्वकं पराङ्मुखी भवनाभावाय तद्विषयीकरणम् - सौशील्यस्य महतो मन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावरूपस्य परत्वज्ञानकृताप्राप्यत्वशङ्कानुदयाय विषयीकरणम् - स्वामित्वस्य स्वरक्षणं भगवदर्थमेवेति ज्ञानार्थविषयीकरणमित्येतेषां विशेषणताया युक्तत्वात् - लक्ष्म्यास्तु भगवत्प्रसादनरूपोपकारस्य पूर्वमेव जातत्वात्तत्कृतप्रसादस्यैव तदानीं स्मर्तव्यत्वेन तदनुसन्धानस्यावश्यं भावेन प्रसाद्यस्यापि वात्सल्यव्यवहितत्वेन चोपलक्षणत्व एव युक्तत्वात्। उक्तंच कुमारवरदाचार्यैः पूर्वमेव पुरुषकारभूताया इति। तस्माद्विशेषणत्वसमर्थनस्य भरस्वीकर्तृत्वेन समर्पणबुद्धौ अनुसन्धानमेव प्रयोजनमिति सिद्धमुपायत्वम्। "तत्तद्वस्तुक्कळुक्कु अनुरूपमानपडियिले प्रमाणसंप्रदायङ्गळिले कण्डुकॊळ्वदु - वस्त्वनुरूपमायिऱे उपयोगमिरुप्पदु" इत्यनेन प्रमाणबलाल्लक्ष्म्याः भरस्वीकर्तृत्व रक्षासङ्कल्पाश्रयत्व पुरुषकारत्वादि रूपोपयोगोऽप्यस्त्येवेति तात्पर्यं प्रतीयते - अन्यथा पुरुषकारत्वोपयुक्तप्रमाणान्येवादर्शयिष्यत् - नतु साक्षान्मोक्षप्रदत्वतदभिमत्यपेक्षत्व तदनवधिमहिमपरप्रमाणान्यपि - "वस्त्वनुरूपमान विशेषङ्गळै सहृदयरऱिन्दुकॊळ्वदु" इत्यत्राप्येवमेव प्रतीयते - "अग्ना विष्णू प्रभृतिकळुक्कुप्पोले आत्महविस्समर्पण प्रतिसंबन्धिकळाकक् कुऱैयिल्लै" इत्यत्रापि रक्षाभरत्वेनात्मसमर्पणस्य "आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते" इति लक्षणानुसारेण विवक्षितत्वाद्भरसमर्पणं प्रत्यपि प्रतिसंबन्धित्वं स्पष्टमेव प्रतीयते - नह्यत्र संबन्धज्ञानरूपसमर्पणमेव तद्वाक्ये प्रतिपाद्यम् - तस्य पूर्वमेव जातत्वादधिकारितावच्छेदकत्वात् - अनुशासनभागान्ते "ईश्वरनुडैय छत्रचामरादिकळैप्पोले लक्षणमाकच्चॊन्न जगत्कारणत्व, मोक्षप्रदत्व, सर्वाधारत्व, सर्वनियन्तृत्व, सर्वशेषित्व, सर्वशरीरत्व, सर्वशब्दवाच्यत्व, सर्ववेदवेद्यत्व, सर्वलोकशरण्यत्व, सर्वमुमुक्षुपास्यत्व, सर्वफल प्रदत्व, सर्वव्याप्तज्ञानानन्द स्वरूपत्व, लक्ष्मीसहायत्वादिकळ् प्रतिनियतङ्गळ्" इत्यत्रापि न विरोधः - तत्र "मुक्तनुक्कु ज्ञानभोगादिकळिल् वन्द परमसाम्यमेयुळ्ळदु" इति पूर्वत्र ज्ञानभोगादिसाम्यमेव परमसाम्यम् - नतु जगत्कारणत्वादिना ईश्वरासाधारणधर्मेण साम्यमिति जीवव्यावर्तनार्थमीश्वरकोटिप्रति नियतधर्मोपादत्तेषु यथा योग्यं केषाञ्चिदुभायान्वयित्वं केषाञ्चिद्भगवन्मात्रान्वयित्वं द्रष्टव्यम् - एवमेव तत्र तत्रोक्तलक्षणानामव्याप्त्यतिव्याप्तिपरिहारमार्गो द्रष्टव्यः - इत्यास्तां विस्तरः। द्वयाधिकारे श्रीपदार्थानां भगवदुपायत्वोपयोग कथनवाक्येऽपि न विरोधः - तावता श्रिय उपायत्वाप्रतिक्षेपात्। प्रत्युत तत्रैव" स्वाम्युपाय उपेयश्च स्वरूपादिसमर्पणे। प्रथितः प्रतिसंबन्धी श्रीमान्निगमचक्षुषाम्" इत्युक्तम्। स्वरूपादि समर्पणे स्वरूप भरफल -

(सा.वि) समर्पणेषु प्रतिसंबन्धी उद्देश्यभूतः उपायः मुक्तौ उपेयश्च श्रीमानेव प्रतित इति तस्यार्थः। अत्रादि शब्दगृहीत भरसमर्पणेऽपि प्रतिसंबन्धित्वस्य कण्ठोक्तत्वाच्छ्रियोऽपि प्रतिसंबन्धित्वं सुस्पष्टम्। ''देवजुष्टामुदाराम्'' इत्युदार श्रुत्युपब्रह्मणभूतस्य ''सर्वकामप्रदां रम्यां संसारार्णव तारिणीम्'' इति वचनस्य तात्पर्य कथनपर साक्षात्परंपरया वा सद्यः फल साधिकेति पृथुगद्यभाष्ये वाक्येऽपि न दोषः। पतिमुखेन साक्षाच्चेत्यर्थः- नत्वितरपुरुषार्थेषु साक्षात् मोक्षे परंपरयेति व्यवस्थितत्वम् - एतद्व्याख्यानपरतया व्याचख्युश्च ''ऐश्वर्यमक्षरगतिं परमं पदं वा'' इत्युक्तेः अनुपपन्नत्व प्रसङ्गात्। साक्षादुभयपलसाधनत्वपरत्वेहि तत्संवाहीकरणं सङ्गच्छते. नन्वेवं विशिष्टस्योपायत्वेऽपि न विशेषणस्योपायत्वं तदात्वे तु गुणादीनामप्युपायत्वापत्तिरिति चेन्न। तेषामप्युपायत्वे प्रमाणाभावेन दण्डत्वविशिष्टस्य घटकारणत्वेऽपि दण्डत्वस्य विशेषणस्याकारणत्ववदुपपत्तेः - किमर्थमत्रो पायत्वमङ्गीकार्यमिति चेदनन्यथा सिद्धप्रमाणबलात्तथाङ्गीकार्यत्वात् - कुमारवरदाचार्यैश्च रहस्यत्रयचुलके भगवतो विशेषणत्वेन पूर्वमपि पुरुषकारभूताया लक्ष्म्यास्स्वीकारेऽपि नोपायद्वित्वप्रसङ्गः - विशेषणविशेष्ययोस्स्वरूपभेदे विशिष्टस्यैकत्वाद्विशिष्टस्यैव प्रधानात्वाच्च - यथा खलूत्तरखण्डे लक्ष्म्या विशेषणत्वाङ्गीकारेनोपेयद्वित्वमिति भवन्तो मन्यन्ते तद्वत्पूर्वखण्डेनोपेयद्वित्वमुक्तम् अत्र यद्यप्युपायत्वं नेष्टम्। तर्हि विशेषणस्योपायत्वाभावान्नोपेयद्वित्वप्रसङ्ग इति परिहतव्यं स्यात्। न तूपायत्वमभ्युपगम्यविशिष्टस्यैकत्वाद्विशेष्यप्राधान्याच्च नोपायद्वित्वप्रसङ्ग इति परिहारः। तथोत्तरखण्डे उपेयद्वित्वाभाव प्रतिबन्धात्तत्र तथाभ्युपगतोपेयत्ववत्पूर्वखण्डे उपायत्वाङ्गीकारप्रतीतेश्च इहापि ''अनन्यो पायत्वविरुद्धமான उपायद्वित्वமவ்விடத்தில் बाधकமானாலோ வென்னில் 'इत्याशङ्क्य' अनन्य प्रयोजनत्वविरुद्धமான प्राप्यद्वित्व प्रसङ्गத்தாலே 'इति प्रतिबन्ध्या परिहृतम् - नतु गुणविग्रहादिवत्'' विशेषणस्योपायत्वं नास्तीति परिहृतम् - अस्मिन्नेवाधिकारे अग्रेऽपि विशिष्टस्यानेक रूपत्वान्मामेकमित्येकत्वस्य विरोधस्स्यादित्याशङ्क्य ''गुणविग्रहविशेषादिविशिष्टமான एकमुपाय மானாப்போலே तुल्ययोग क्षेमமான श्रीशब्दத்தில் தோற்றின नित्यपत्नीसंबन्धविशिष्टமானாலும் उपायैक्यத்துக்குக் குறையில்லை'' इति वक्ष्यते - तत्रगुण विग्रहाद्यनेक घटितत्वेऽपि नैकत्वस्य विरोधः - तथानेकोपायघटितत्वेऽपि नोपायैकत्वविरोध इत्यर्थः - ननु विशिष्टस्योपायत्वाङ्गीकारे विशिष्टस्य विशेषणविशेष्य स्वरूपत्वाद्विशेषणस्योपायत्वं स्यात् - तथा चोपायद्वित्वं प्रसज्येत - तस्माद्विशेषणत्वमेव नास्तीति वक्तव्यमिति परेषां तात्पर्यम्। अतस्तान् प्रत्युपायत्वाभावान्नोपायद्वित्वप्रसङ्ग इति परिहारकथनं शोभते। अतो विशेषणत्वेनोपायद्वित्वं गुणविग्रहादिवदित्युक्तम् - तस्माद्विशेषणभूताया अपि श्रिय उपायत्वमाचार्याभिमतं न भवत्येवेति चेन्न - ''ऐकरस्यजुषोश्शेषिदम्पत्योस्सर्वकर्मसु - अग्वाविष्णुप्रभृतिகளுக்குப்போலே '' इत्यादिभिरुपायत्वाभिमतेरेव प्रतीयमानत्वादुपयोग विशेषाद्विशेषणत्व समर्थनाच्च पुरुषकारमात्रत्वेतु विशेषणत्वासिद्धेः पूर्वमेवोक्तत्वात् - ननु विशिष्टस्योपायत्वे किमुपायत्वं -

(सा.वि) व्यासक्तं प्रत्येकपरिसमाप्तं वा नाद्य: - लक्ष्म्या भगवतश्चोपायत्वाभाव प्रसङ्गात् न द्वितीय: - उपायद्वित्वप्रसङ्गादिति चेन्न - विशिष्टस्य पदार्थान्तरपक्षे उपायत्वस्य तन्निष्ठत्वेव्यासक्तत्वमेव नास्ति। तद्घटकविशेषणविशेष्ययोरपि दण्डी मयादृष्ट इत्यत्र दण्डपुरुषयोर्दर्शनविषयत्ववदिहाप्युपायत्वं विशेषणविशेष्यस्वरूपपक्षे व्यासक्तत्वेऽपि राजपुरोहितौ यजेयतामित्यत्र राजपुरोहितोभयनिष्ठकर्तृत्वस्य "यजेत स्वर्गकाम:" इत्यत्र दंपतिगतकर्तृत्वस्येवैकत्वे नैकवचनस्यैवावश्यकत्वेऽपि कर्तृत्वाश्रयव्यक्त्यो: पृथक्कर्तृत्वमारोप्य द्विवचनप्रयोगेण "यजेयाताम्" इति व्यपदेशवत् "उभयाधिष्ठानं चैकं शेषित्वम्" इति शेषित्वस्यैकत्वैऽपि प्रत्येक शेषित्वव्यपदेशवच्च पृथगुपायत्वव्यपदेशो पपत्ते:- प्रत्येकपरिसमाप्तोपायत्वपक्षे न किञ्चिद्बाधकम् - नचोपायद्वित्वं बाधकम् - किन्तूपायद्वित्वमापादयत: विशिष्ट उपाय इत्यत्र उपायाविति द्विवचनं स्यादिति विवक्षितम् - उतानन्योपायत्वप्रसङ्ग इति - यद्वा, भगवतस्स्वातन्त्र्यहानिरिति - नाद्य: - श्रीमन्नारायण उपेय इत्यत्रापि द्विवचनप्रसङ्गात् - नद्वितीय:, प्राप्यद्वित्वमादायानन्यप्रयोजनत्वस्यापि भङ्गप्रसङ्गात् - नतृतीय:, दम्पत्योस्स्वामित्वे भर्तृस्वातन्त्र्य भङ्गप्रसङ्गात् - अस्ति खलु स्वर्गकामपदगतैकत्व स्योद्देश्यविशेषणत्वेनाविवक्षितत्वात्। यागजन्यफलं प्रति पत्न्या अपि स्वामिनीत्वं तस्मान्नान्दीमारभ्य आचार्यसूक्तिपरिशीलने श्रियोऽप्युपायत्वमभिप्रेतमिति सिद्धमुपायत्वम् - एवंच जगत्कारणत्वादिकमप्याचार्याभिमतम्। न च कारण्त्वप्रकरणे च श्रिय आम्नानाभावान्नकारणत्वादि संबन्धभेद इतिवाच्यम् - "आनीदवातगँ स्वधया तदेकम् - तस्माद्धान्यं न पर: किञ्चनास" इति श्रुतौ प्रलयदशाप्रतिपादिकायां स्वधा शब्दितया लक्ष्म्या सह ब्रह्मोपस्थानस्य प्रतिपादनात् - स्वधास्वधृतिसामर्थ्यमितिव्याख्यानांन्तरेण तस्यान्यधासिद्धावपि नृसिंहतापनीये तृतीयोपनिषदि नारसिंहस्य शक्तिबीजं "नो ब्रूहि भगवन्निति सहोवाच - प्रजापतिर्माया वाएषा नारसिंही सर्वमिति सृजति - सर्वमिदं संहरति - तस्मान्मायामेतां शक्तिं विद्यान्दिति" मायाशब्दिताया लक्ष्म्या जगत्कारणत्व प्रतिपादनात् - वामनात्कारणत्वसिद्धे: - अस्य लक्ष्मीपरत्वसमर्थनप्रपञ्चस्त्वन्यत्र द्रष्टव्य: - चतुश्श्लोक्यधिकारे श्रद्धासूक्तमेधासूक्तादिति सूक्तवाक्सूक्तादिषु विशेषतश्श्रीसूक्ते च विचित्रास्तन्महिमानस्तत्तद्भाष्यकारै: प्रपञ्चिता: प्रतिपत्तव्या इत्याचार्यपरिगणितेषु सूक्तेषु मध्ये वाक्सूक्ते "वाचीमाविश्वाभुवनन्यर्पिता - सानोहवं जुषतामिन्द्रपत्नी - यामृषयोमन्त्रकृतोमनीषिण:। अन्नीच्छन्देवास्तपसाश्रमेणतां देवीं वाचगँ हविषा यजामहे" इत्यादिभिस्सर्वाधारत्वमन्त्र कर्मोपास्यत्वहविराराध्यत्वाभिधानात् - तथा बहवृचसंहितायामष्टमेऽष्टके लक्ष्मीसूक्ते "अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यै रुतविश्वैर्देवैरहं मित्रा वरुणोभाभिभर्म्यह मिन्द्राग्नी अहमश्विनो भा" इत्यादि वाक्येषु सर्वदेवतोपास्यत्व, सर्वदेवतापोषकत्व, सर्वस्रष्टृत्व, सर्वाधारत्व, सर्वफलप्रदत्वारभियुक्तैर्व्याख्यातत्वात् - "अहं ता ब्रह्मणस्तस्य साहमस्मि सनातनी।

(सा.वि) आत्मा स सर्वभूतानामहं भूतो हरिस्स्मृतः । एन भावेन भवति वासुदेवः सनातनः । भवद्भावात्मकं ब्रह्मतत्तस्तच्छाश्वतं पदम् । भवान्नारायणो देवो भावो लक्ष्मीरहंपरा । भावः प्रकारभूतधर्मः - लक्ष्मीनारायणाख्यं तत्ततो ब्रह्मसनातनम् । अहं तयासमाक्रान्तो ह्यहमर्थः प्रसिद्ध्यति'' इत्यादिभिस्सर्वत्रैर्दत्वेन प्रतिपादनात् - ''सो कामयत बहुस्यां प्रजायेयेति - सदेव सौम्येदमग्र आसीत्'' इत्यादिष्वपि स्वरूपनिरूपकत्वेन सृष्टिप्रतिपादनस्थलादौ लक्ष्मीपतेरावश्यकत्वेन ब्रह्मसमानसङ्कल्पाश्रयत्वे जगत्कारणत्वादेर्निर्बाधत्वात् । अत एव ''எம்பெருமானைச் சொன்னவிடத்திலே பிராட்டியைச் சொல்லிற்றாம்'' इति भाष्यकारा ऊचुः - त्वमासीर्मातिश्रीः कमितुरिदमित्थं त्वविभवस्तदन्तर्भावात्त्वां ''न पृथगभिधत्ते श्रुतिरपि ''इति भट्टाचार्याः प्रोचुः । अत एव ''ब्रह्मणि श्रीनिवास'' इति श्रिया स्वरूपनिरूपकतया ब्रह्म विशेषितम् - अत्र श्रीविशिष्टमेव ब्रह्मविवक्षितम् - तेन विशिष्टस्य प्रार्थ्यमान भक्तिरूपशेमुषीविषयत्वसिद्धिः । ननु ''अखिलभुवनजन्मस्थेमभङ्गादिलीले'' इत्येतदर्थस्य विशेष्यमात्रान्वयित्वेन विशेषणान्वयित्वाभावाच्छ्रियो जन्मादिहेतुत्वं नोक्तं स्यादिति चेन्न - ''ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते । सर्वत्र बृहत्वगुणयोगेन हि ब्रह्मशब्दः - बृहत्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योर्थः - सच सर्वेश्वर एव अतो ब्रह्मशब्दः तत्रैव मुख्यवृत्तः - तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः अनेकार्थ कल्पनायोगाद्भगवच्छब्दवत् - तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः - अतस्सर्वेश्वरो जिज्ञासा कर्मभूतं ब्रह्म इत्युक्तम् - एतादृशं **च ब्रह्म** श्रीनिवासरूपमेवेति - यद्यपि विशेषणं नापेक्षितम् - तथापि ब्रह्मरुद्रादिष्वाशङ्कितब्रह्मत्वव्यावृत्तये श्रीनिवास इति विशेषणम् । तथा च श्रीनिवासपदं ब्रह्मपरस्य नारायणतात्पर्यग्राहकम् - सद्भक्तिरूपशेमुष्यां श्रीवैशिष्ट्यविषयत्वं व्यनक्ति । तत्र पूर्वोक्तप्रमाणानुसारेण ''भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासङ्ख्येय कल्याणगुणगणायाः - शृणाति निखिलान् दोषान् श्रिणाति च गुणैर्जगत् । श्रीमते चाखिलैर्नित्यं श्रयते च परं पदम्'' इति स्वनामसूचितमोक्षप्रदत्वाद्यर्थायाः श्रियः पत्याविति प्रतीतेः - तस्या अपि जगत्कारणत्वादिसिद्धेः - स्वभावतो ''ब्रह्मशब्देन निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुण गणः पुरुषोत्तमोऽभिधीयत इति - भगवन्नारायणेत्यादि च वदद्भिः भाष्यकारैः श्रीरपि ब्रह्मशब्दार्थ इत्युक्ताभिप्रायम् । ''तेन ब्रह्म वा इदमग्र आसीत्'' इत्यादिष्वपि तस्या अप्युपस्थित्या ततो जगत्कारणत्व सिद्धिः - अपि च सर्वेश्वरो जिज्ञासाकर्मभूतं ब्रह्म इत्युपसंहृतम् - तत्र सर्वेश्वरत्वं श्रीविशिष्टमेवोपलक्षयति - श्रीविशिष्टत्वं ब्रह्मपदरूढिशक्यतावच्छेदकम् - श्रीमत्वस्यैव सर्वैश्वर्य नियामकत्वात् - तन्नियामकत्वेनाभिमतस्य श्रीविशिष्टस्यैव शक्यतावच्छेदकत्वौचित्यात्सर्वेश्वरत्वस्यान्यत्रापि शंयमानत्वेन तस्य ब्रह्मपदशक्यतावच्छेदकत्वस्यानुचितत्वात् - एवं च पद्मत्वस्य -

(सा.वि) पङ्कजार्थत्ववत् - श्रियो ब्रह्मशब्दार्थत्वसिद्धिः - अत एव तस्यास्वरूपनिरूपकत्वोक्तिः - ''लक्ष्मीनारायणाख्यं तत्ततो ब्रह्मसनातनम्'' इत्युक्तिः च सङ्गच्छते - ''तदन्तर्भावात्त्वां न पृथगभिधत्ते'' श्रुतिरपीत्युक्तेरपीदमेव तात्पर्यम् - इत्थंच श्रीविशिष्टस्य कारणत्वसिद्धौ पुष्पपरिमलन्यायेन तदपृथक्सिद्ध्या श्रियोऽपि पूर्वोक्तप्रमाणानुसारेण कारणत्वसिद्धौ ''कारणं तु ध्येय'' इति ध्येयत्वसिद्धेश्च। ननु दंपत्योस्स्वर्गकाम्नावत्वेनाधिकारित्वे पृथगनुष्ठाने प्रत्येक कार्याद्यपेक्षाद्यङ्गलोपापत्त्या विशिष्टकर्तृत्वे सत्येकपदार्थस्य उभयानुष्ठेयत्वासिद्ध्या यत्कर्तव्यं तदनया सहेत्यप्रधानतृतीयानिर्देशात्। पत्युः प्राधान्यादनुमत्या पत्नीकर्तृत्वसिद्धिः - इह तु कथं कारणत्वं अपृथग्सिद्धत्वमात्रेण कारणत्वे सर्वज्ञत्वादि गुणानामपि कारणत्वं स्यादिति चेन्न। परस्परेच्छाविघाताभावात् - परस्परेच्छया सहभावेन कारणत्वोपपत्तेः। तत्र तौ एकपत्नीपतिन्यायेन अनुमत्याकारणत्वं श्रियस्साक्षात्कारणत्वं तु भगवत इति विशिष्टस्य कारणत्वम्। मुमुक्षुध्येयत्वं, मोक्षोपायत्वं, मोक्षप्रदत्वं, मुक्तिप्राप्यत्वं सिद्धमिति - सर्वत्र विशिष्टमेवानुसन्धेयमिति - विशिष्टोपादानमङ्गीकुर्वतामाचार्याणां न काचिदनुपपत्तिरिति दिक् - ननु विशिष्टस्य कारणत्वे ध्येयत्वेऽभिमते सति कथमाचार्यैरेवध्येत्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं किं तैरन्तः कलहमलिनैः किञ्चिदुत्तीर्यमग्नैः। त्वत्संप्रीत्यै विहरति हरौ संमुखीनां श्रुतीनां भावारूढौ भगवति युवां दंपती दैवतं नः'' इत्यत्र हरेरेव विहरणं श्रियस्तु प्रीतिमात्रं प्रयोजनमुक्तम् - तथा - ''यत्सङ्कल्पाद्भवति कमले यत्र देहिन्यमीषां जन्मस्थेम प्रलय रचनाजङ्गमाजङ्गमानाम्। तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ पूर्णं तेजस्फुरति भवती पादलाक्षारसाङ्कम्'' इत्यत्र विशिष्ट एव जन्मादिकर्तृत्वं समाधिलयत्वं चोक्तमिति चेन्न। त्वत्संप्रीत्यै त्वया सह विहरतीति व्याख्येयत्वात् - अन्यथा पूर्वोक्तविरोधापत्तेः - तथाहि - कमले यत् सङ्कल्पात् - यस्य तेजो रूपस्य परमपुरुषस्य संकल्पाद्यत्र देहिनि स्वशरीरिणि अमीषां जंगमाजङ्गमानां जन्मस्थेमप्रलयरचना भवति - यत्सङ्कल्पादिति निमित्तत्वमुक्तम् - यत्र देहिनीत्युपादानत्वमितिध्येयम् यदिति पदान्तरमध्याहार्यम् - यद्यमिनां समाधौ एकलक्ष्यं भवति तत्कल्याणं तेजः भवती पादलाक्षारसाङ्कं भवती - विशिष्टं सदेव संपूर्णम् ऐकरस्येन संपूर्णलीलं भवति । अन्यूनलीलारसं भवतीत्यर्थः । तेन विशिष्टस्यैव कारणत्वमुपायत्वं सिद्धम् - अन्यथा पूर्णपदवैयर्थ्यात् - ''पश्यन्तीषु श्रुतिषु परितस्सूरिबृन्देन सार्धं मध्ये कृत्य त्रिगुणफलकं निर्मितस्थानभेदम्। विश्वाधीशप्रणयिनि सदा विभ्रमद्यूतवृत्तौब्रह्मेशाद्या दधत युवयोरक्षसारप्रचारम्'' इति सहकर्तृत्वप्रतिपादकपूर्वश्लोकेन ''सर्गस्थित्यवस्सानकेलि रसिकौ तौ दंपती नः पती'' इत्यायुक्तिभिश्च विरोधप्रसङ्गाच्च - ''श्रियै समस्त चिदचिद्विधानंव्यसनं हरेः। अङ्गीकारिभिरालोकैस्सार्धयन्तयैकृतोऽञ्जलिः। प्रलयसमयसुप्तं स्वं शरीरैकदेशं वरद चिदचिदाख्यं स्वेच्छया विस्तृणा नः। खचितमिव कलायं चित्र -

(सा.वि) मातत्य धून्वन् ननु शिखेव क्रीडति श्रीसमक्षम् ।। इति च श्रियस्साक्षिमात्रत्वमेवोक्तम् - न व्यापारान्वयत्वमिति चेन्न- ''यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचना तारतम्ये मुरारेः - नमश्श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः । ईशेशितव्यवैषम्यान्निम्नोन्नतमिदं जगत्'' इत्याद्यनुसारेणानुमत्या कर्तृत्वे तात्पर्यात् - अन्यथा परस्परविरोधापत्तेः - एवमपि ''अस्येशाना जगतो विष्णुपत्नी'' - ईश्वरीगँ सर्वभूतानां - अस्या मम च शेषं हि विभूतिरुभयात्मिका। कान्तस्ते पुरुषोत्तमः - यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुः - अनवधिकमहिममहिषीम् - देवि त्वन्महिमावधिर्नहरिणा नापि त्वया ज्ञायते - दम्पती जगतां पती इत्यादिभिरुभयविभूति शेषित्वं च सिद्धम् - परस्पर शेषशेपि भावः ''भगवति गुणान् पुंस्त्वसुलभान्। त्वयि स्त्रीत्वे कान्तान्म्रदिमपतिपारार्थ्यकरुणाक्षमाधीन्वाभोक्तुम्'' इत्युक्तप्रकारेण परस्यरेच्छाकृत इति ''सलक्ष्मीकस्य साम्राज्यं सर्वधा संप्रतिष्ठितम्'' इति विशिष्टस्य सर्वेश्वरत्वं स्थापितम् - अतस्सर्वेश्वरो जिज्ञासाकर्मभूतं ब्रह्मेति यथा श्रुतार्थस्वीकारेऽपि नकिञ्चिद्बाधकम् - अत्र पक्षे शेषिदम्पतित्वं ब्रह्मशब्दरूढिशक्यतावच्छेदकं बोध्यम्। तस्मादुभयाद्वैतं वेदान्तवेद्यमिति - ननु नारवर्गान्तर्गतत्वेन श्रियो भगवदाधारकत्वादनन्याधारत्वं भगवच्छरीरभूतत्वात्सर्वशरीरत्वं च नस्यादिति चेन्न - नारा अयनं यस्येति बहुव्रीहिपक्षे भगवतोऽपि साधारणत्वं स्यात्। ''स्वे महिम्नि प्रतिष्ठित'' इत्युक्तानन्याधारत्वं तूभयत्राप्यविशिष्टम् - लक्ष्म्याश्शरीरत्वं भगवतश्शरीरत्वं च परस्परेच्छाकृति मतिभगवच्छरीरकत्वाभावेन सर्वशरीरकत्वाभावेऽपिविशिष्टस्य स्वेतरसर्वशरीरकत्वात् ''सर्वं खल्विदं ब्रह्मेति'' निर्देशस्य न क्षतिरिति सर्वमनवद्यम् - ननु ''ब्रह्मशब्देन स्वभावतो निरस्तनिखिल दोषोऽनवधि कातिशयासङ्ख्येय कल्पाण गुणगणः पुरुषोत्तमोऽभिधीयते'' इति भगवन्नारायण इत्यादि च वदद्भिः भाष्यकारैः श्रीरपि ब्रह्मशब्दार्थ इत्युक्तं प्रथमित्युक्तम् - कथमिदं सङ्गच्छते - ''स्वरूपेण गुणैश्च बृहत्वं यत्रानवधिकातिशयं सोऽस्यमुख्योर्थः'' इति खलु तैरुक्तम्। स्वरूपद्वयस्य कथमनवधिकातिशयबृहत्वं? ''सत्यंज्ञानमनन्तं ब्रह्म'' इत्यत्राचिच्चिद्वस्त्ववरुद्धत्वात्कथं वस्तुतः परिच्छेद राहित्यमित्यत्र इदमिदं नेति निषेधानर्हत्वलक्षण सर्ववस्तु सामानाधिकरण्यार्हत्वं वस्तुपरिच्छेदराहित्यमिति व्याख्यातम् - सर्ववस्तु सामानाधिकरण्यार्हत्वं च सर्वस्य भगवच्छरीरत्वादुपपद्यत इति चोच्यते - तत्र श्रियश्च शरीरत्वात्। श्रीर्भगवानिति व्यपदेशसंभवाद्भगवति वस्तुपरिच्छेदराहित्यलक्षणमनन्तत्वं संभवतीति बृहत्वं निरस्तातिशयत्वं भवति - श्रियस्तु भगवतस्तच्छरीरत्वाभावाद्भगवान् श्रीरिति व्यपदेष्टु मनर्हत्वाद्वस्तुपरिच्छेदसत्वेन निरस्तातिशयत्वाभावाच्छ्रियः कथं ब्रह्म शब्दार्थत्वम् - किञ्च श्रियोऽपि ब्रह्मशब्दार्थत्वे पुष्पपरिमलादिवत्। ''ब्रह्मवाइदमग्र आसीत्'' इत्यादिषु द्विवचननिर्देशापत्तिः। अतोऽनवधि कातिशयबृहत्वात्पत्युरेव ब्रह्मत्वं सर्वेश्वरत्वं चोचितम्। एवं च सतितस्य समाधिकदरिद्रत्वं च युज्यते। अन्यथा पत्न्याः स्वसमानभूतायास्सत्वेन समाधिकदरिद्रत्वं न स्यात्। ततश्च ''नतत्समश्चाभ्यधिकश्च दृश्यत'' -

मू - சிலர் द्वयத்தில் पूर्वखण्डத்தில் श्रीमच्छब्दं उपलक्षणपरமென்றும், उत्तरखण्डத்தில் श्रीमच्छब्दं विशेषणपर மென்றும் பிரியச் சொன்னார்கள்.

(सा.दी) निरसनीयपक्षத்தைக் காட்டுகிறார்- சிலரென்று பிரிய, भिन्नप्रकारமாகவென்கை.

(सा.स्वा) निरसनीयपक्षத்தை अनुवदिக்கிறார்- சிலர் इति இங்கு विद्यमानं सद्वयावर्तकं विशेषणम् - यथा नीलोघट इति अविद्यमानं सद्व्यावर्तकमुपलक्षणम् - सारसवान् देवदत्तकेदार इत्येकः प्रकारः - अयमेव - 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादौ श्रीभाष्ये निरूपितः - विशेष्यव्यावर्तकं सद्विशेष्यान्वयि समभिव्याहृतक्रियान्वयिविशेषणम् - खड्गीशूर इति । कार्यान्वयिव्यावर्तकमुपलक्षणम् । चित्रगुमानयेत्यपरः - तत्राद्यप्रकार विशेषणतायां एकदेशिनामस्माकं च न विवादः - 'नित्यैवैषा जगन्माता विष्णोश्श्रीरनपायिनी' इत्यादिभिस्सदा विद्यमान -

(सा.प्र) प्रतिज्ञातमुपपादयति - சிலர் द्वयத்தில் इत्यादिना । शब्दस्यैकरूप्याद्विशेषणत्व -

(सा.वि) इत्यादि व्याकुल्येतेति चेदुच्यते । 'कारणं तु ध्येय' इति कारणस्योपास्यत्वमुक्तम् । कारणं च कार्यप्रतियोगिकम् - कीदृशं जगत्कारणत्वमित्याकाङ्क्षायामभिन्ननिमित्तोपादानस्वरूपं प्रतिपादयितुम् 'सदेव सोम्येदमग्र आसीत्' इत्यादि सृष्ट्यादि प्रकरणं प्रवृत्तम् - तत्रोभयगोचरकारणत्वबोधकप्रमाणानुगुण्यम् - पृथक्कारणत्वे कारणद्वित्वप्रसङ्गात् - उभयापृथक्सिद्धस्य पतिपत्नीभावस्य च प्रमाणसिद्धत्वात् - लौकिकदाम्पत्यकर्तृत्वन्यायेन च विशिष्टकारणत्वे स्थिते 'यतो वा इमानि' इत्यादिब्रह्मलक्षणं लक्ष्म्यामक्षतमेव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति शोधकवाक्योक्तावयवशक्तिपौष्कल्य प्रवृत्तिनिमित्तनिरतिशयबृहत्वं यद्यपि भगवत्येव । ऐच्छिक शरीरशरीरभावसत्वात् - तथापि 'ब्रहति ब्रह्मयति तस्मादुच्यते परंब्रह्मब्रह्मत्वाद्ब्रह्मणत्वाच्च तद्ब्रह्मेत्यभिधीयत' इत्यादि निर्वचनात् ब्रह्मणं च ब्रह्मपदप्रवृत्तिनिमित्तमेवेति तस्य सत्वाद् ब्रह्मत्वसिद्धिः - विशिष्टस्य स्वेतरसर्ववस्तु सामानाधिकरण्यार्हत्वलक्षणमिदं ब्रह्म नेति निषेधानर्हत्व लक्षणं वस्तु परिच्छेदराहित्यं विशिष्टे संभवत्येवेति तादृशप्रवृत्तिनिमित्तस्यापि सत्वाद् ब्रह्मशब्दार्थत्वसिद्धिरप्रत्यूहैव - 'अतस्सर्वेश्वर एव जिज्ञासा कर्मभूतं ब्रह्म' इत्यत्र सर्वशब्देन स्वस्य स्वं प्रतीशितव्यत्वाभावात्सङ्कोचस्यावश्यकत्वात् 'ईश्वरीगँ सर्वभूतानाम्' इत्याद्यनुरोधेन उभयनिष्ठैश्वर्य प्रतियोग्येव विवक्षितमिति सर्वेश्वरत्वमुभयनिष्टमेव ब्रह्मपदरूढि शक्यतावच्छेदकं दर्शितमिति - तदपि भाष्यं स्वरसमेव सङ्गच्छते - एतेन द्विवचनप्रसङ्गोऽपि परिहृतः - सर्वेश्वरत्वस्य ब्रह्मपदशक्यतावच्छेदकस्य विशिष्टनिष्ठत्वेन विशिष्टस्यैकत्वात् - 'उभयाधिष्ठानं चैकशेषित्वम्' इत्यादिकमिहैवानुकूलम् । सर्वशेषित्वं लक्ष्म्या इत्येतत्तु न कारणत्वविरोधि । एवं सति 'ब्रह्मविदाप्नोति परम्' इत्यादिषु श्रियोऽपि वेदनं मोक्षहेतुरितिनिर्व्यूढम् - समाधिकदरिद्रत्वं स्वपति समानजगत्कारणपत्न्यन्तराभावाल्लक्ष्म्याश्चोपपन्नमेवेति सर्वं समञ्जसम् । एवं स्थिते यथासंप्रदायं व्याख्यायते - शङ्कापक्षमुपक्षिपति - சிலர் इति ।

मू - இவ்விடத்தில் शब्दं एकरूपமாயிருக்க स्वारस्यத்துக்கு बाधकமன்றிக்கேயிருக்க 'स्वरूपं स्वातन्त्र्यम्' इत्यादिகளிலே-

(सा.दी) இவ்விடத்தில், द्वयத்தில், स्वारस्यத்துக்கு, स्वरसार्थத்துக்கு स्वरूपं स्वातन्त्र्यं भगवतः என்னுமிடத்து स्वरूपशब्दத்தால் सत्तालाभமும் स्वातन्त्र्यशब्दத்தால் रक्षणादिस्वभावமும் उपलक्षिக்கிறது. श्रियः अश्ले-

(सा.स्वा) तया व्यावर्तकतायाः सर्वाङ्गीकृतत्वेन पूर्वोत्तरखण्डयोर्वैरूप्यकथनस्यासङ्गतत्वात् - अपसिद्धान्तापत्तेश्च - किञ्च द्वितीयप्रकारे विवादः - तत्रैकदेशिनामुत्तरखण्डे कैङ्कर्यस्य चतुर्थ्यभिधीयमान तया तत्क्रियायां श्रियोऽपि विशेषणतयान्वयः - पूर्वखण्डे तु प्रपद्य इत्यभिधीयमानभरसमर्पणक्रियायां श्रीविशिष्टस्य संप्रदानतया नान्वयः । श्रियो भरसमर्पणान्वयाभावात् - क्रियानन्वयत्वे सति व्यावर्तकस्वरूपमुपलक्षणत्वमेवेति मतமென்று கருத்து- இத்தை निरसिக்கிறார்- இவ்விடத்தில் इति - पूर्वखण्डे उत्तरखण्डापेक्षया वैरूप्याश्रयणेन उपलक्षणत्वाश्रयणं विशेषणत्वे शब्दस्वारस्याभावादुत बाधकसद्भा वाद्वा भवेत् । द्वयமும் கூடாதென்று கருத்து- स्वरूपमिति - 'स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसमये । त्वमासीर्मातिश्श्रीः कमितुरिदमित्थं त्वविभवस्तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि' इति श्रीगुणरत्नकोशश्लोकः - अस्यायमर्थः । हे चन्द्रवदने भगवतस्स्वातन्त्र्यं स्वरूपमिदमित्थमिति प्रतीयमानवस्तुनीदंमंशात्मकं व्यावृत्तधर्मिस्वरूपं - स्वातन्त्र्यं सर्वेश्वरत्वरूपम् - त्वदाश्लेषोत्कर्षात्, 'श्रद्धया देवो देवत्वमश्नुते' इत्यादि प्रमाणेन - त्वत्संबन्धकृतातिशयात् निष्कर्षसमये, विमर्शकाले - भवति खलु- भूसत्तायाम् । सद्भवति लब्धसत्ताकं भवति प्रतीतिव्यवहारयोग्यता नास्ति तद्वत्त्वदाश्लेषोत्कर्षाभावे सर्वेश्वरस्वरूपं स्वरूपनिरूपक धर्माभावेनेतरव्यावृत्त पतीति योग्यं जगद्रक्षणादिव्यवहारयोग्यं च -

(सा.प्र) स्वारस्यापवादकाभावात् 'अहं ता ब्रह्मणस्तस्य साहमस्मि सनातनी' इत्याद्युक्तप्रकारेण नारायणलक्ष्यादिदमित्थं स्वोक्तिविरोधात्तदन्तर्भावादिति स्वरूपनिरूपकतयावर्जनीयज्ञासत्त्वेन भगवदभिधायकेन कृत्स्नेनाभिहितत्वरूपान्तर्भावोक्तिविरोधाच्च वैरूप्याङ्गीकारो न युक्त इत्यर्थः - ननु विशेषणत्वस्वारस्यापवादकाभावादित्ययुक्तम् -

(सा.वि) स्वरूपमिति । 'स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसमये। त्वमासीर्मातिश्श्रीः कमितुरिदमित्थं त्वविभवस्तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि' इति श्लोकः हे चन्द्रवदने, त्वदाश्लेषोत्कर्षात् । मणिप्रभान्यायेन त्वदपृथक्सिद्धविशेषणवशात् । स्वरूपं, भगवत इतरव्यावृत्तासाधारणधर्मि- स्वातन्त्र्यम् -

(सा.सं) स्वारस्यத்துக்கு इति - विशेषणपरतया प्रसिद्धि प्राचुर्यं तन्निवन्धन शीघ्रोपस्थितिमत्वं -

मू - प्रसिद्धமான कूटस्थसंप्रदायविरुद्धமாகப் பண்ணுகிற இவ்विभागं अनुपपन्नम्

(सा.दी) षोत्कर्षात् । अन्वयविशेषात्सिद्धिக்குமென்றது- कूटस्थர், नाथ, यामुन, भाष्यकारादिகள் -

(सा.स्वा) न भवतीत्यर्थः इदमिति हेतुगर्भविशेषणम् - धर्मिमात्रस्वरूपतया न कार्यक्षममिति भावः । अतः अतः - 'अप्रगृह्ये स्मृतौ वाक्ये' त्यमरः 'श्रद्धया देव' इत्यादिवाक्यसिद्धादुक्ताद्धेतोः त्वं कमितुः, नायकस्य भगवतः इदमित्थं त्वविभवः इदं पदार्थधर्मिस्वरूपव्यावर्तकस्वरूपनिरूपकरूपा - इत्थं त्वविभवः इदमित्थमिति प्रतीयमाने वस्तुनि इदं त्वशब्दार्थप्रकारता स्वरूपा आसीः - यद्वा, इदं पदार्थधर्मिस्वरूपसलन्धीत्थं त्वविभवः - धर्मिस्वरूपाभावे इत्थं त्वमात्मकस्यापि सत्तालाभो नास्तीत्यर्थः । ननु विशेष्य स्वरूपस्य श्रीशब्दार्थविशेषणं विना प्रतीतिकार्यायोग्यत्वे 'सदेव सोम्येदमग्र आसीत्' इत्यादौ भगवत एव कथमुपादानमित्यत्राह । तदन्तर्भावात्त्वामिति - त्वां श्रुतिरपि तदन्तर्भावात्, तदपृथक्सिद्धविशेषणतया प्रवृत्तिनिमित्तीभूयविशेष्यवाचकशब्दान्तर्भावात् । पृथङ् नाभिधत्त इत्यर्थः यद्वा, तत्सन्नियोगशिष्टत्वात्पृथङ् नाभिधत्त इत्यर्थः अयमर्थो भूलमन्त्राधिकारे स्पष्टः । भवत्पक्षे उत्तरखण्डेन एकरूपस्य शब्दस्य अर्थवैरूप्याश्रयणं शब्दस्वारस्यभङ्गः - कूटस्थसंप्रदायविरोधश्चेति दोषत्रयं दुर्निवारமென்று கருத்து- कूटस्थेति -

(सा.वि) सर्वेश्वरत्वं भवति - 'अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति' इत्युक्तरीत्या त्वदाश्लेषोत्कर्षाभावे घटत्वाभावे घटस्य स्वरूपमिव स्वरूपं न स्यात् - श्रीमत्त्वस्य सर्वेश्वरत्वावच्छेदकत्वाभावेऽवच्छेद्यं सर्वेश्वरत्वमपि नस्यादिति भावः त्वदाश्लेषोत्कर्षाभावे कथं स्वरूपासिद्धिरित्यत्राह त्वमासीरिति हे श्रीर्मातः कमितुः, प्रियस्य - निष्कर्षसमये, इतरव्यावृत्त स्वरूपज्ञानसमये - त्वं इदमित्थं त्वविभवः अस्य वस्तुनः इत्थंत्वं असाधारणधर्मस्य विभवः तद्रूपा ह्यासीः त्वां विना स्वरूपं बुद्ध्यारूढं न भवति - अतस्त्वत्संश्लेषाभावे स्वरूपासिद्धिरित्युक्तेति भावः । यद्वा, त्वद्विशिष्टस्वरूपे कमितरि इदमित्थमिति निष्कर्षसमये प्रियाद्विवेचने प्रियस्वरूपादेतत्स्वरूपविवेचनवेलायां घटे विशिष्टे विशेष्याद्विवेचनवेलायां यथा घटत्वमिति भवति। तथात्वमासीरिति भावः। अत एव कारणत्वादि प्रकरणे पृथगनुक्तिरित्याह । तदन्तर्भावादिति । श्रुतिरपि 'सदेव सोम्येदमग्र आसीत्' इत्यादि श्रुतिरपि। सदादिशब्दानां कारणत्वप्रतिपादकपुरुषसूक्तोक्तश्रीपतौ पर्यवसानावश्यंभावात्तत एव त्वत्प्रतीतिरिति सिद्धेस्त्वां पृथङ् न वक्तीत्यर्थः - ननु सद्ब्रह्मात्मादिशब्दानामुत्तरोत्तरविशेषपर्यवसायिनां 'एको ह वै नारायण आसीत्' इति श्रुत्युक्तनारायणे पर्यवसानमुक्तम् - कथं श्रीमति पर्यवसानमिति चेन्नैवं नारायणशब्दस्यासाधारणत्वेन व्यक्ति विशेषोपस्थापनेऽपि तद्व्यक्तिविशेषस्य श्रीपादलाक्षारसाङ्क -

(सा.सं) चात्र स्वारस्यम् - कूटस्थपदं 'அகலகில்லேன்' इत्यादि गाधाप्रणेतृ प्रपन्नजनकूटस्थपरम्। तन्मूलको हि स्वरूपमित्यादिकस्साम्प्रदायिक ग्रन्थः नहीदं विभवः इत्थं त्वविभवश्च -

मू - अनन्योपायत्वविरुद्धமான उपायद्वित्वप्रसङ्गं இவ்விடத்தில் बाधकமானாலோவென்னில்? अनन्य प्रयोजनत्वविरुद्धமான प्राप्यद्वित्वप्रसङ्गத்தாலே उत्तरखण्डத்திலும் विशेषणत्वं தவிர प्रसङ्गिக்கும்- ஆனால் இரண்டிடத்திலும் उपलक्षणமானாலோவென்னில்? गुणविग्रहव्यापारविशेषங்களும் இரண்டிடத்திலும் उपलक्षणங்களாக प्रसङ्गिக்கும்- उपयुक्तங்களாகையாலேயவை विशेषणங்களென்னில் இதுவும் पूर्वोत्तरखण्डங்களில் पत्नीसंबन्धத்திலும் तुल्यम्-

(सा.दी) बाधकं शङ्किக்கிறார். अनन्योपायत्वेत्यादि - उपायद्वित्वத்தில் एकपदसिद्धமான भगवदनन्योपायत्वं भग्नமாமென்று கருத்து- प्रतिबन्धियாலே परिहरिக்கிறார். अनन्यप्रयोजनत्वेत्यादि - अविशेषणत्वं प्रसङ्गिக்கும் इष्टप्रसङ्गமென்று शङ्किக்கிறார்- ஆனாலென்று गुणविग्रहादिகள் उपायोपयुक्तங்களாகையால் विशेषणங்களென்னில் पत्नीसंबन्धத்திலுமொக்குமென்கிறார்- उपयुक्तங்களென்று गणादिகளிற்போல் -

(सा.स्वा) परान् प्रत्युपालम्भोक्तिः - இந்த श्लोकத்தில் இப்படி अर्थகொள்ளாவிடில் इदं शब्दवैयर्थ्यமும் प्रकारादिपदं विना इदमित्थं त्वविभवः என்று निर्देशமும் असङ्गतமாமென்று கருத்து- बाधकाभावाच्छब्दस्वारस्यभङ्गं கூடாதென்று சொன்னது கூடுமோ? श्रीमच्छब्दத்துக்கு विशेषणपरत्वे अनन्योपायत्वभङ्गरूपबाधकமில்லையோ? என்று शङ्किத்து प्रतिबन्ध उत्तरமருளிச் செய்கிறார். अनन्येति - इष्टापत्तिயில் बाधकமருளிச் செய்கிறார். ஆனால் इति । कारुण्यगुणाद्यभावे रक्षणक्रियानुपपत्ते स्तेषामुपलक्षणत्वं न संभवति என்று கருத்து- परमुखेन परिहारं वाचिப்பியா நின்று கொண்டு उत्तरமருளிச் செய்கிறார்- उपयुक्तेति - स्वातन्त्र्यकारुण्यसंबन्धविशेषैरेव शरण्यன் रक्षकனென்று சொல்லுகிற वादिகளுக்கு इष्टापत्ति கூடாதென்று கருத்து- गुणादिகளிற்போலே -

(सा.प्र) उपायद्वित्वप्रसङ्गस्यैव अनन्योपायत्वविरोधिनो विशेषणत्वविरोधित्वादित्यत्राह - अनन्योपायत्वेत्यादिना - इष्टप्रसङ्गत्वमाशङ्क्य तथात्वेऽनिष्टमाह - ஆனால் इत्यादिना - गुणविग्रहव्यापारविशेषங்களும் इति - उपायत्वोपयुक्ता गुणाः कारुण्यज्ञानशक्त्यादयः - प्राप्यत्वोपयुक्तास्तु आनन्दसौन्दर्यादयः - उपायत्वोपयुक्ता अर्चाविग्रहविशेषाः। उपेयत्वोपयुक्ताः परवासुदेवादिविग्रहविशेषादयः - मोक्षयिष्यामीति सङ्कल्पविशेषा उपायत्वोपयुक्ता व्यापाराः - गुणविग्रहादिनां प्राप्यत्वोपायत्वोपयोगात्तेषां विशेषणत्वाङ्गीकारे लक्ष्म्याश्चोपयोगाद्विशेषणत्वमेवेत्याह - उपयुक्तங்களாகையால் इत्यादिना के वा गुणा उपायत्वोप -

(सा.वि) विनावगन्तुमशक्यत्वात्तस्या अपि तत्पर्यवसानमावश्यकमिति भावः - प्रसिद्धமான इति - उत्र विशेषत्वस्यैव प्रतिपादितत्वादिति भावः -

(सा.सं) वस्तुन उपलक्षणं भवति । तथा सांप्रदायिकोक्त्यापहतं परमतं जीवेदिति भावः - मया दुरूहशिक्षायां स्वरूपमिति श्लोकार्थस्य लिखितत्वादिह च स न विलेखनीयः । बाधकम्, स्वारस्यबाधकम् उपलक्षणங்களாக प्रसङ्गिக்கும் इत्यन्तेन परतर्काणामाभासमानयोगक्षेमत्वमुक्तम् -

मू - उपयोगविशेषங்கள் तत्तद्वस्तुக்களுக்கு अनुरूपமானபடியிலே प्रमाणसंप्रदायங்களாலே கண்டுகொள்வது. वस्त्वनुरूपமாயிறே उपयोगமிருப்பது.

(सा.दी) पत्नीसंबन्धத்தில் उपयोगமேது? என்ன यथाप्रमाणं संप्रदायத்தாலறியலாமென்கிறார்- उपयोगविशेषेत्यादि - उपेक्षै தவிர்ந்து अनुमतिயாலே भगवाனுக்கு मोक्षयिष्यामि என்னும் सङ्कल्प த்தாலே उत्पादिக்கை उपयोगமென்று கருத்து. अनुमन्तृत्वத்தால் पत्निக்கு यागकर्तृत्वமுண்டிறே- प्राप्यप्रापकावस्थाद्वयेऽप्युपकारप्रकारத்தை நம்மாழ்வார் காட்டினாரென்கிறார் -

(सा.स्वा) उपयोगமில்லாமையாலே लौल्यं கூடுமோ? उपलक्षणமென்று சொல்ல வேண்டாவோ? उपयोगமுண்டானாலும் गुणादितुल्यமாயும் उपयोगं सिद्धिக்குமென்று अन्यथासिद्धिसंभावतैயாகையாலே भरस्वीकर्तृत्वादिरूपोपयोगं சொல்லுகிறது கூடுமோ? என்னவருளிச் செய்கிறார் उपयोगेति - चेतनरूपलक्ष्मीविशेषणத்துக்கு अचेतनवदुपयोगं சொல்லுகை श्रियश्चैतन्यग्राहकप्रमाणविरुद्धமாகையாலே तदानुगुण्येन भरस्वीकर्तृत्वाद्युपयोगं சொல்லிற்றென்று கருத்து- ஆனாலும் श्रियः पुरुषकारत्वाद्युपयोगத்தாலும் विशेषणत्वमन्यथासिद्धமன்றோ? भरस्वीकर्तृत्वरूपोपयोगनिर्बन्धமுண்டோ? என்னவருளிச் செய்கிறார்- वस्त्वनुरूपेति 'अस्येशाना जगतो विष्णुपत्नी - ईश्वरीगँ् सर्वभूतानाम् ' इत्यादि प्रमाणबलத்தாலே श्रियस्सर्वभूतेश्वरत्वமும், भगवत्पत्नीत्वமும் सिद्धமானால் पुरुषकारत्वोपयोगमात्रावच्छेदे प्रमाणाभावेन उभयविधोपयोगமுமிங்கு प्रामाणिकமென்று கருத்து- कूटस्थसंप्रदाय

(सा.प्र) युक्तास्तेषां के वा उपयोगप्रकारा इत्यत्र गुणानां बहुत्वात्तेषां तदुपयोगविशेषाणां चोक्तौ ग्रन्थविस्तरस्स्यादिति प्रमाणसंप्रदायाभ्यां ज्ञातव्यत्वमाह - उपयोगविशेषेत्यादिना - सर्वज्ञत्व, सर्व शक्तित्व, सत्यसङ्कल्पत्व, परमकारुणिकत्व, वात्सल्यसौशील्यादयः प्राधान्येनोपयुक्ता गुणाः तत्र सर्वेषां गुणानां सामान्यत उपयोगो भगवत आश्रयणीयत्वज्ञापनम् । प्रातिस्वीकोपयोगस्तु भागवतानामपेक्षितज्ञानं तत्प्रदानविरोधिभूतनिवर्त्यदुष्कर्मज्ञानं च सार्वज्ञस्योपयोगः - तदभिप्रायेणोक्तम् 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इति । शक्तेस्तु विरोधिनिरासः - एतदभिप्रायेणोक्तं 'एवं भूतोऽप्यशक्तस्सन्नत्राणं भवितुं क्षमः । इति बुद्ध्यास्य देवस्य गोप्तृशक्तिनिवारणम्' इति - तेजो -

(सा.वि) प्रमाणसंप्रदायங்களிலே इति - प्रमाणेषु संप्रदायेषु च । उपयोगविशेषங்கள் पुरुषकारत्वरक्षाभरस्वीकारत्वादयः गुणोपयोगाः पूर्वोक्तप्रकाराश्च द्रष्टव्याः । एतदाभिप्रायेणैवोक्तं वस्त्वनुरूप மாயிறே इति । प्राप्यप्रापकावस्थायाः श्रियोऽप्युपकारं पराङ्कुश-

(सा.सं) उपयोगविशेषங்கள் इति - न ह्यूपयोगो ननु गत इति कार्योपयोगिनो विशेषणत्वापलाप इति भावः - वस्त्वन्तरवदनुपयोगादयमुपयोग एव नेति यदि तदा प्रतिबन्द्यभिप्रायेणाह । वस्त्विति - श्रियो विशेषणव्यवस्थापकं वस्त्वनुगुणमेवोपयोगविशेषं प्रमाणसंप्र-

मू - उपायोपेयपरமான வாக்யத்வயத்திலும் श्रुतமான இவ் विशेषणத்தினுடைய उपयोगप्रकारத்தை-

(सा.दी) उपायोपेयेत्यादि -

(सा.स्वा) - विरुद्धமாக வென்று दूषित்தது கூடுமோ? प्रपन्नजनसन्तानकूटस्थரான நம்மாழ்வார் उपयोगविशेषं சொல்லாமையாலே पूर्वखण्डத்தில் विशेषणत्वं கூடுமோ? उत्तरखण्डैकरूप्यத்தாலே विशेषणत्वं கொள்ள வேணுமென்னில் उपयोगाभावத்தாலே उत्तरखण्डத்திலும் विशेषणत्वंகூடாதே? என்னவருளிச்செய்கிறார் - उपायेति - श्रुतமான इति - विशेषेण श्रुतமான शब्दத்துக்கு वैरूप्यकल्पनमसङ्गமென்று கருத்து -वाक्यद्वयத்திலும் इति निर्देशेन उपलक्षणत्वपक्षத்தில் पूर्व -

(सा.प्र) बलवीर्याणांतु श्रमाद्यवद्याभावज्ञावज्ञापनम् - एतदभिप्रेत्योक्तम् - ''बलं वीर्यं तथा तेज इत्येतत्तु गुणत्रयम् । श्रमाद्यावद्याभावाख्यं ज्ञानादेरुपसर्जनम्'' इति श्रमाद्यवद्या भावमाख्यातीत्यर्थः - सत्यसङ्कल्पत्वस्याश्रयणानन्तरमपराधकरणे व्यपेक्षितप्रदानमुपयोगः - एतदभिप्रेत्योक्तं ''अप्यहं जीवितं जह्याम् - दोषो यद्यपि तस्य स्यात्'' इत्यादि - परमकारुणिकत्वस्य भरन्यासरूपव्याजमात्रेणापेक्षित दानमुपयोगः- एतदभिप्रायेणोक्तं ''मित्रभावेन संप्राप्तं न त्यजेयं कथञ्जन'' इत्यादि - वात्सल्यप्रपित्सोस्स्वस्मिन् दोषानुसन्धानेन जनिता योग्यतानुसन्धानस्य प्रतिबन्धः फलम् - एतदभिप्रायेणोक्तं ''दुराचारोऽपि सर्वाशीकृतघ्ने नास्तिकः पुसः। समाश्रयेदादिदेवं श्रद्धया शरणं यदि। निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः'' इत्यादिस्वामित्वस्य चेतनरक्षणे भगवदर्थत्वज्ञापनमुपयोगः - एतदभिप्रायेणोक्तं ''रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत्'' इत्यादि सौशील्यस्य परत्वज्ञानादप्राप्यत्व शङ्कानिरास उपयोगः - एतदभिप्रायेणोक्तं ''गुहेन सहितो रामो लक्ष्मणेन च सीतया। अहं वो बान्धवो जातः'' इत्यादि - एवमादयो गुणानामुपयोगास्तत्र प्रमाणानि च संप्रदायतो ज्ञातव्यानीति भावः। नन्वेवं तर्हि उपयुक्तगुणविशिष्टाद्भगवत एव मोक्षसिद्धेः किमर्थं लक्ष्म्या उपायत्वस्वीकार इत्यत्र तादृग्गुण विशिष्टलक्ष्म्यैव मोक्षसिद्धौ किं भगवत उपायत्वेन लक्ष्मीविशिष्टेन वा भगवता मोक्षोपपत्तौ किं गुणवैशिष्ट्येनेति वैपरीत्यप्रसङ्गे भगवत उपायत्वे गुणानां विशेषणत्वे उपयोगे च प्रमाणसद्भावात्तदङ्गीकारे लक्ष्म्या अप्युपायत्वे ''कामवत्सा अमृतं दुहाना - श्रियं लोके देवजुष्टामुदाराम्। सा नो लोकममृतं दधातु - ईशाना देवी भुवनस्याधिपत्नी - श्रियं वसाना अमृतत्वमायन्। सकृद्विभाता सर्वार्तिं समुद्रपरिशोषिणी। भवगङ्गापहारिणी परनिर्वाणदायिनी। ज्योतिष्मत्यमृतावहा - आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी। ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलिभरं वहते वितीर्य। अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब त्वं लज्जसे कथय कोऽयमुदारभाव'' इत्यादि प्रमाणानां संप्रदायस्य च विद्यमानत्वत्तस्या अप्युपासत्वमङ्गी कार्यमित्यभिप्रायेण तस्या उपयोगं दर्शयति - उपायोपेयपरமான इत्यादिना -

मू - ''வேரிமாறாத பூமேலிருப்பாள் வினைதீர்க்கும்'' என்றும் நின் திருவருளும் பங்கயத்தாள் திருவருளும் கொண்டு நின் கோயில் சீய்த்து என்றும், நம்மாழ்வார் அருளிச் செய்தார் -

(सा.दी) வேரிமாறாத इत्यादि - வேரி, परिमलम् - இத்தால் மாறாத, सततसंबद्धமான பூ. இவளுடைய सर्वविरोधिनिवर्तकत्वத்தை श्रीवाल्मीकि भगवाனும் निबन्धिத்தானென்கிறார் -

(सा.स्वा) खण्ठத்தில் श्रीमच्छब्दश्रवणं व्यर्थமாகப் प्रसङ्गिக்குமென்ற படி - வேரி इति, परिमलम् - மாறாத, विच्छेदिயாத - सदा परिमलवत्तதான - பூமேல், पुष्पोपरि - இருப்பாள், वसिயா நிற்கிற - பெரிய பிராட்டியார் - வினைதீர்க்கும், सङ्कोचाभावादुपायविरोधिपापங்களையும் प्राप्तिविरोधिपापங்களையும் தீர்க்குமென்றபடி - இதனாலே उभयविधपापनिवर्तकत्वமே पूर्वखण्डத்தில் उपयोगமென்று கருத்து - நின் इति - நின் திருவருளும், देवரீருடைய श्रीमत्कृपैயும் - பங்கயத்தாள், पङ्कजத்திலே वसिக்குமவளான பெரிய பிராட்டியாருடைய - திருவருளுங் கொண்டு, दिव्यदंपतिகளுடைய कैङ्कर्य पर्यन्तगुणपरिपाकத்தை अवलंबिத்துக் கொண் டென்றபடி நின்கோயில் சீயத்து त्वदीयदिव्यायतने कैङ्कर्यं பண்ணியென்றபடி - द्वयाधिकारोक्तरीत्या कैङ्कर्यपर्यन्तगुणपरिपाकोत्पादकत्वमुत्तरखण्डத்தில் उपयोगமென்றபடி - प्रपत्तिविधायकचरमश्लोकத்தில் अहं त्वा सर्व -

(सा.प्र) வேரிமாறாத इत्यादि - कदापि सौगन्ध्यविच्छेदरहिते पद्मे स्थिता लक्ष्मीस्सर्वपापनिवर्तनं कुर्यात्किलेत्यर्थः - நின் திருவருளும் इत्यादित्वत्कृपां श्रियः कृपाञ्चावलम्ब्य त्वदावासस्थलसंमार्जनरूप कैङ्कर्यं कृत्वेत्यर्थः - एवं च भगवत्स्वरूपगुणविभूति साक्षात्कारवद्भिः परमाचार्यैः शठकोपैर्लक्ष्म्या उपायत्वोपेयत्वे उक्ते इति तयोः प्रामाणिकत्वमेवेति भावः -

(सा.वि) मुनिरप्याहेत्याह - வேரிமாறாத इति - வேரிமாறாத பூமேலிருப்பாள் வினைதீர்க்குமே. வேரிமாறாத, सौगन्ध्यविच्छेदरहितस्य। பூ पुष्पस्य - पद्मस्य - மேல் उपरि। இருப்பாள், स्थिता श्रीः- வினை, पापानि - தீர்க்குமே, निवर्तये । इदं पापनाशं प्राप्य रुचिमित्युक्तौ परत्वं दर्शितम् - நின் திருவருளும் பங்கயத்தாள் திருவருளும் கொண்டு நின் கோயில் சீய்த்து. त्वत्कृपां लक्ष्मीकृपां चावलम्ब्य त्वदाविर्भवस्थले संमार्जनं कृत्वा - इदं साक्षादुपेयत्वकथनपरम् - भगवता तुल्ययोगक्षेमत्वेनोक्तत्वात् -

(सा.सं) दायाभ्यां दर्शयति। - வேரிமார் इत्यादिना - नित्यपरिमलवत्पुष्पोपरिस्थापापं निवर्तयेदेवेत्यर्थः। निरूपपदं வினை इति पदमुपायविरोधिनमुपेयविरोधिनं च पापमभिधत्ते - तथा च उपायसिद्धेः प्रागुपायविरोधिनिवर्तकियं तत्सिद्ध्यनन्तरमेकाभिप्राया सती उपेयविरोधिनमपि निवर्तयतीत्यर्थकया सूक्तया उपायत्वेनैवोपयोगस्सिद्ध इति भावः । पुरुषकारत्वेनोपयोगपरैषेति न भ्रमितव्यम्। தீர்க்குமே इत्यश्रवणादिति हृदयम् - तर्हि किं भगवता? यदि द्वौ पापनिवर्तकौ तर्ह्येकैकावशक्तै स्यातामिति कुशङ्कां प्रमाणेन परिहरति। நின் திருவருளும் इति। சீய்த்து इति पदं संमार्जनवत्प्राप्यं सर्वमपि कैङ्कर्यजातमुपलक्षयति'' न हि शक्त्या विनाकश्चिच्छक्तिमानस्ति कारणम्। नैव शक्तिमता हीना शक्तिस्स्यात्कारणं क्वचित्'' इति श्री श्रीमतोः -

मू - ''अलमेषा परित्रातुं राक्षस्यो महतो भयात्'' என்றும் ''अलमेषा परित्रातुं राघवाद्राक्षसीगणम्'' என்றும் श्रीवाल्मीकिभगवान् शरणागतिसारமான आदिकाव्यத்திலே निबन्धित्தான். ''संसारार्णवतारिणीम्'' என்று हिरण्यगर्भकाश्यपादिகளும் சொன்னார்கள் - ''वाचः परं प्रार्थयिता प्रपद्येन्नियतः श्रियम्'' என்று श्रीशौनकभगवान् विधित्தான் -

(सा.दी) अलमेषेत्यादिயால் - महतो भयात्परित्रातुं, सर्वविरोधिभ्यः परिपातु மென்கை। तत्माद्युष्मान्प्राणभयादपि परित्रातुमल மென்று கருத்து राघवो यदि युष्मान् जिघंसति तस्मादपि यं युष्मान् परित्रातुमलम्। अतस्सर्वविरोधिभ्यस्त्राणे समर्थै என்றபடி। सामान्यतस्सर्वविरोधिनिवर्तकत्वं இங்கு अभिप्रेतமாகையால் संसाराख्यविरोधिயில் நின்றும் रक्षणமுமிங்கு सिद्धமென்று கருத்து- शरणागति सारமான, शरणागतिरेव सारतया प्रतिपाद्य यस्य तत् - आदिकाव्यशब्दத்தால் ''नते वागनृता काव्ये - काव्यं रामायणं कृत्स्नम्'' इत्यादिயும் सूचितम् - இவளுடைய साक्षात्संसारतारकत्वத்தில் प्रमाणं காட்டுகிறார் - संसारार्णवतारिणीमित्यादि - हिरण्यगर्भादिसंहितैகளில் சொல்லப்பட்ட தென்றபடி वाचः परमिति - वाचः परं, वाचामगोचरमहिमानं नारायणम्। प्रार्थयिता, प्राप्तुकामன் - श्रियं नियतः प्रपद्येत्, श्रीप्रपत्तिं कुर्यात् என்கை.

(सा.स्वा) पापेभ्यो मोक्षयिष्यामि'' என்று ईश्वरனுக்கே अनिष्टनिवर्तकत्वं சொல்லுகையாலே तद्विरुद्धமாக இப்படி சொன்னது கூடுமோ? प्रबलप्रमाणं வேண்டாவோ? என்ன प्रमाणங்களை उदाहरिக்கிறார்- अलमित्यादिना । एषा महतो भयात्, संसाराख्यमहाभयादपि - त्रातुमलं, समर्था। किंपुनः प्राणभयाद्भवतीनां रक्षणेயென்று கருத்து - अलमिति राघवेऽपि यदि राक्षसी गणं जिघांसति तस्मादपि राक्षसीगणं त्रातुमियमलंम् - उतस्सर्वविरोधि निवर्तकत्वं कैमुत्यसिद्धமென்று கருத்து. शरणागतिसारமான इति। शरणागतिरेव सारतया प्रतिपाद्या यस्मिन् तच्छरणागतिसारम् - आदिकाव्येति, ''वागनृता काव्ये काचिदत्र भविष्यति। काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्'' इत्यादिकं सूचितமென்றபடி - संसारेति - ''सर्वकामप्रदां रम्यां संसारार्णवतारिणीम्। क्षिप्रप्रसादिनी (देवीं) रम्यां शरण्यामनुचिन्तयेत्'' इति वचनम्। वाचः परमिति। परं तात्पर्यविषयीभूतं श्रीमन्नारायणम्। प्रार्थयिता, तत्प्राप्तिकाम इति यावत्। श्रियं नियतः प्रपद्येत् - नियतः नियम विशिष्टस्सन् - नियमेन प्रपद्येदित्यर्थः। नतु वाचः परं जिज्ञासुरित्युक्तम् - இதினாலே साक्षान्मोक्षसाधनत्वं சொல்லிற்றென்று கருத்து -

(सा.प्र) ''न ते वागनृता काव्ये काचिदत्र भविष्यति'' इति ब्रह्मदत्तवरवाल्मीकिनोपायत्वोक्तेस्तद्वदेव प्रमाणतमेषु भगवच्छास्त्रादिषूक्तेश्च तत्स्वीकार्यमित्याह - अलमेषेत्यादिना -

(सा.सं) शक्तिशक्तिमद्भावपरपञ्चरात्रवचनात्कुशङ्कापरिहारोऽत्र द्रष्टव्यः। वाचः परं, वाचामगोचरं स्थानम् - यथा ''मुमुक्षुर्वै'' इति श्रुतिर्विधिपरा तथावाचः परं प्रार्थयिता सन् पुरुषः प्रपदनं कुर्यादित्यस्यापि विधिपरत्वाद्विधित्தான் इत्युक्तम्। -

मू - ''आत्मविद्या च देवि त्वं विमुक्तिफल दायिनी'' என்று पुलत्यवसिष्ठवरप्रसादलब्धपरदेवतापारमार्थ्य ज्ञानமுடைய श्रीपराशरब्रह्मर्षि அருளிச் செய்தான் - विमुक्तिफलदायिनी என்கிறவிது आत्मविद्याविशेषणமானாலும் तत्सामानाधिकरण्यத்தால் அது இவளுடைய विभूतिயாயிற்று. श्रियः पति தானும் ''यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम् । निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः'' என்று श्रीसात्वतத்திலே श्रियः (श्री) पतिरूपध्यानத்திலேயருளிச் செய்தான் - तत्परங்கான शास्त्रங்கள் நிற்க -

(सा.दी) वाचः परமென்று प्रपत्तिफलं சொல்லுகையால் उपायत्वं सिद्धम् । आत्मविद्येति । विमुक्तिफलदायिनी त्वमेव । यद्वा, विमुक्तिफलदायिनी या आत्मविद्या அதுவும் நீயேயென்று अन्वयम्- आलम्ब्य, प्रपद्य - यां प्रपद्य निस्तरन्ति என்று समभिव्याहारத்தால் संसारतरणं श्रीप्रपत्तिसाध्यமாய் தோற்றும் श्रीपतेः रूपध्यानमुच्यते अस्मिन्प्रकरणे. அந்த प्रकरणத்திலென்கை - श्रीसूक्तादि तत्परशास्त्रங்களைக் காட்டிலும் मध्यस्थங்களான श्रीशठकोपदिव्यसूक्त्यादि शास्त्रங்கள் अतिप्रबलங்களென்கிறார் - तत्परங்களான इत्यादि । तत्परशास्त्रங்களுக்கு पक्षपातमापादिத்தாலும் मध्यस्थशास्त्रங்களில் -

(सा.स्वा) आत्मविद्येति - देवि त्वमिति - व्यवहितत्वादिमुक्तिफलदायिनीत्यस्य आत्मविद्यायां नान्वयः - किन्त्वव्यवहितत्वात्त्वमित्यत्रान्वय इति भावः पुलस्त्येत्यादिना प्रामाण्यदृढीकारமென்று கருத்து- இனி व्यवहितान्वयमभ्युपेत्यापि परिहारமருளிச் செய்கிறார் - विमुक्तीति - विभूतिभूतात्मविद्याया विमुक्तिदायिनी त्वं विभूतिमतीति श्रीगतमेव - स्तुत्यर्थमौपचारिकं प्रयुक्तम् - இதினாலே பிராட்டிக்கு विमुक्तिदायिनी त्वं सुदृढமென்று கருத்து- இங்கு विमुक्तिसाधनत्वमात्रपरत्वे विमुक्तिफलसाधनमित्येव निर्देशस्स्यात् - दायिनीति चेतनगतदातृत्वकथनमसङ्गतமென்று கருத்து- ஆகையால் सामानाधिकरण्यलब्धविभूतित्ववत्या विद्याया मोक्षदायिनीत्वे विभूतिमत्याः श्रियः कैमुत्यसिद्धं मोक्षदायिनीत्व மென்று கருத்து - श्रियः पति தானும் इति - எதிரி கைவிடுதீட்டான கணக்கிலென்றபடி -यामालभ्व्य, प्रपद्यஎன்றபடி. अचिरेण, साधनान्तरव्यवधानमन्तरेण என்றபடி - व्यक्तध्यानपरायणाः यामालभ्व्येत्यन्वयः । श्रिय अनाश्रयणे मदाश्रयणमात्रात्त्रिगुणनिस्तारो न संभवति என்று கருத்து - ''आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी'' என்று साक्षान्मोक्षसाधनत्वप्रतिपादक प्रमाणापेक्षयाधिकार्थाभावात् यामालंब्य என்கிற वचनोपादानं व्यर्थமன்றோ? என்னவருளிச் செய்கிறார்- तत्परेति - तत्परशास्त्रங்களுக்கு -

(सा.प्र) तत्परங்களான शास्त्रங்கள் நிற்க इति । लक्ष्म्या उपायत्वोपेयत्व, सर्वकारणत्व, सर्वान्तर्यामित्व, प्रतिपादनपरलक्ष्मीतन्त्राद्यपर्यालोचने अपि उदाहृतवाल्मीकि, हिरण्यगर्भ, काश्यप, -

(सा.वि) आत्मविद्याविशेषणமானாலும் इति - विमुक्तिफलदायिनी आत्मविद्या च देवि त्वमिति सामानाधिकरण्यान्मोक्षविद्यात्वद्विभूतिरित्यर्थः - श्रियः पतिरूप ध्यानத்திலே - रूपध्यानप्रकरणे ।

(सा.सं) विभूतिயாயிற்று इति । दातृत्वस्य चेतनधर्मत्वाद्विद्यायास्तदसंभवाद्विद्या विभूतिकाया देव्या एव दातृत्वपर्यवसानमिति भावः । आलम्ब्य, आश्रित्य । तत्परங்கள் इति । चतुश्लोक्यादीनां -

मू - இம்मध्यस्थशास्त्रங்கள் अतिप्रबलங்கள்- ஆளவந்தாரும் ''जगत्समस्तं यदपाङ्गसंश्रयम्'' என்றும் ''श्रेयो न ह्यरविन्दलोचनमनः कान्ताप्रसादादृते संसूत्यक्षरवैष्णवाध्वसुनृणां संभाव्यते कर्हिचित्'' என்றும் அருளிச் செய்தார்- - श्रीभाष्यकारரும் श्रीवैकुण्ठगद्यத்திலே ''शेषशेषाशनादिसर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या'' என்று भगवत्कैङ्कर्यरूप परमपुरुषार्थं இவள் नियोगத்தின்படியே நடத்தவேணுமென்றருளிச் செய்தார் -

(सा.दी) पक्षपातशङ्कै பண்ணப் போகாமையால் प्रबलங்களென்று கருத்து- उक्तार्थத்தில் पूर्वाचार्यसूक्ति களைக் காட்டுகிறார் - जगत्समस्तमित्यादिயால் - यदपाङ्गसंश्रयम्, यदपाङ्गத்தை संश्रयिத்து अनिष्टनिवृत्यादि स्वाभिलषितத்தைப் பெறுகிறதென்கை. कान्ताप्रसादादृते श्रेयो न என்றால் प्रसादे सति श्रेयः என்று लभिக்கையால் अन्वयव्यतिरेकங்களாலே श्रेयस्साधनत्वं स्वरसமாக प्रतिदिக்க -

(सा.स्वा) स्तुतिपरत्वसंभावनै யுண்டு. இதுக்கு அது கூட இல்லையென்று கருத்து - यद्वा, तत्परங்களான श्रीसहस्रनामादिबहुप्रमाणங்களைவிட்டு श्रीमद्रामायणाद्युपन्यासं கூடுமோ? என்னவருளிச்செய்கிறார். तत्परங்களான इति - இம் मध्यस्थशास्त्रங்கள் अलमेवेत्यारभ्य एतावत्पर्यन्तप्रमाणமல்லாமையாலே श्रीरामायणादिகள் भगवत्पारम्यादिकथनैदंपर्येण प्रवृत्तங்களாகையாலிங்கு प्रसक्तानुप्रसक्तமாக श्रियस्सर्वानिष्टनिवर्तकत्वसर्वेष्टप्रापकत्वादिकथनं श्रीस्तुत्यैदंपर्येण प्रवृत्तங்களென்றபடி. मध्यस्थशास्त्रங்களாகையாலே अतिप्रबलங்களென்றபடி- இனி இந்த प्रमाणानुगुणமாக प्रवृत्तपूर्वाचार्यवाक्यங்களும் श्रियस्साक्षान्मोक्ष साधनत्वे प्रमाण மென்றருளிச் செய்கிறார். ஆளவந்தாரும் इत्यादिना - यदपाङ्गसंश्रयमिति तद्वार्यत्वोक्त्या धारकत्वकथनेन तद्व्याप्तकारणत्वोपायत्वादिकमपि सिद्ध மென்று கருத்து. शेषेति। अत्राज्ञापनं नित्यमुक्तानां सर्वज्ञतया कैङ्कर्योपयुक्तज्ञानोत्पादनं न भवति - किन्तु तत्तदवस्थोचित कैङ्कर्येच्छोत्पादनमिति गद्यभाष्ये विवृतम् - இங்கு नियोगपरமாக व्याख्यातமாயிற்று - नित्यसूरीणां कैङ्कर्यमेतन्नियोगाधीनमित्युक्ते -

(सा.प्र) शौनक, पराशरादि प्रोक्त मध्यस्थशास्त्रैर्लक्ष्म्या उपायत्वमप्रकंप्यम्। स्तावकत्वादि शङ्काप्रसङ्गाभावादित्यर्थः। अथोपायत्वस्य सांप्रदायिकत्वमाह। ஆளவந்தாரும் इत्यादिना। एतद्दर्शन प्रवर्तकैर्यामुनाचार्य, रामानुजाचार्य, भट्टारक, वेदान्तिमुनि प्रभृतिभिरुक्तत्वात्तत्परित्यागोऽपसिद्धान्तमावहेदिति भावः - शेषशेषाशनेत्यादि - नित्यानां नित्यकैङ्कर्यस्यापि लक्ष्म्यधीनत्वान्मुक्तानां कैङ्कर्ये लक्ष्म्यधीनत्वं कैमुतिकन्यायसिद्धमिति भगवत्कैङ्कर्य -

(सा.वि) मध्यस्थशास्त्रங்கள் अतिप्रबलங்கள், तत्परशास्त्राणां पक्षपातित्वान्मध्यस्थशास्त्राणि प्रबलानीति भावः - मोक्षदशाभावि कैङ्कर्यरूपपुरुषार्थस्य लक्ष्मीनियोगाधीनत्वोक्तेरिति लक्ष्म्या उपायत्वं भाष्यकारसंमतमिति तत्सूक्तिं प्रमाणयति - शेषशेषाशनेति - नित्यानां कैङ्कर्यस्य लक्ष्म्यधीनत्वे -

(सा.सं) तत्परत्वेन पक्षपातसंभावनायामप्युदाहृतानि मध्यस्थप्रणीततया अतिप्रबलानीत्यर्थः। अथ संप्रदायवाक्यतोऽप्युपयोगविशेषमाह। ஆளவந்தாரும் इति - यदिति, यत्सङ्कल्पसंश्रयमित्यर्थः।

मू - கூர‌த்தாழ்வானும் 'स्वस्तिश्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थितीः स्वर्गं दुर्गतिमापवर्गिकपदं सर्वंच कुर्वन् हरिः । यस्या वीक्ष्यमुखंतदिङ्गित पराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्य (दा) धास्यरसदास्यादै करस्यात्तया' என்று सङ्ग्रहित्‌த अर्थத்தை 'देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते' என்று துடங்கி विस्तरित्‌தார். भट्टரும் 'ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलिभरं वहतेवितीर्य । अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब त्वं लज्ञसे कथय कोऽयमुदार भावः' என்று श्रुतिயில் उदाशब्दத்துக்கு व्याख्यानं பண்ணினார்.

---

(सा.दी) படுகிறதென்று भावம். तदिङ्गितविरोधिनो विधत्ते - तदनुमत्यैव विधानात्तया सहैव विधत्ते என்று लभिக்குமென்கை. तदा ऐकरस्यात्, ऐककष्ठ्यात् என்றபடி तया सहैव क्रियते चेत् क्रीडारसदा स्यात् नान्यथा என்று சொல்லிற்றிறே- परमं पदं वा वितीर्येति विरोधिनिवृत्तिपूर्वकं परमपदத்தைக் கொடுத்தென்று उपायत्वं சொல்லிற்று- 'श्रियं लोके देवजुष्टामुदाराम्' என்று उदारपदத்தை उदार

---

(सा.स्वा) इतरेषां पुरुषार्थजातं एतत्सङ्कल्पाधीनमित्येतत्कैमुत्यसिद्धமென்று கருத்து- இப்படியாகில் श्रीभाष्यकारருக்கு अत्यन्तान्तरङ्गரான கூர‌த்தாழ்வான் 'सर्वं च कुर्वन्' என்று भगवत एव सर्गादिकारणत्वं சொல்லுகிறது विरोधिயாதோ? என்னவருளிச் செய்கிறார் கூரத்தாழ்வானும் इति - तदिङ्गितपराधीनो विधत्ते, नतु स्वातन्त्र्येण विधत्ते इङ्गितशब्देन तद्धेतुभूतसङ्कल्पो लक्ष्यते - तत्सङ्कल्पसह येन तत्या सहैव विधत्त इति फलितम् । अन्यथा, स्वातन्त्र्येण करणे - तया भगवत ऐकरस्यादियं सर्गादिलीला नरसदा स्यात् । लोके हि समर्थात्यन्तसहृदयसहायं विद्यमानं विना स्वयमेव चतुरकार्यकरणं न रसदं तद्वदिति भावः - विस्तरित्‌தார் इति - तदिङ्गित पराधीन इत्यत्र सङ्ग्रहेण सर्गादिकारणत्वमात्ररूपेण प्रतिपन्नं ज्ञानशक्ति करुणादिभिरप्युत्तरत्र परिच्छिन्नमहिमवत्वं देव्या वर्ण्यमानं पूर्वश्लोके देव्यास्सर्गाद्यम्वयाभावे परिच्छिन्नत्वप्रसङ्गेनानुपपन्नं स्यात् என்று கருத்து- श्रुत्यादिप्रमाणமன்றிக்கே श्रियस्सर्वपुरुषार्थसाधनत्वं கூடுமோ? என்னவருளிச் செய்கிறார்- भट्टரும் इति । 'श्रियं लोके देवजुष्टामुदाराम्' என்கிற उदारशब्दத்துக்கென்றபடி- இப்படியாகில் श्रियस्स्वातन्त्र्येण -

---

(सा.प्र) प्राप्तिरूपमोक्षे लक्ष्म्या अप्युपायत्वं प्रमाणानुसाराद्विवक्षितमिति भावः । देवित्वन्महिमावधिरित्यादि - महिम्नो अवध्यभावो मोक्षप्रदत्व एव भवेदितिभावः । कैङ्कर्यस्य लक्ष्मी-

---

(सा.वि) कैमुतिकन्यायेन मुक्तानां कैङ्कर्यस्य लक्ष्म्यधीनत्वमिति भावः - भगवत् सङ्कल्पसमानविषयो लक्ष्मीसङ्कल्प इति भावः - स्वस्तीति - उपसर्गः, लयः तदिङ्गितपराधीनाः, तत्सङ्कल्पसमानविषयसङ्कल्प इत्यर्थः । तया चैकरस्यादेकाभिलाषकत्वादेकसङ्कल्पकत्वादियं क्रीडारसदा प्रीतिकरी स्यात्नान्यथा, विरुद्धसङ्कल्पकत्वे प्रीतिकरी नस्यादिति भावः - एतेन सृष्ट्यादिव्यापारेषु विशेषणत्वमेव नोपलक्षणत्वमित्युक्तं भवति - 'स्वयं वस्तू कुर्वन् जनमि मकस्मात्सरसिजप्रकारौ -

---

(सा.सं) श्रुतिயில், 'श्रियं लोके' इति श्रुतौ । नह्युदारतापुरुषकारमात्रेणोपपद्यते ।

मू - श्रीसूक्तभाष्यத்திலே பெரிய ஜீயரும் अपेक्षितार्थங்களெல்லாம் उपपादिத்தார்- இப்படி श्रुतिस्मृतिसंप्रदायं நிற்கிற நிலைகளைக் கொண்டு श्रीमच्छब्दத்தில் சொன்ன विशेषणத்துக்கு विग्रहादिகளுக்குப் போலே वस्त्वनुरूपமான उपयोगविशेषங்களை सहृदयர் அறிந்துகொள்வது भरस्वीकाररहितं रक्षा -

(सा.दी) भावः என்று प्रत्यभिज्ञापिத்து विवरिத்தாரென்கை- 'स्वयं वस्तू कुर्वन् जनमिममकस्मात्सरसिजप्रकारौ पद्मायास्तव च चरणौ नश्शरणयन्' என்று भट्टர் लक्ष्मीकल्याणத்தில் நம்மாழ்வார் पाशुरத்துக்கு अर्थமாகவருளிச் செய்த स्तोत्रத்தில் श्लोकादिகளும் अनुसन्धेयम् - இப்படி श्रुतिस्मृति संप्रदायங்களால் श्रीमच्छब्दத்தில் विशेषणत्वेनोक्तैயான பிராட்டிக்கு विग्रहादिகளுக்குப்போல் भरस्वीकाराद्युपयोगविशेषத்தை विमत्सरர் அறிந்துகொள்வதென்று निगमिக்கிறார்- இப்படி इत्यादिயால்- श्रुतिः, द्वयं श्रीसूक्तादिயும் उक्तार्थத்தை कारिकैயால் सङ्ग्रहिத்துக் காட்டுகிறார்- भरस्वीकाररहितमिति - भरस्वीकारादिरहितங்களான गुणादिகளுக்கு विशेषणत्वमङ्गीकरिக்கிற நீங்கள் भरस्वीकारादिसमर्थैயான பிராட்டிக்கு विशेषणत्वமே अनङ्गीकरिக்கிறீர்களில்லை என்கிறார்- भरस्वीकाररहितமென்று. उपायो -

(सा.स्वा) मोक्षसाधनत्वं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார்- பெரிய इति । अपेक्षितेति - पतिपत्नीभावादिना परस्परमैकमत्यादिक மென்றபடி- एतावता वाल्मीक्यादि बहुविधाप्ततमवचनैककण्ठ्यத்தாலும், आप्ततमबहुविधपूर्वाचार्यवाक्यैककण्ठ्यத்தாலும், श्रियोविशेषणतया उपायतयान्वयं सुदृढமென்று उपसंहरिக்கிறார்- இப்படி इति सहृदयர் इति - असहृदयत्वे तावन्मात्रसिद्धமொழிய विशिष्टसिद्धिயில்லையென்று கருத்து - ஆனாலும் பிராட்டிக்கு उपासनादिகளிலே वेद्यतया विशेषणतयान्वयं கூடினாலும் प्रपत्तिविद्यैயிலே विशेषणतयान्वयं கூடுமோ? चेतनवस्तुவுக்குத்தான் चेतनान्तरविशेषणत्वं கூடுமோ? परस्परवैमत्यத்தாலே चेतनरक्षणोच्छेदமும் प्रसङ्गिயாதோ? இருவருக்கும் तुल्यமாக साधनत्वமுண்டாகில் विशेषणतयान्वयनिर्बन्धமுண்டோ? என்னவருளிச் செய்கிறார்- भरस्वीकारेति - इह प्रपत्तिविद्यायां - भरस्वीकारादिरहितं गुण -

(सा.प्र) नियोगाधीनत्वंत् 'अस्या देव्या मनस्तस्मिंतस्य चास्यां प्रतिष्ठितम्' इति लक्ष्मीसङ्कल्प समानविषयतयावगत भगवत्सङ्कल्पाधीनत्वमिति भावः । द्रष्टव्यतयोक्तउपयोगविशेषो भवद्भिरेववक्तव्य इत्याकाङ्क्षायां प्रतिबन्दी प्रदर्शनपूर्वकं विशेषणत्वस्थापनव्याजेन उपयोगमेव दर्शयति । श्लोक द्वयेन भरस्वीकाररहितामित्यादिना । भरस्वीकारो रक्षासङ्कल्पश्चोपयोग इति भावः । ननु -

(सा.वि) पद्मायास्तव च चरणौ नश्शरणयन् इति पराशरभट्टारकैः कृतलक्ष्मीकल्याणे शठकोप श्रीसूक्त्यर्थपरतया कृतस्तोत्रस्थश्लोकोऽपीहानु सन्धेयः भरस्वीकारेति - त्वद्यत्नमन्तरेणाह -

(सा.सं) दातुर्ह्युदारता । नतुदापयितरि । एवं प्रमाणसम्प्रदायाभ्यां प्रकृते निष्पन्नमाह - இப்படி इति, उदारां - कामवत्सामृतं दुहाना इत्यादय इह श्रुतिशब्देन विवक्षिताः । अथ लक्ष्म्या विवक्षितोपयोगविशेषान् सङ्गृह्णान् आग्रहावशाद्विशेषणत्वमनभ्युपगच्छतो मूर्खान् प्रतिगुणादि निदर्शनमुखेनानुशोचति भरेति -

मू - सङ्कल्पवर्जितम् । गुणाधिकमिहेष्टं हि शरण्यस्य विशेषणम् । ऐकरस्य जुषोश्शेषिदम्पत्योस्सर्व-कर्मसु । विशेषणविशेष्यत्वं श्रुतं कस्मान्न रोचते ।

(सा.दी) भवति प्रार्थनायां उपायो भवामीति सङ्कल्पं भरस्वीकारम् - मोक्षयिष्यामीति सङ्कल्पं रक्षासङ्कल्पं - गुणादि, गुणविग्रहादि - इह, मन्त्रे । शरण्यனுக்கு विशेषणமென்று इष्टமாமே உங்களுக்கு. ऐकरस्येत्यादि -सर्वकर्मसु आश्रितरक्षणादिகளில்- ऐकरस्य जुषोः, समाससङ्कल्पत्वं भजतोः । शेषिदंपत्योः । श्रीनारायणர்க்கு, இந்த , हेतुगर्भं - दम्पत्योरेकशेषित्वयोगात् शेषिणो रक्षकत्वात् विशिष्टस्य रक्षकत्वமென்றபடி श्रुतम्, द्वयादिகளில் चेतनस्य चेतन -

(स.स्वा) विग्रहादिकं शरण्यस्य विशेषणमिष्टं हि - भवतामिति शेषः । भरस्वीकाररक्षासङ्कल्प प्रयोजकैकरस्यभाजोश्शेषिदम्पत्योस्तत्तत्कैङ्कर्यजनितामिति शयभाजोः - ऐकरस्यभाजोः - ऐकरस्येति उपायदशायां विशेषणत्वोपपादकम् शेषीति प्राप्तिदशायां विशेषणत्वोपपादकम् । ऐकरस्यं नाम एकस्मिन् कार्ये तुल्यवत्प्रवृत्तयोः परस्परप्रवृत्तावत्यन्तसम्मतिजनितस्सन्तोषविशेषः एवं च सर्वकर्मसु ऐकरस्य जुषोश्शेषिदम्पत्योर्विशेषणविशेष्य 'त्वं श्रुतम्-

(सा.वि) मेवमोक्षयिष्यामिति सङ्कल्पो भरस्वीकारः - गोप्तृत्ववरणे गोप्त्री भवामीति सङ्कल्पो रक्षासङ्कल्पः - तद्रहितमपि गुणादिकमुपयोगवशाद्विशेषणं तत्सहिता श्रीस्तूपयोगाधिक्याद्विशेषणमिति किं वक्तव्यमिति भावः । शेषिदम्पत्योः, शेषित्वाद्दम्पतित्वाच्च सर्वकर्मस्वैकरस्यं भजतोरुभयोरपि रक्षाव्यापारेषु विशेषणविशेष्यत्वमुचितमिति लौकिकदम्पतिःन्यायेनौचित्यं व्यंजितम् - ननु सत्कर्तव्यं तदनया सहेति वचनबलात् लोकसाहित्यमस्तु - इह तु कथमित्यत आह - श्रुतमिति - 'श्रद्धया देवो देवत्वमश्नुते - श्रद्धया लक्ष्म्या सह -

(सा.सं) गुणशब्देन ज्ञानशक्तिकरुणाक्षमावात्सल्यसौशील्याचारादय उक्ताः - आदिशब्दो विग्रहपरः । अयमाशयः । ज्ञानं दोषगुणाद्यवधारणे - शक्तिस्तद्दोषनिवर्तन । करुणापरदुःखप्रहाणे - क्षमा अपराधसहने - सौशील्यपरत्वबुद्धिकृतानुपसमर्पणीयत्वबुद्धिनिरासने वात्सल्यं दोषानुसन्धानेन स्वस्य रक्षासहत्वशङ्कानिरासे - एवमुपयोगाद्गुणादेरिष्टं हि विशेषणत्वम् । अचेतनत्वाद्गुणानां रक्षाभरस्वीकारे रक्षासङ्कल्पौ न स्तः - लक्ष्म्यास्तु तावप्युपयोगविशेषौ - तौ चेद्विशेषणत्वे काविप्रतिपत्तिरित्याशयादाह - ऐकरस्येति - सर्वकर्मसु सृष्टिस्थिति प्रलयस्वर्गदुर्गत्यपवर्गप्रमुखकृत्येषु - एको रसः प्रीतिर्ययोस्तावेकरसौ । तयोर्भावः ऐकरस्यम् - तत्सेवेते इतितज्जुषोः एकशेषित्वाश्रयभूतयोः जायापत्योः - शेषित्वैकरस्याभ्यां भरस्वीकरणरक्षासङ्कल्पवत्वं श्रियः फलितम् - श्रुतम्, श्रीमच्छब्दस्वारस्यसिद्धं विशेषणविशेष्यभावसंबन्धम् - कस्माद्धेतोर्न रोचते - किं प्रमाणाभावात्? उतोपयोगविरहात्? नाद्यः, श्रीमच्छब्दस्य श्रियः अर्थसामर्थ्यस्य च 'அகலகில்லேன்' इत्यादि मानसिद्धस्य प्रमाणसिद्धत्वात् - नद्वितीयः 'सानो लोकममृतं ददातु । श्रियं दुहाना अमृतत्वमायन् ।

मू - प्रतर्दनादि विद्यासु वेद्येऽपि परमात्मनि । अचेतनवदिच्छामश्चेतनंच विशेषणम्। इत्थं प्रपत्तिविद्यायां-

(सा.दी) विशेषणत्वமெங்ஙனே? என்ன இதுக்கு दृष्टान्त மருளிச் செய்கிறார்- प्रतर्दनादीति - प्रतर्दनप्राणादिविद्यैகளில் परमात्मा प्राधान्येनवेद्यனாயிருந்தானேயாகிலும் अचेतनமான प्राणादिகளைப் போலே चेतनரான इन्द्रादिகளையும் परमात्माவுக்கு विशेषणமாக इच्छिக்கின்றோமிறே- அப்படியிங்கும் चेतनैயான பிராட்டிக்கு विशेषणत्वத்திலொரு दोषமில்லையென்று கருத்து- निगमिக்கிறார்- इत्थமென்று

(सा.स्वा) कस्मान्न रोचते? विशेष्यत्वग्रहणं दृष्टांन्तार्थम् - प्रतर्दनादीति - स्पष्टं இதினாலே गुणविग्रहादिवत् प्रपत्तिயிலும் विशेषणत्वं கூடுமோ? என்று परस्परवैषम्यप्रयुक्तशङ्कानिवर्तनமும் चेतनस्य विशेषणत्वமும் கூடுமென்று கருத்து इत्थमिति - इत्थं, प्रतर्दनादिविद्यायामिव -

(सा.प्र) लक्ष्म्या भरस्वीकारे रक्षासङ्कल्पे चाङ्गीक्रियमाणे स्वातन्त्र्येण प्रपदनीयत्वप्रसक्त्या विशेषणत्वं नस्यादित्यत्र उपासने विषयभूतानामिन्द्रादीनां यथा स्वातन्त्र्येण उपास्यत्वमन्तरेणान्तरादित्यादिविद्या स्वचेतन भूतविग्रहादीनामिव विशेषणत्वमेव 'श्रीमन्नारायण स्वामिन् । श्रीमन्नारायणचरणौ - श्रद्धया देवो देवत्वमश्नुते' इत्याद्यनुसाराद्गुणानां लक्ष्म्याश्च विशेषणत्वमेवेत्याह - प्रतर्दनादीत्यादिना । ननु भगवता सत्यसङ्कल्पत्वेन -

(सा.वि) देवत्वं क्रीडनमश्नुते। ''दिवि क्रीडादौ'' इति धातुनिष्पन्नो देव शब्दः- ''आनीतवातगँ स्वधया तदेकम्'' इत्यादि श्रुतिसिद्धमित्यर्थः- द्वयमन्त्रे पूर्वोत्तरखण्डयोश्शब्दस्वरसावगतमिति केचिद्व्याचख्युः- चेतनस्य विशेषणत्वं कुत्रापि न दृष्टमित्यत्राह - प्रतर्दनादीति - ''प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम'' इत्यारभ्य प्रतर्दनेन इन्द्रमुपेत्य हिततमे पृष्टे मामुपास्वेति स्वोपासनमुपदिष्टम् - तत्र जीवोपासनस्य हिततमत्वासम्भवाज्जीवशरीरकपरमात्मोसनमेवोपदिष्टमिति जीवस्व विशेषणत्वमिति भावः - इत्थमिति'' पत्न्या सह धर्मचारिण्या-

(सा.सं) अकलङ्कामृघताधाराज्योतिष्मत्थमृतावहा ''इत्यादिभिर्मूलोक्तप्रमाणैश्चोपयोगस्य सिद्धत्वात् - ननु न्यासविद्यायां श्रियो विशेषणत्वं चेतनत्वादेव नानुमन्यामह इत्यत्राह - प्रतर्दनादीति। प्रतर्दनं प्रति इन्द्रेण ''तं मामायुरमृतमुपास्व'' इत्युक्तम् - तत्र मामिति स्वविशि ष्टोपासनम् - आयुरिति । आयुःप्राण इति श्रवणादचेतनविशेषरूपप्राणविशिष्टोपासनम्। अमृतमिति स्वेन रूपेण चोपासनं विहितम् - विशेष्यतया वेद्ये परमात्मनि प्रतर्दनादि विद्यास्वप्यचेतनप्राणवदिन्द्रधारूपं चेतनं च विशेषणत्वेन विद्यावेद्यमङ्गीकुर्मस्तद्वदिह श्रियो विशेषणत्वे किं बाधकमिति भावः। स्वात्मशरीरकपरमात्मोपासने चेतनस्य स्वात्मनो विशेषणत्वान्मधुविद्यायां कार्यावस्थे कारणावस्थे च उपास्ये वस्वादेश्चेतनस्य विशेषणत्वादादिशब्देन तत्परामर्शः - ननु तासु श्रुत्यनुसारात्प्रसिद्येन्द्र प्राणादो परमात्मासाधारणधर्मन्वयानुपपत्त्या च इन्द्रादिविशिष्टविषयिणीविद्येत्यङ्गीकृतम् - प्रकृते तत्कथमित्यत्राह इत्थमिति । इत्थम्, परतर्केषु -

मू - तत्तन्मन्त्रानुसारतः । विभुः पत्न्या गुणाद्यैश्च विशिष्टो विषयोऽत्र नः ।।

(सा.दी) उक्तप्रकारத்தாலே -तत्तन्मन्त्रानुसारतः - अत्र, प्रपत्तिविद्यैயிலும்,- विभुः, सर्वेश्वरன் - पत्न्या गुणाद्यैश्च विशिष्टः । श्रीमन्नारायणपदोक्तங்களான पत्नीगुणங்களால் विशिष्टனானவனே विषयமாகிறான்- तद्रहितன் विषयமன்றென்றபடி- उक्तप्रमाणங்களில் उपायद्वित्वप्रसङ्गादि तर्कங்களால் अर्थस्यान्यथाकथनं दोषायவாம் என்று पूर्वमेवोक्तं என்கிறார் -

(सा.स्वा) प्रपत्तिविद्यायामपि द्वयादितत्तन्मन्त्रानुसारतः पत्न्याः गुणाद्यचेतनैस्वविशिष्टप्रभुः । नः, शङ्करादिवद्बहिर्भावं विना रामानुजदर्शनप्रविष्टानामस्माकमिति एकदेशिनामपि कृपया ग्रहणम् - विषयः, वेद्यः என்று கருத்து. இப்படி பிராட்டிக்கு ईश्वरत्वोपायत्वं சொன்னால் 'एकश्शास्ता' इत्यादि श्रुतिविरोधं प्रसङ्गिயாதோ? श्रियः जगत्कारणत्वे ब्रह्मत्वं प्रसङ्गिயாதோ? निग्रहकर्तृकत्वं प्रसङ्गिயாதோ? इष्टापत्तिயென்னில் पुरुषकारत्वाभावं प्रसङ्गिயாதோ? ஆகையால் तर्कानुगुण्यத்தாலே श्रियः उपायत्वादि साधकप्रमाणங்களை अन्यपरங்களென்று சொல்ல வேண்டாவோ? என்ன வருளிச் செய்கிறார்-

(सा.प्र) भरे स्वीकृते 'मोक्षयिष्यामि मा शुचः' इत्युक्ते लक्ष्मीकर्तृकभरस्वीकार रक्षासङ्कल्पयोरनपेक्षितत्वाद्भगवत्सङ्कल्पमन्तरेणास्याः कार्यकरत्वानुपपत्तेश्च तस्या उपायत्वस्वीकारे वैयर्थ्यगौरवे प्रसज्येयातामित्यत्र 'नहि वचनविरोधे न्यायः प्रवर्तते' इति न्यायात् तर्काणामेवाभासत्वमिति तत्वत्रयाधिकारे वृथा निर्बन्धமாகாது' इत्युक्त -

(सा.वि) पत्युर्नो यज्ञसंयोग ''इति पतिकर्तृकयज्ञफलभोक्तृत्वाभावे पत्नीशब्दो हि लाक्षणिकः - पूर्वं तत्त्वत्रयाधिकारे ''सर्वावस्थैயிலும் सपत्नीकனாய்க் கொண்டு सर्वावस्थासु पत्नीसाहित्यमभिधाय - तर्हि द्वैराज्यं भगवतस्समाधिकदरिद्रत्वादिभङ्गश्च स्यादिति कुतर्कवादो न कार्यः' इति -

(सा.सं) प्रतितर्कैर्निरस्तेषु सत्सु - अत्र, न्यासविद्यायां - तत्तदिति - 'अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्' इति नियमविधिबलात् विद्याकरणभूते तन्मन्त्रानुसारेण श्रियो विशेषणत्वेन विद्यायास्तद्विशिष्ट विषयत्वे सिद्धे सर्ववेदान्तप्रत्ययन्यायेन' ओमित्यनेन द्वयरूपिणा इत्यादिवचनबलाच्च प्रणवकरणकेऽपि न्यसने ''तया सार्धं जगत्पतिः लक्ष्म्या सह हृषीकेशः'' इत्यादिना शेषित्वेन रक्षकत्वेन च आत्म हविरुद्देश्यमुपस्थापयदकारः उकारवाच्यलक्ष्मीविशिष्टमेवापर्यवसानवृत्त्या श्रीमच्छब्दवदुपस्थापयतीति श्रीविशिष्टस्यैव प्रपत्तव्यत्वेनान्ययासिद्धिः । अकारस्योक्तविधया लक्ष्मीविशिष्टोपस्थापकत्वाभिप्रायेण हि द्वयरूपिणेति द्वयधर्मातिदेशः । एवं मूलमन्त्रादिकरणके अपि नारायणादिशब्दापर्यवसानवृत्त्योपस्थापितो लक्ष्मीविशिष्ट एव सर्ववेदान्तप्रत्ययन्यायेन स्वरूपनिरूपकानन्दत्वादि धर्मविशिष्टवद्विषय इत्यभिप्रायेण तत्तन्मन्त्रानुसारत इत्युक्तम् - गुणाः, सौशील्यादयः - आदिशब्देन विग्रहसङ्ग्रहः नः, अकिञ्चनानां विभुः, उपायान्तरस्थाने स्थित्वा रक्षणसमर्थः - इत्थं विशेषणत्वप्रतीतिस्वारस्य -

मू - இங்கு केवलकुतर्कங்களையிட்டு प्रमाणங்களை बाधिக்கலாகாதென்னுமிடம் முன்பே சொன்னோம்- ஆகையால் यथाप्रमाणं शरण्याभिप्रायविशेषानुगुणமாக विशिष्टமும் उपेयமானாற்போலே विशिष्टமும் उपायமாகக் குறையில்லை नारायणशब्दத்திலும் चरणशब्दத்திலும் தோற்றுகிற

(सा.दी) இங்கு केवलेत्यादि - प्रमाणावगतமான शरण्याभिप्रायविशेषानुगुणமாக எப்படி विशिष्टமே उपेयतया स्वीकरिக்கப்படுகிறது அப்படியே उपायமும் विशिष्टமே स्वीकार्यமென்கிறார்- ஆகையால் इत्यादि शरण्याभिप्रायविशेषமாவது? 'अनन्या हि मया सीता भास्करेण प्रभा यथा - नित्यं मद्धर्मधर्मिणीत्यादि - उपायैक्यहानिशङ्कैயை परिहरिக்கிறார். नारायणशब्दத்திலும் इत्यादि-

(सा.स्वा) இங்கு इति । तत्त्वत्रयाधिकारத்திலே 'कृशानर्थास्ततः केचिदकृशांस्तत्र कुर्वतः' इत्यादिना சொன்னோம் என்றபடி ஆனாலும் विशिष्टமும் उपायமாகில் उपायद्वित्वं प्रसङ्गिயாதோ? अनन्योपायत्वமும் विरोधिயாதோ? उत्तरखण्डத்தில் विशिष्टोपेयतैயில் प्राप्यद्वित्वविरोध மில்லாப்போலே विशिष्टமும் उपायமாகக் குறையில்லையென்னில் அங்கு विशिष्टोपेयत्वं भगवदभिप्रायसिद्धமாகையாலே विरोधமில்லையே? என்னவருளிச் செய்கிறார். ஆகையால் इति - ஆகையால், विशिष्टोपायत्वं प्रमाणसिद्धமாகையால் यथाप्रमाणमिति - இருவர்க்கும் धर्मिग्राहकप्रमाणத்தாலே ईश्वरत्वोपायत्वंமும் सिद्धமாகையாலும், विशेषणविशेष्यभावं सिद्धமாகையாலும். இருவரும் शरण्यராகையாலும் विशिष्टोपायत्वத்தில் குறையில்லை யென்றபடி. भगवदभिप्रायமென்று निर्देशिயாதே शरण्यशब्दनिर्देशத்தாலே उभयाभिप्रायं विवक्षितम् - अभिप्रायविशेषशब्दத்தாலே ईश्वरனுக்கு अहंप्रधानभूत उपायश्च स्यामिति सङ्कल्पமும், इयम्प्रधाणभूता उपायभूता च स्यादिति सङ्कल्पமும், பிராட்டிக்கு अहमप्रधानभूता उपायश्च स्यामिति सङ्कल्पமும் अयं प्रधानभूत उपायश्चस्यादिति सङ्कल्पமும் अनादिसिद्धமாகையாலே तदुभयसङ्कल्पं विवक्षितम् । ஆனாலும் चेतणभूतैயான பிராட்டி विशेषणமென்றால் उपायद्वित्वं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார்- नारायणशब्दத்திலும் इति -

(सा.प्र) मित्याह - இங்கு केवलतर्कங்களை इत्यादिना - एवं चोपायत्वं स्वीकार्यमुपेयत्वं वा परित्याज्यमित्यभिप्रेत्याह - ஆகையால் इत्यादिना - एवं तर्हि मामेकमित्यादि उक्तोपायैक्यविरोध इत्याशङ्क्य यथा गुणविग्रहरूपविशेषणस्यैक्यविरोधित्वं नास्ति। एवं लक्ष्मीरूप विशेषणस्याप्यैक्यविरोधित्वं नास्तीत्याह - नारायणशब्दத்திலும் इत्यादिना गुणानां विग्रहस्य -

(सा.वि) वृथा निर्बन्धமாகாது, इत्युक्तम् - तदेव स्मारयति - केवलकुतर्कங்களையிட்டு इति नोपलक्षितमित्यर्थः - एवं च विशेषणस्य लक्ष्म्या उपायत्वानङ्गीकारे विशेषणत्वासिद्ध्या विशेषणत्वा न्यथानुपपत्त्या उपायत्वं प्रसाध्य उपायद्वित्वशङ्कां वारयतिनारायणशब्दத்திலும் इति -

(सा.सं) भञ्जकपरतर्कनिरासफलमाह । ஆகையால் इति - 'मामेकम् । तदेकोपायता याच्ना । मामेव ये त्वमेवोपायभूत' इत्यादि प्रमाणैरुपायैकत्वावधारणा लक्ष्मीविशेषणता उपायैक्यविरोधिनीत्याशङ्क्य गुणादेर्विशेषणत्वेऽपि यथा न तद्विरोधस्तथेहापीति परिहरति - नारायणशब्दத்திலும் इति -

मू - गुणविशेषविग्रहविशेषादिविशिष्टமான एकं उपायமானாற்போலே तुल्ययोगक्षेमமான श्रीमच्छब्दத்தில் தோன்றின नित्यपत्नीसंबन्धविशिष्टமானாலும் उपायैक्यத்துக்குக் குறையில்லை. उपायविशेषणங்களையெல்லாம் விட்டு उपायத்தை एकமாக்கவேணுமென்னில் उपायत्वமும் विशेषणமன்றிக்கேபோம்-

(सा.दी) முந்த उपेयद्वित्वप्रसङ्गं வருமென்று प्रतिबन्धि சொல்லிற்று- இப்போது ऐक्योपपत्ति சொல்லுகிறதென்று भेदம். विशिष्टस्योपायत्वादैक्यமென்று கருத்து. उपायविशेषणங்களை யெல்லாம் கழிக்கும் पक्षத்தில் उपायस्य उपायत्वமும் विशेषणமாகாதொழியுமென்கிறார். उपायविशेषणங்களை इत्यादि -

(सा.स्वा) पूर्वमुपायद्वित्वप्रसङ्गमुपेयद्वित्वप्रसङ्गप्रतिबन्धिயாலே परिहृतम् । இப்போது उपायैक्य दृष्टान्तத்தாலே उपायैक्यं समर्थिக்கிறதாகையாலே पुनरुक्तिயில்லையென்றும் विशेषणத்தாலே उपायद्वित्वप्रसङ्गादिदोषமில்லையென்றும் கருத்து- विशेषणविवक्षे பண்ணினால் विशेषणமும் उपायமாகையாலே उपायैक्यं சேருமோ? ஆகையால் विशेषणங்களைக் கழித்து उपायमेक மென்று சொல்ல வேண்டாவோ? என்ன बाधकமருளிச் செய்கிறார்- उपायेति - उपायत्वं-

(सा.प्र) लक्ष्म्याश्च समस्तैकपदोपात्तत्वाविशेषात्तस्या उपायैक्यविरोधित्वे गुणानां विग्रहस्य चोपायैक्यभञ्जकत्वं स्यादिति भावः - नन्वेवं तर्हि विग्रहस्य गुणानां च विशेषणत्वं परित्यजाम इत्यत्र बाधकमाह उपायविशेषणेत्यादिना- भगवत्युपायशब्दप्रवृत्ति -

(सा.वि) 'पूर्वमुपायद्वित्वम् இவ்விடத்தில் बाधकமானாலோவென்னில் प्राप्यद्वित्वप्रसङ्गத்தாலே' इति प्रतिबन्ध्या परिहार उक्तः इहतु प्रामाणिकः परिहार इति भावः - गुणविग्रहविशेषादिविशिष्टமான इति - अनुरूपतया अनेकघटितत्वेऽपि विशिष्टस्यैकत्वाद्यथानेकत्वस्य नोपायान्वयस्तथोपायान्त रघटितत्वेऽपि विशिष्टस्यैकत्वादनेकत्वस्य नोपायान्वयः - अत उपायैक्यस्य न विरोध इति भावः - विशिष्टस्योपायत्वोक्तौ योग्यताबलाद्विशेषणे सिद्ध्यदुपायत्वं प्रागवगतैक्यस्य न विरोधीति तात्पर्यम् - अतो यथा गुणविग्रहादिविशिष्टस्य उपायत्वेऽपि गुणविग्रहादेर्नोपायत्वम् - तथा पत्नीसंबन्धविशिष्टस्योपायत्वे अपि पत्न्या नोपायत्वमिति न भ्रमितव्यम्। ननु विशेषणत्वसिद्धावुपायत्वसिद्धिः, उपायत्वसिद्धौ विशेषणत्वसिद्धिरित्यन्योन्याश्रय इति चेन्नपूर्वोक्तप्रमाणबलाज्जगत्कारणत्वादि सिद्धौ भरस्वीकाररक्षासङ्कल्पादि योग्यतासिद्ध्या द्वये पूर्वोत्तरखण्डस्थ श्रीमच्छब्दयोरैकरूप्येणान्वय स्वारस्यद्विशेषणत्वाङ्गीकारे भरन्यासक्रियायां भरस्वीकाररक्षा सङ्कल्पसिद्ध्या उपायत्वसिद्धेरन्योन्याश्रयाभावात् - गुणविग्रहादेस्तु भरस्वीकार रक्षासङ्कल्पाभावान्नोपायत्वमिति प्रागेवोक्तम् - ननु 'सर्वधर्मान्परित्यज्य मामेकम्' इत्यत्र विशेषणान्वयं विना केवलविशेष्यगत्यैक्यमेव विवक्षितमित्यत्र बाधकमाह - उपायविशेषங்களையெல்லாம் விட்டு इति उपायत्वपरित्यागे उपाय एव न सिद्ध्येदिति भावः - पूर्वं श्रियः पतित्वा-

(सा.सं) पत्नीसंबन्धविशिष्टமானாலும் इत्युक्तिः मत्वर्थस्यापि संसर्ग प्रतियोगितया भानाभिप्रायेण - उपायैक्यवादाः विशिष्टे वस्तुनि विशेष्यैक्यपरा इति भावः ।

मू - विशेषणप्रयुक्तमाय् विशेष्यत्तुक्कु वरुमेऱ्ऱत्ताल् विशेष्यत्तुक्कु वैगुण्यादिकळ् वारादॆन्ऱु 'स्वतश्श्रीस्त्वं विष्णोस्स्वमपि तत एवैष भगवान् त्वदायत्तर्द्धित्वेऽप्यभवदपराधीनविभवः। स्वयादीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति च न चान्याहित गुणम्' ऎन्गिऱ श्लोकत्तिले निर्णयिक्कप्पट्टतु -

(सा.दी) नैरपक्ष्यविरोधत्ताल् श्रीक्कु विशेषणत्वत्तैविट्टाल् उपायत्वमन्ऱिक्केयॊऴियुम्- स्वरूपायोग्यत्ताले कार्यंवारामैयाल् स्वरूपयोग्यतैयाकिऱ उपायत्वमुम् अपक्षितमिऱे- श्रीसंबन्धापेक्षैयिल् अस्वातन्त्र्यादि वारादो? ऎन्नवरुळिच् चॆय्किऱार्. विशेषण प्रयुक्तेत्यादि - स्वतश्श्रीस्त्वमिति - भोश्श्रीस्त्वं स्वतो विष्णोः स्वमसि, स्वतश्शेषभूतैयाकिन्ऱाय्. आकैयाल् इन्द भगवान् त्वदधीनर्द्धिमान्। आनालुम् अपराधीनविभवनाकिन्ऱान्- स्वशेषभूताधीनार्द्धत्वे अपाराधीन्यादिति भावः - इव्अर्थत्तिल् दृष्टान्तत्तैक् काट्टुकिऱार्. स्वयेति - रत्नमान रत्नमानतु स्वया दीप्त्या, स्वशेषभूतमान कान्तियाल् महार्घमानालुम् विगुणं न भवति - अश्लाघ्यमाकातु. प्रतिहतस्वातन्त्र्यमुमाकातु.

(सा.स्वा) विवक्षितमाकिल् उपायमेकमॆन्नवॊण्णातु ऎन्ऱु करुत्तु. इप्पडि विशेषणविवक्षै चॊल्ल विशेषणाधीनमाक विशेष्यत्तुक्कु किञ्चित्कारं वेण्डुकैयाले विशेष्यभूतशरण्यनुक्कु स्वतस्सिद्धोत्कर्षवैगुण्यं वारादो? ऎन्नवरुळिच् चॆय्किऱार्- विशेषेणेतिस्वत इति । हे श्रीः त्वं विष्णोः स्वत एव स्वम् । शेषभूता । स्वतः स्वेच्छयैव । नतु जीववत्स्वेच्छां विना स्वरूपतश्शेषभूतेति भावः तत एव, तव शेषत्वादेव । एष भगवान् त्वदायत्तर्धित्वेऽपि स्वशेषाधीनऋद्धिकतया अपराधीन विभवः । तत्रानुगुणं दृष्टान्तमाह । स्वयेति । रत्नं स्वया दीप्त्या, कान्त्या महार्घं भवदपि न विगुणं अश्लाघ्यं न भवति - न कुण्ठस्वातन्त्र्यं, प्रतिहतस्वातन्त्र्यं च न भवति - अन्याहितगुणमपि न भवति - तद्वदत्रापीति भावः । इप्पडि विशेषणप्रयुक्तातिशय वा-

(सा.प्र) निमित्ततया कस्यचिद्धर्मस्याङ्गीकारे घटशब्दप्रवृत्तिनिमित्तस्य घटशब्दार्थत्ववत्तस्याप्युपाय- शब्दार्थत्वस्य आवश्यकत्वात्तेनोपायैक्यविरोधप्रसङ्गः - तदनङ्गीकारे तूपायशब्दाप्रवृत्तेर्भगवत उपायत्वमप्रामाणिकं स्यादित्युभयतः पाशरज्जुरिति भावः। नन्वेवं गुणविग्रहलक्ष्मी रूपविशेषणविशिष्टस्यैवोपायत्वे उपेयत्वे चाकारद्वयस्यापि विशेषणाधीनत्वाद्वैगुण्यमेव स्यादित्यत्राह - विशेषणप्रयुक्तमाय् इत्यादि - एवं विशेषणप्रयुक्तातिशय -

(सा.वि) त्सर्वेश्वरत्वमित्युक्तम् - तत्र सिंहावलोकनेन परप्रयुक्तातिशयवत्वं स्यादित्याशङ्क्य स्वापृथक्सिद्धविशेष प्राप्तातिशयेन नपराधीनातिशयत्वमिति दृष्टान्तप्रदर्शनपुरस्सरपरिहारपरभट्टार्यश्लोकं प्रदर्शयन् परिहारमाह। विशेषणप्रयुक्तमाय् इति - स्वासाधारणरूपे -

(सा.सं) शरण्यवैगुण्यप्रसङ्गमुखेन परोक्तां विशेषणत्वानुपपत्तिमभियुक्त वचनमुखेन परिहरति - विशेषणप्रयुक्तमाय् इति - स्वमसि, निरुपाधिकशेषभूता सर्वमङ्गलशेषभूतासि - त्वदायत्तर्धित्वेऽपि, त्वदधीनवैभवत्वेऽपि अभवदिति क्रियाया अविगुणमित्यादेश्चान्वयः अन्याहितगुणत्वं पराधीनविभवत्वम्-

मू - विशेषणத்தால் विशेष्यத்துக்கு வரும் अतिशयं போலே विशेष्यத்துக்கு स्वरूपानुबन्धिயான अतिशयமும். 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' என்கிற दृष्टान्तத்திலே காணலாம். भास्करனுக்கும் प्रभैக்கும் स्वतस्सिद्धமான तेजस्त्वं போலே இருவருக்கும் 'अनन्याधीनकल्याणं' என்கிறபடியே

---

(सा.दी) अन्याहितगुणமுமாகாது- அப்படியே இங்குமென்கை. नन्वीश्वरனுக்கு विशेषणத்தால் வந்த अतिशयமொழிய स्वरूपानुबन्धिயான अतिशयமில்லையோ? என்னவருளிச் செய்கிறார். विशेषणத்தால் इत्यादि अनन्येति - दृष्टान्तத்தில் भास्करனுக்கும் प्रभैக்கும் स्वतस्सिद्धरूपानुबन्धातिशयமும் अन्योन्य-

---

(सा.स्वा) னென்று சொன்னால் विशेष्यத்துக்கு स्वतस्सिद्धातिशयமில்லையென்றதாக प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார்- विशेषणத்தால் इति । भास्करणेति । भाः करोतीति भास्करः என்று स्वतस्सिद्धप्रकाशवाனான भास्करदृष्टान्तத்தாலே सिद्धமென்று கருத்து- இப்படி विशेषणभूतैயான பிராட்டிக்கு स्वतस्सिद्धातिशयமில்லாமையாலே 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इत्यादि निर्देशं கூடுமோ? श्रियस्स्वत अतिशयமில்லாமையாலே विशेष्यातिशयकरत्वं கூடாதே? किञ्च श्रियः श्रीः - திருவுக்குந்திருவென்றும் परस्परातिशयावहत्वं சொல்லுகிறதுவும் கூடுமோ? என்னவருளிச் செய்கிறார். भास्करனுக்கும் इत्यादिना - अनन्येति - 'अनन्याधीनकल्याणमन्यमङ्गलकारणम् । जगन्निदान -

---

(सा.प्र) वत्वस्य विशेष्यवैगुण्यावहत्वाभावेऽपि तस्य स्वतोऽतिशयितत्वंन स्यादित्यत्र 'सर्वगन्धस्सर्वरसः। आनन्दो ब्रह्म - रसो वै सः' इत्यादि प्रमाणसिद्धं स्वरूपस्यातिशयितत्वं वेदोपब्रह्मणभूते श्रीरामायणे सोदाहरणमुक्तमिति तदेवाह - विशेषणத்தால் इत्यादिना - परस्परातिशयकरतया प्रमाणेषु निर्देशाच्चोभयोस्स्वतोऽतिशयितत्वमित्याह - भास्करனுக்கும் इत्यादिना -

---

(सा.प्र) स्वस्यातिशयवत्वेन पराधीनमहिमवत्वमिति भावः - ननु भगवतो किं स्वतोऽतिशयो नास्तीत्यत आह - विशेषणத்தால் विशेषयத்துக்கு வரும் इति - स्वतस्सिद्धातिशयस्य भास्करस्य प्रभयेव स्वतस्सिद्धाति शयस्य भगवतस्तादृशपत्न्याप्यतिशय इति भावः - अयमर्थोऽभिरूप एवाभरणेन द्योत्यत इत्यादिष्विव अयोगव्यवच्छेदमात्रेणाप्यर्थोपपत्तौ बहुप्रमाणविरुद्धान्ययोगव्यवच्छेदस्य कल्पयितुमशक्यत्वादिति चतुश्लोक्यधिकारेऽप्युक्तम् - 'अनन्याधीनकल्याणमन्यमङ्गलकारणम् । जगन्निदानमद्वन्द्वं द्वन्द्वं वन्दामहे मह' इति भट्टारकृतलक्ष्मीकल्याण श्लोकः - अनन्याधीनकल्याणमद्वन्द्वं स्वतस्सिद्धातिशयवदित्यर्थः। अप्रमेयमिति- यस्य सा 'सीतायाश्चरितं महत्' इत्युक्तप्रसिद्धमहिमा जनकात्मजा यस्य स्वयं तत्तेजः तस्य तेजः अप्रमेयमपरिच्छेद्यं - स्वतोऽतिशयवतो रामस्य जनकजायोगकृतं तेजोऽनिवार्यमित्यर्थः - अनन्या राघवेणेति - राघवसंबन्धेन -

---

(सा.सं) विशेषणायत्तातिशययोगित्वं यदि स्वतोऽतिशयशून्यस्स्यात्तदा स्याद्वैगुण्यं - स्वतोऽप्यतिशयवतो न तच्छङ्कालेशोऽपीत्याह - विशेषणத்தால் इति - காணலாம் इति - स्वतोऽतिशयवान् हि प्रभयाप्यतिशयवान् दृष्टः - नहि ततोऽस्ति भास्करे वैगुण्यंशङ्केति भावः - तर्हि परस्परातिशयावहत्वेन प्राचीनानां व्यपदेशः कथमुपपन्नस्स्यादित्यत्राह - भास्करனுக்கும் इत्यादिना

मू - स्वभावसिद्धकल्याणतैயாலே 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' என்றும் 'तव श्रिया' என்றும் 'உன்திரு' என்றும் 'श्रियश्श्रीः' என்றும் 'திருவுக்கும் திரு' என்றும் अन्योन्यातिशयावहங்களாக विशेषणविशेष्यங்களை निर्देशिக்கிறதற்குக் குறையில்லை -

(सा.दी) विशेषणविशेष्यभावजनितातिशयமுண்டாகிறார் போலென்கை. இஸ்स्वतस्सिद्धातिशयமே अन्योन्यातिशयावहமாக निर्देशिக்க निमित्तமென்கிறார். अप्रमेयं हीत्यादियால்- अप्रमेयंहि तत्तेजः, सर्वोत्कृष्टा जनकात्मजा यास्मत्तच्छेषभूता - இத்தால் विशेष्यத்துக்கு विशेषणाधीनातिशयं सिद्धम् - तवश्रिया என்று विशेषणத்துக்கு अतिशयावहत्वं सिद्धम् - உன்திரு என்று विशेषणमतिशयावहமாக निर्देशम् - श्रियश्श्रीः என்று विशेष्यमतिशयावहமாக निर्देशம். श्रीमच्छब्दத்துக்கு विशेषणपरत्व -

(सा.स्वा) मद्वन्द्वं द्वन्द्वं वन्दामहेमहे 'इति लक्ष्मीकल्यालத்தில் नान्दीश्लोकம் स्वतस्सिद्धातिशय-वस्तुக்களுக்கும் गुणधर्मिभावத்தாலே परस्पर कृतातिशयभाक्त्वं கூடுமென்று கருத்து. ஆனாலும் क्रियान्वयित्वरूपविशेषणत्वं பிராட்டிக்குக் கூடுமோ? आत्महविस्समर्पणरूपक्रियैயில் उद्देश्यकारकत्वं विशेष्यத்துக்கு उपपन्नமானாலும் विशेषणத்துக்கு उपपन्नமோ? என்னவருளிச் செய்கிறார்-

(सा.प्र) உன்திரு, तव श्रीः । திருவுக்கும் திரு, श्रियश्श्रीः - ननु लक्ष्म्या उपायत्वे भरन्यासस्य तां प्रत्यपि कर्तव्यत्वाद्भगवति भरन्यासानन्तरं लक्ष्मीविषय भरन्यासस्याप्यनुष्ठाने 'सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम्' इत्यादिविरोधस्स्यादित्यत्र यथा 'आग्नावैष्णवमेकादशकपालमैन्द्राग्नमेकादशकपालम्' इत्यादिषु समस्तपदोपरिस्थिततद्धितेनाग्नेर्विष्णोरग्नेरिन्द्रस्य च परस्परवैशिष्ट्येनैवैकहविरुद्देश्यत्वम् - तथा 'अकारेणोच्यते विष्णुस्सर्वलोकेश्वरो हरिः । उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा । मकारस्तु तयोर्दास इति प्रणवलक्षणम्' इत्यादि श्रुतिभिरुभयोद्देशेन शेषत्वविधानात् 'लक्ष्म्यास्समस्तं चिदचित्स्वरूपं व्याप्यं तदीशस्य तु सापि सर्वम् । तथापि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी' इत्युक्त्या लक्ष्मीनारायणयोः परस्परवैशिष्ट्येन शेषित्वावगमाच्च स्वरूपभरफलानां तदीयत्वानुसन्धानरूपभरन्यासस्योभयोद्देशेनानुष्ठानसंभवान्नसकृत्त्वविरोध इत्याह -

(सा.वि) सीताया उत्कर्ष उक्तः अप्रमेयं हि तत्तेज इति सीतायोगेन रामस्योत्कर्ष उक्तः । तव श्रियेति, मणेः प्रभेति वदयन्निर्देशः - ततस्तस्याऽतिशयावहत्वम् । உன்திரு, तव श्रीरित्यर्थः । श्रियश्श्रीः, श्रियोऽतिशयावहः अत्र भगवतो लक्ष्म्यतिशयावहत्वमुक्तम् - திருவுக்கும் திரு, श्रियश्श्रीः निर्देशिக்கிறதுக்கு, निर्देश्यमानत्वस्य குறையில்லை, न्यूनता नास्ति-उभयोरपि स्वतस्सिद्धाति -

(सा.सं) परस्परातिशयावहत्वमपि स्वाभाविकम् - विशेषणविशेष्यभावोऽपि स्वाभाविकः न हि तयोरन्योन्योच्छेदकरतेति भावः । नन्वस्तु विशेषणत्वम्तथापि नोपायत्वसिद्धिः - आत्महविस्समर्पणप्रतिसंबधित्वाभावेतदसिद्धेः तत्त्वं चाश्रयभेदे शेषित्वभेदान्निरूपकभेदे शेषत्वभेदाच्च समर्पणयौगपद्यासंभवात् - क्रमेण समर्पणे समप्राधान्याद्विशेषणत्वोच्छेदेन च न संभवतीत्यत्राह -

मू - श्रुतिबलத்தாலே 'द्वौ च सदैकशेषी' என்கிறபடியே 'उभयाधिष्ठानं चैकं शेषित्वम्' என்று சோமாஜியாண்டான் षडर्थसङ्क्षेपத்தில் निष्कर्षिத்தபடியேயிருவரும் एकशेषित्वाश्रयமானபடியாலே हविर्विशेषங்களிலே अग्नाविष्णुप्रभृतिகளுக்குப் போலே आत्महविस्समर्पण प्रतिसंबन्धिகளாகைக்கும் குறையில்லை -

(सा.दी) प्रधानफलத்தையருளிச் செய்கிறார். श्रुतिबलத்தாலே इत्यादिயால் 'पतिं विश्वस्य - अस्येशाना जगतः' என்னும் श्रुतिबलத்தாலென்கை 'मकारस्तुतयोर्दासः । लक्ष्म्यास्समस्तश्चिदचित्प्रपञ्चो व्याप्यस्तदीशस्य तुसापि सर्वम्। तथापि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैक शेषी' द्वौ, श्रीनारायणர்கள் सदा सर्वावस्थैயிலும் उपायोपेयावस्थैகளிலுமென்றபடி. एक शेषी, एकं च तच्छेषी च । जगत एक शेषिभूतं वस्तु - एकशेषित्वाश्रयौ என்றபடி- இந்த संहितावचनத்தை अनुसरित्து उभयाधिष्ठानं चैकं शेषित्वமென்று जगतश्शेषित्वं उभयाश्रयम् । श्रियः पति विष्णुपत्न्युभयाश्रयமென்று षडर्थ सङ्क्षेपाख्यग्रन्थத்தில் निर्णयित्தது- இங்கு प्रभृतिशब्दாத்தால் महेन्द्रादि ग्रहणम् । ननूभयोः प्रतिसंबन्धित्वத்தில் शास्त्रங்களில் 'तं वासुदेवं -

(सा.स्वा)- श्रुतिबलத்தாலே इति । 'पतिं विश्वस्य । अस्येशाना जगतो विष्णुपत्नी मकारस्तुतयोर्दासः' इत्यादिश्रुति என்றபடி. द्वाविति - 'लक्ष्म्यास्समस्तश्चिदचित्प्रपञ्चो व्याप्यस्तदीशस्य तु सापि सर्वम् । तथापि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी' इति भगवच्छास्त्रवचनम् - एकशेषि, एकं च तच्छेषि च एकशेषित्वाश्रयभूतं वस्तु என்றபடி- अग्नाविष्णिवति - प्रमाणान्तरத்தால் अग्निக்கு विष्णुशेषतया विशेषणत्वமிருந்தாலும் हविर्विशेषங்களிலே उद्देश्यकारकत्वं तुल्यமாகயிருக்கிறாப்போலேயென்றபடி- இருவரும் आत्महविस्समर्पणपप्रतिसंबन्धिகளாகில் 'सदेव सोम्येदमग्र आसीत् - एको ह वै नारायण आसीत् - स्वात्मानं मयि निक्षिपेत् - मामेकं शरणं व्रज' इत्यादिகளாலே भगवान्मात्रनिर्देशமும் एकत्वव्यपदेशமும் கூடுமோ?

(सा.प्र) श्रुतिबलத்தாலே इत्यादिना - नन्वेवं तर्हि 'एतस्यवाक्षरस्य प्रशासनेगार्गी सूर्याचन्द्रमसौ विधृतौ तिष्ठतः - अमृतस्यैष सेतुः तमेवं विद्वानमृतइह भवति । तमेवं विदित्वातिमृत्युमेति - आत्मानमेवेमं लोकमुपासीत-मामेकं शरणं ब्रज - तमेव चाद्यं पुरुषं प्रपद्ये -

(सा.वि) शयवत्वात्परस्परातिशयावहत्वोक्तिरुपपन्नेति भावः - विशेषणत्वसमर्थत्वस्य फलमाह - श्रुतिप्रमाणबलத்தாலே इत्यादिना - 'पतिं विश्वस्यात्मेश्वरं अस्येशाना जगतो विष्णुपत्नी' इत्यादि श्रुतिबलादित्यर्थः - ननूभयोरात्महविस्समर्पणप्रतिसंबन्धित्वे 'तमेवं विदित्वातिमृत्युमेति । तमेवं विद्वानमृत इह भवति - तं वासुदेवं शरणं गतोऽस्मि - मामेकं शरणं व्रज' इत्यादिषु भगवन्मात्र -

(सा.सं) श्रुतिबलத்தாலே इति- 'अकारेणोच्यते विष्णुस्सर्वलोकेश्वरो हरिः । उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा । मकारस्तु तयोर्दास इति प्रणवलक्षणम् - अस्येशाना' इत्यादीनीह श्रुतिशब्द विवक्षितानि । द्वौ च सदैक शेषीत्येतद्भगवच्छास्त्रवचनम् । यथा अग्नाविष्ण्वोरेकदेवतात्वेन युगपदेकहविः प्रतिसंबन्धित्वं तथेहापीति भावः - तर्हि

मू - 'युवत्वादौ तुल्येऽप्यपरवशताशत्रुशमन स्थिरत्वादीन् कृत्वा भगवति गुणान् पुंस्त्वसुलभान् । त्वयि स्त्रीत्वेकान्तान् म्रदिमपतिपारार्थ्यकरुणाक्षमादीन्वाभोक्तुं भवति युवयोरात्मनि भिदा'। என்கிறபடியே पत्नीக்கு नित्यपतिपारार्थ्यத்தாலே यागकर्मத்திற்போலே पतिप्रधानமாக शास्त्रங்களில் व्य(उ) पदेशங்களுக்கும் एकன் यजमानன் என்னுமாப்போலே एकव्यपदेशத்துக்கும் குறையில்லை -

(सा.दी) शरणं गतोऽस्मि 'என்று एकेनैव व्यपदेशமும் मामेकं शरणं व्रज एक एव जगत्स्वामी' என்று एकशब्देन व्यपदेशமும் கூடுமோ? என்னவருளிச் செய்கிறார்- युवत्वादौ इत्यादिயால். पतिपारार्थ्ये இது संमति पत्नीக்கு इत्यादि - यागकर्मத்தில்போலே, 'स्नाति अहतं वासः परिधत्ते' इत्यादिव्यपदेशं போலே एकस्यैव प्राधान्याद्व्यपदेशद्वयं युक्तமென்று கருத்து- பொய்கை-

(सा.स्वा) सन्नियोगशिष्टन्यायத்தாலே கூடுமென்னில் அந்த न्यायத்தாலே श्रीमात्रप्रधानकமாகவும் निर्देशं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். युवत्वादाविति असाधारणपतिगुणानुभवेन पत्न्याः पत्न्यसाधारण गुणानुभवेन पत्युश्च लोके भोग विशेषदर्शनान्न्यायेन भोक्तुं गुण व्यवस्थां कृत्वा युवयोरात्मनि भिधा भवति என்கை- पत्न्या नित्यपतिपारार्थ्यात्पतिप्रधाननिर्देश एव என்று கருத்து- यागेति - यजते स्वर्गकामः स्नाति - अहतं वासः परिधत्ते इत्यादौ என்றபடி- एकेति - विशिष्टाभि प्रायमेकत्वव्यपदेशமென்றபடி - தாமரையாள் கேழ்வனொருவனையே-

(सा.प्र) यतः प्रवृत्तिः प्रसृता पुराणी 'इत्यादिषु भगवत एवोपायत्वोक्तिरूपायैक्योक्तिश्च विरुद्ध्येतेत्यत्र सोदाहरणमुत्तरमाह । युवत्वादावित्यादिना लक्ष्म्या नित्यं तदधीनत्वादपृथक्सिद्धविशेषणत्वाच्च प्राधान्यैक्य व्यपदेशयोर्न विरोध इत्यर्थः - ननु साक्षात्कृततत्त्वहित-

(सा.वि) निर्देशः कथमित्यत्राह - युवत्वादाविति - भिदा वैलक्षण्यं नास्ति उभयोस्स्वरूपादिकं तुल्यमित्यर्थः नत्वेकस्मिन् स्वरूपे एतादृशानुभवार्थं भेदकल्पनम् । उभयोस्स्वरूपभेदस्य प्रमाणसिद्धत्वात् - अत्र पतिपारार्थ्यप्रदर्शनायायं श्लोक उपात्तः - पतिप्रधानமாக शास्त्रங்களிலே 'यजेत स्वर्गकामः स्नाति - अहतं वासः परिधत्तेवीक्षते' इत्यादि शास्त्रेषु पत्युः प्राधान्येनोपदेशवत् 'तं वासुदेवं शरणं गतोऽस्मि - तमेवं विद्वानमृत इह भवति' इत्यादिशास्त्रेषु प्रधानமான व्यपदेशங்களுக்கும் एकன் यजमानன் என்னுமாப் போலே एकव्यपदेशத்துக்கும்- मामेकमित्यादिषु एकव्यपेदशस्य च குறையில்லை इत्यन्वयः अयमत्र भावः - 'षष्ठे लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायुध' इत्यत्र किं पुंस एव यागाधिकारः उत स्त्रिया इति संशये पुल्लिङ्गनिर्देशाल्लिङ्गस्य प्रकृत्यर्थत्वेन ग्रहजातिवद्विवक्षितत्वात् याज्योऽपि फलकामो विवक्षितलिङ्गः पुमानेव स्यादिति पूर्वपक्षे कृत्वा उद्देश्यविशेषणस्याविवक्षितत्वाल्लिङ्गस्यान्वय -

(सा.सं) यथा दृष्टान्तमिह प्रधानाप्रधानविवेको न स्यात् । शरण्यैक्यं च भज्येतेत्यत्राह । युवत्वादावित्यादिना । अपरवशता, स्वतोऽनन्यशेषत्वम् - स्थिरत्वं, मृदुत्वम्, व्यस्थितविकल्पार्थो वा शब्दः - भोक्तुं, विहर्तुम् - भिदा, वैधर्म्यम् -

मू - 'தாமரையாள் கேள்வனொருவனையே நோக்குமுணர்வு' என்கிறதற்கும் இதுவே तात्पर्यம்-

(सा.दि) யாழ்வார் முதலானார் दिव्यसूक्तिகளிலும் एकपदप्रयोगமும் विशेष्य प्राधान्याभिप्रायத்தாலேயென்கிறார்- தாமரையாள் கேள்வன் इत्यादिயால் ஒருவனையென்று एकशब्दप्रयोगम् -

(सा.स्वा) நோக்குமுணர்வென்று एकशब्दத்தாலும் अवधारणத்தாலும் पतिमात्रविषगकज्ञानமே तत्त्वज्ञानமென்று பொய்கையாழ்வார் प्रभृतिகள் सूक्तिக்கு गति எது? என்னவருளிச் செய்கிறார். தாமரையாள் इति -

(सा.प्र) पुरुषार्थे दिव्यसूरिभिस्सावधारणं भगवत एवोपायत्वप्राप्यत्वोक्तेः तद्विरोधस्स्यादित्याशङ्क्याह। தாமரையாள் इत्यादि - पद्मालयाभर्तारमेकमेव भक्तिप्रपत्तिरूपं ज्ञानं परिपूर्णानुभवश्च विषयीकुर्यादित्यर्थः । केवलं भगवत उपादाने शक्येऽपि लक्ष्मीवैशिष्ट्यबोधकपदोपादानात्तत्रापि विशिष्टस्योपायत्वं विवक्षितमित्येकशब्दोऽपि तद्विषय इति तद्व्यतिरिक्तमेवावधारणव्यवच्छेद्यम् - अन्यथा 'தாமரையாள் கேள்வன்' इत्युक्ति वैयर्थ्यादिति भावः । "एतस्य वाक्षरस्य - अमृतस्यैष सेतुः तमेवं विदित्वामामेकं - तमेव चाद्यम्" इत्यादि प्राधान्योपदेशैक्योपदेशयोः प्रकारान्तरेण निर्वाहमेव -

(सा.वि) व्यतिरेकाभ्यां डाब्विसर्गबिन्द्वादिगम्यत्वेन प्रातिपदितार्थत्वाभावात् स्त्रिया अप्यधिकार इति प्रसाध्य स्वतो वस्तुवचनादैककर्म्यं स्यादिति तदनन्तराधिकरणे किं दम्पती पृथग्यजेयातामुत सहेति चिन्तायामाख्यातोपात्तसंख्याया गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वादेकैकशः प्रयोगे प्राप्ते सहैव यजेयाताम् - तथा हि कर्मसमग्रं भवति - इतरधा परस्परकर्तृकाज्यापेक्षणादिलोपाद्वैगुण्यं स्यादतस्सहप्रयोगस्संसृष्ट द्रव्यत्वाच्च न पृथक् यष्टृत्वं परस्पर सापेक्षयोरिवाग्नीष्टोमयोर्देवतात्वं दम्पत्योः कर्तृरूपैक्यादग्नीष्टोमौ देवतेतिवत् एकवचनप्रयोग इति सिद्धान्तितम् - यजमानशब्देन कर्तृशानजं तत्तवात्कर्तृत्वस्यैकत्वाद्विशिष्टनिष्ठैककर्तृरूपवाचकैकवचनान्ते एकत्वसामानाधिकरण्येन एको यजमान इति व्यपेदेशेऽपि पत्नी सङ्ग्रहः पत्युः प्राधान्यात्पुल्लिङ्गनिर्देशः - तन्न्यायेनेहापि सहान्वयाभावे क्रीडाविरसा स्यात् - अतस्सहान्वये सति शेषित्वोपायत्वकर्तृत्वादेकत्वनिर्देशः - पत्युः प्राधानत्वात्पतिमात्रवादकपदेन निर्देश इति - தாமரையாள் கேள்வனொருவனையே நோக்குமுணர்வும்- தாமரையாள் கேள்வன், पद्मालयाभर्तारम् - ஒருவன் एकमेव - நோக்கும், विषयीकुर्वत् - உணர்வு, ज्ञानम् - என்கிறதுக்கும், इत्युक्तप्रकारस्यापि இதுவே तात्पर्यம் इदमेव तात्पर्यम् - विशिष्टैक्यावगाहित्व एव तात्पर्यमित्यर्थः एवं यागतन्त्रन्यायेन प्राधान्यैक्य -

(सा.सं) தாமரையாள், कमलालयावल्लभमेकमेव यद्विषयीकरोति तदेव ज्ञानमित्यर्थः இதுவே, यथा दंपतिकर्तृकेऽपि यागे पतिप्राधान्यात्तत्रैकत्वव्यपदेशः। तद्वत् ஒருவனையே इत्युक्तिरुपपन्नेत्यर्थ एव। ननु लक्ष्म्याश्शेषित्वादुपायत्वे ताभ्यां कारणत्वमपि स्यात् - तदुपयुक्ताश्च गुणाः पृथगेवास्या अभिधेयास्स्युरित्यत्राह -

मू - 'तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि' என்கிற வழிகளும் கண்டு கொள்வது- எம்பெருமானைச் சொன்னவிடமெங்கும் பிராட்டியையும் சொல்லிற்றாமென்று துடங்கி உடையவரருளிச் செய்த वार्त्तैயை ஆச்சான் பக்கலிலே கேட்டு நஞ்ஜீயர் सङ्ग्रहित्த்தார் -

(सा.दी) हेत्वन्तरं காட்டுகிறார்- तदन्तर्भावात्त्वाम् என்று भगवत्पारतन्त्र्यार्थ सिद्धत्वात्पृथगनभिधानम्। एकशब्दமும் विशिष्टविषयமென்றபடி- இவ்अर्थத்திலொரு ऐतिह्यமுமுண்டென்கிறார்- எம்பெருமானை इत्यादिயால் ஆச்சான், கிடாம்பி ஆச்சான் प्रसङ्गाल्लक्ष्मीविषयத்தில் -

(सा.स्वा) नियामकान्तरமருளிச் செய்கிறார்- तदन्तर्भावात्त्वाम् इति - भगवन्तं प्रति स्वरूपनिरूपकधर्मतया तत्प्रतीत्यन्यर्गततयाவென்றபடி सूत्र भाष्यादिகளில் श्रीभाष्यकारர் இந்த परिहारं சொல்லாமையாலே இந்த परिहारं सांप्रदायिकமோ? என்னவருளிச் செய்கிறார்- எம்பெருமானை इति - இப்படி सर्वावस्थैகளிலும் பிராட்டி विशेषणभूतैயாகையாலே अविनाभूतैயாகில் भगवदालयங்களிலே पृथक्காக श्रीप्रतिष्ठार्चनादिகளும், तदालयनिर्माणादिகளும் असङ्गतங்களாக प्रसङ्गिயாதோ? அந்த आलयसमृद्ध्यर्थकமாக काम्यतया शास्त्रचोदित மாகையால்

(सा.प्र) तदन्तर्भावात्त्वामित्यादिना । स्वरूपनिरूपकधर्मं विहाय केनापि सर्वैश्वर्यबोधकशब्देन बोधनानुपपत्तेर्लक्ष्म्याश्च स्वरूपनिरूपकत्वाद्भगवदुक्त्यैव साप्युक्तेति भावः - भगवदुक्तौ सर्वत्र लक्ष्म्या अप्युक्तिस्संप्रदायसिद्धेत्याह । எம்பெருமானை इत्यादिना - 'प्रपत्तिर्विश्वास' इत्यादि संस्कृतवाक्यवदिदं द्रामिडभाषावाक्यमपि मुक्तकं संप्रदायगतमिति संप्रदायः - ஆச்சான், यतीन्द्रमाहानसिकाः । ननु भगवच्छास्त्रे 'हृदयादीनि चाङ्गानि लाञ्छनं कमलादिकम् । भूषणं च किरीटाद्यां लक्ष्म्याद्याश्शक्तयस्तथा। गरुडो मूर्तयश्चान्यादेहे देवस्य यास्मृताः व्यापकस्य तथात्वेन स्वे स्वे स्थाने प्रभात्मिकाः। तद्देहसंस्थितास्सर्वे -

(सा.वि) व्यपदेशमुक्त्वा श्रीमदादिशब्देषु प्रवृत्तिनिमित्तत्वादिनापि तत्सिद्धिमाह तदन्तर्भवादिति । என்கிறபடிகளும் கண்டுகொள்வது, एतदुक्तप्रकाराश्च द्रष्टव्याः । अविनाभावलक्षण संबन्धलक्षणादयो बहुवचनग्राह्याः - न्यायसिद्धमर्थं भाष्यकारा उपदिदिशुरित्याह - எம்பெருமானை इति - ஆச்சான், यतीन्द्रमाहानसिकाः - கேட்டு, श्रुत्वा - ननु भगवच्छास्त्रे लक्ष्म्यर्चनं त्रिविधमुक्तम् - लयार्चनम्, भोगार्चनम्, अधिकारार्चनञ्चेति - 'हृदयादिनि चाङ्गनि लाञ्छनं कमलादिकम् । भूषणं चकिरीटाद्यं लक्ष्म्याद्याश्शक्तयस्तथा । गरुडो मूर्तयश्चान्या देवदेवस्य या स्मृताः । -

(सा.सं) तदन्तर्भावादिति - नहि भास्कर उदित इत्युक्ते प्रभायाः पृथगुदयो वाच्यः । तद्वत् 'यस्सर्वज्ञस्सर्ववित्' इत्यादयश्च सन्नियोगशिष्टयोरेकधर्मपरवाक्यवदुभयान्वितगुणाभिधायिन इति किं पृथगभिधानेनेति भावः - तर्हि सर्वशब्दवाच्यता च स्यादित्यत्राह । எம்பெருமானை इति - சொல்லிற்றாம் इत्युक्तिरर्थसामर्थ्यसिद्धतत्तत्पदप्रवृत्तिनिमित्तस्यापनोदकमानाभावनिबन्धना - त्वद्दुरुक्तिविरुद्धास्त्वदुक्तय इति सूचनाय நஞ்ஜீயர் सङ्ग्रहित्த்தார் इत्युक्तिः -

मू - ஆகையாலே काम्यप्रधानமான अधिकारार्चनरूपத்திலும் -

(सा.दी) अर्थान्तरமும் दर्शिया நின்றுகொண்டு निगमिக்கிறார்- ஆகையாலே काम्येत्यादि -

(सा.स्वा) க்கூடுமென்னில் அப்போது अनन्यप्रयोजनமான अधिकारिக்கு அது अनुद्देश्यமாகையாலே प्रणामादिகளுந்தவிர प्रसङ्गिயாதோ? परमैकान्तिக்கு नित्यं लक्ष्मीप्रणामार्चनादिकं नित्यங்களிலே विहितமாகையாலே கூடுமென்னில் அந்த प्रमाणं पत्यविनाभूतलयभोगार्चनपरமாகையாலே काम्यविग्रहத்தில் प्रसरिயாதே? என்னவருளிச் செய்கிறார்- ஆகையாலே इति - ஆகையாலே, नित्यपति -

(सा.प्र) पूजनीयाः क्रमेणतु । परिवारं विना मन्त्रैः स्वैस्त्यैरर्घ्यादिभिर्द्विज । लययागो ह्ययं विप्र हृदादिष्वनुकीर्तितः । तस्माद्धृत्कर्णिकाधारे मूर्तौ वा यत्र कुत्रचित् । मूलमन्त्रशरीरीस्थं परिवारं यजेत्तदा। याग एष लयाख्यस्तु संक्षिप्तस्सर्वसिद्धिदः । मन्त्राराट्कर्णिका मध्ये लक्ष्म्याद्याः केसरादिषु । साकाराः केवलास्सर्वे यत्र भोगाभिदस्सतु । केवलेन च यागेन पृथग्भूतेन नारद । पूजनं कमलादीनामधिकारा भिधस्सतु । एवं कृत्वा लयाख्यं तु यागं भोगाभिदं तथा । ततः क्रमाद्यजेद्देवं भोगैरमृतसंभवैः ''इत्यादिभिरधिकारलयभोगाख्यं त्रिविधं लक्ष्म्यर्चनमभिधाय तेषु मुमुक्षुभिर्लयार्चनभोगार्चन योरेव कर्तव्यत्वमुक्त्वा काम्यप्रधानस्याधिकारार्चनस्य मुमुक्षून्प्रति प्रतिषेधाद्देवतान्तरवन्मुमुक्ष्वनुपास्यभूताया लक्ष्म्या मोक्षोपायत्वं दूरनिरस्तमित्यत्र बुद्धाद्यात्मनो भगवतो मुमुक्ष्वनुपास्यत्वेऽपि नारसिंह, वामन, राम, कृष्णादि विग्रह युक्तस्य तस्योपास्यत्ववत्काम्यप्रधानाधिकारार्चाविग्रह हव्यतिरिक्तविग्रहवैशिष्टयेन लक्ष्म्या अप्यर्चनीयत्वोपपत्तेराधिकारार्चनादिग्रहस्य च प्रणामादिनिषेधाभावात्प्रणामविशेषस्यभरन्यासस्योभयोद्देश्यत्वोपपत्तेर्लक्ष्म्या उपायत्वं युज्यत एवेत्यभिप्रयन्नाह - ஆகையால் काम्य प्रधानेत्यादिना -

(सा.वि) व्यापकस्य तथात्वेन स्वे स्वे स्थाने प्रभात्मिकाः । तद्देहसंस्थितास्सर्वे पूजनीयाः क्रमेण तु । परिवारं विना मन्त्रैस्स्वैस्वैरर्धादिभिर्द्विज । लययागो ह्ययं विप्र हृदादिष्दनुकीर्तितः । तस्माद्धृत्कार्णिकामध्ये मूर्तौवा यत्रकुत्रचित् । मूलमन्त्रशरीरस्थं परिवारं यजेत्तदा । याग एष लयाख्यस्तु संक्षिप्तस्सर्वसिद्धिद । मन्त्रराट्कर्णिकामध्ये लक्ष्म्याद्याः केसरादिषु - साकाराः केवलास्सर्वे यत्र भोगभिधस्सतु । केवलेन च यागेन पृथग्भूतेन नारद । पूजनं कमलादीनामधिकाराभिधस्सतु ।। इत्येतेषु लयभोगार्चनयोरेव मुमुक्षूणामधिकार इत्युक्तौ काम्यप्रधान अधिकारार्चने अधिकारः प्रतिषिद्धः । अतो देवतान्तरवन्मुमुक्ष्वनुपास्यभूतायाः लक्ष्म्याः कथं मोक्षोपायत्वंमित्याशङ्क्य भगवतो बुद्धादिरूपेष्वनुपास्यत्वेऽपि रामकृष्णादिरूपेषूपास्यत्ववदधिकारार्चने अनुपास्यत्वेऽपि लय भोगार्चनयोरुपास्यत्वाददधिकारार्चनेऽपि प्रणामादेरनिषिद्धत्वात् 'गाढोपगूढानि ते' इत्युक्तरीत्या भगवत्सान्निध्यस्यापि सत्वात्प्रणामाद्याचारसंभवान्मोक्षोपायत्वस्य न क्षतिरित्याह- ஆகையாலே इति - काम्यप्रधानेति -

(सा.सं) निरूपितार्थप्रयुक्तं प्रासङ्गिकं च निरूपयति - ஆகையால் इति - प्रमाणसंप्र

मू - विष्णुपत्नीत्वं सुप्रतिष्ठितமாகையாலே लयभोगार्चनங்களிலே प्रवृत्तராய் अनन्यप्रयोजनரான मुमुक्षुक्களுக்கும் काम्यप्रधानமான भगवत्रूपத்தில்போலே मातृत्वाद्युपाधिकமான प्रणामाद्याचारங்களுக்கும் குறையில்லை - இப்படி मध्यस्थदृष्टिயாலே प्रामाणिकार्थங்கள் தோற்றச் செய்தே பற்றினது விடாதொழியில் -

(सा.दी) பிராட்டிக்கு अधिकारार्चनार्थமான रूपं काम्यप्रधानமாயிருக்கும் भोगार्चनरूपं मोक्षप्रधानமாயிருக்குமென்று भगवच्छास्त्रसिद्धम् - இந்த இரண்டு रूपமும் पत्यर्चासहितமென்று, तद्रहितமென்றும் द्विविधम् - भगवाனுடைய रूपமும் द्विदिधम् - काम्यप्रधानமென்றும் मोक्षप्रधानமென்றும் - काम्यप्रधानं मदनगोपालादि - मोक्षप्रधानं रामकृष्णादिरूपम् - पत्यर्चाहितமான काम्यप्रधानाधिकारार्चनरूपத்தில் இருவர்க்கும் பிரிவில்லாமையால்- विष्णुपत्नीत्वं, विष्णुसाहित्यமென்றபடி सुप्रतिष्ठितமாகையால் मोक्षप्रधानமான लक्ष्मीभोगार्चनरूपத்தில் प्रवृत्तரான अन्यप्रयोजनரான मुमुक्षुக்களுக்கும் काम्यप्रधानமான भगवद्रूपத்தில் போல் मातृत्वस्वामित्वप्रयुक्तமான प्रणामाद्याचारத்துக்கு विरोधமில்லையென்றபடி- இப்படியாயிருக்க -

(सा.स्वा) पारार्थ्यத்தாலே अधिकारार्चनरूपं தனிக்கோயில் நாச்சியார்- लयं, திருமார்பிலே विद्यमानं श्रीरूपम् । भोगं, பக்கத்தில் विद्यमान நாச்சியார். இப்படி प्रमाणங்களாலே अर्थनिर्णयं தேவரீர் பண்ணினாலும் लोकाचार्यप्रभृतिகளுக்கு இப்படித் தோற்றாமையாலும் अन्यथाவாகத் தோற்றி निबन्धங்களிலே निबद्धமாகையாலும் जीयர் प्रभृतिகள் व्याख्यानத்தாலே अन्यथा तात्पयं சொல்லவொண்ணாமையாலும் उपलक्षणपक्षத்தை விடக்கூடுமோ? என்னவருளிச் செய்கிறார். இப்படி इति - मध्यस्थदृष्टिயாகத் தோற்றினதுவும் अतत्त्वமாகில் शङ्करादिकुदृष्टिबाह्यपक्षமும் उपादेयமாக -

(सा.प्र) स्वोक्तप्रक्रियानङ्गीकारे बाधकमाह । இப்படி इत्यादिना - प्रामाणिकेत्यादि - प्रामाणिकार्थप्रतीतावपि ग्राहितग्राहिताया मितमित्यर्थ तस्मात्स्वोक्त प्रकारेणैवानुसन्धानं सात्त्विकाना -

(सा.वि) प्रामाणिकार्थं தோற்றச் செய்தேயும், प्रामाणिकार्थप्रतितावपि பற்றினது விடாதொழியில், ग्रहीतस्यापरित्यागे । स्वप्रतिज्ञातनिर्वाहार्थं भ्रातृवधोद्युक्तमर्जुनं प्रति बोधनाय कर्णपर्वणि -

(सा.सं) दायोपपत्तिभिर्लक्ष्म्याश्शेषित्वादिसमर्थनादित्यर्थः काम्यप्रधानत्वं, फलान्तरप्रधानत्वम् - अर्चनं त्रिविधम्। 'केवलेन तु यागेन पृथग्भूतेन नारद । पूजनं कमलादीनामधिकाराभिधस्तुसः ।' केवलेन, भगवद्यज नासन्दष्टेन - 'हृदयादीषु चाङ्गेषु लाञ्छनं कमलादिकम् ' इत्यारभ्य, 'तद्देहसंस्थितास्सर्वे पूजनीयाः क्रमेण तु । परिवारं विनामन्त्रैः स्वैस्वैरर्घ्यादिभिर्द्विज - आलयार्चनमेतत्तु संक्षिप्तं सर्वसिद्धिदम् - मन्त्रराट्कर्णिकामध्ये लक्ष्म्याद्याः केसरादिषु - साकाराः केवलास्सर्वे यत्र सा भोगसंज्ञिता' इत्यादिकमिहानुसन्धेयम् । नन्वनन्यप्रयोजनस्य काम्यप्रधाने प्रणामादयः कथमुपपद्यन्त इत्येतदद्दृष्टान्तेन परिहरति। काम्यप्रधानமான भगवद्रूपத்தில் போலே इति । एवं संबन्धविशेषगुण विशेषलक्ष्मीसंबन्धनिबन्धनशङ्कापरिहारेऽपि युक्त्यन्तरैरिममर्थं साधयामीति वदन्तं प्रत्याह - இப்படி इति - पूर्वेभ्यश्श्रुतत्वादेव हेतुना प्रमाण -

मू - दृढपूर्वश्रुतो मूर्खो धर्माणामविशारदः । वृद्धा न पृच्छन् सन्देहानन्धश्श्वभ्रमिवर्छति । अन्यथा मन्दबुद्धीनां प्रतिभाति दुरात्मनाम् । कुतर्क (व्यालदष्टानां) ज्ञानदुष्टानां विभ्रान्तेन्द्रियवा (जिनां) दिनाम् என்கிற दशैயாம்- ஆகையால் सिद्धोपायशब्दवाच्यविमर्शத்தில் नानयोर्विद्यते परम् ।

(सा.दी) ग्रहीतग्राहित्वं பண்ணில் स्वप्रतिज्ञापरिपालनधर्मलेशத்துக்காக गुरुतरமான भ्रातृवधोद्युक्तனான अर्जुनனைத் தெளிவிக்கைக்காக कर्णपर्वத்தில் शरण्यன் சொன்ன ग्रहीतग्राहिनिन्दावचनத்தில் निन्दैप्रसङ्गिக்குமென்கிறார்- दृढपूर्वेति - पूर्वं श्रुतः कश्चनापार्थो दृढोयस्य सः अत एव मूर्खः - स्वयं धर्मங்களினுடைய सूक्ष्मத்தை विवेक्तुमशक्तனாய்- अथापि सन्दिग्धार्थங்களைப் பெரியோர்கள் பக்கல் கேளாதவன் எவனொருவன் அவன் अन्धனானவன் படுகுழியில் விழுமாப்போலே अनर्थத்தில் விழுவனென்கை अन्यथेति - मृदुप्रज्ञருக்கு अर्थमन्यथा स्फुरிக்கும்- दुरात्मनां, सन्निन्दकानां - कुतर्कज्ञानेन दुष्टानांविभ्रान्तेन्द्रियाणां वादिनां चान्यथा प्रभाति என்றபடி- இவர்களுடைய अवस्थै ग्रहीतग्राहिகளுக்கும் வருமென்றபடி. श्रीमन्नारायणशब्दं सिद्धोपायத்தை प्रतिपादिக்கிறபடியை अनुसन्धिக்கவேணுமென்று निगमिக்கிறார் - ஆகையால் सिद्धोपायेत्यादिயால் - विशिष्टतत्त्वं நிற்கும் நிலைக்கு प्रमाणं காட்டுகிறார்- नानयोरित्यादिயால்.

(सा.स्वा) प्रसङ्गिக்குமென்று கருத்து- दृढेति । इदं स्वप्रतिज्ञापरिपालनार्थं भ्रातृवधोद्युक्तमर्जुनं प्रति कर्णपर्वणि भगवद् वचनम् - ஆனாலும் பிராட்டிக்கு उपायत्ववचनं गौणोपायत्वपरமாயும் आचार्याद्युपायत्ववचनवत् नयिப்பிக்கலாகாதோ? என்கிற शङ्कैயை परिहरिத்துக்கொண்டு उपसंहरिக்கிறார்- ஆகையால் इति ஆகையால், दुष्टருக்கு अन्यथाவாகத் தோற்றுகையாலே समीचीनतर्कங்களாலே सिद्धोपायविमर्शத்திலென்றபடி नानयोरिति - इमावेव परावुत्कृष्टौ निरुपाधिकशेषिणौ என்றபடி-

(सा.प्र) मुचितमिति सोपपत्तिकं प्रदर्शयन् प्रकृतमुपसंहरति - ஆகையால் இஸ்सिद्धोपायेत्यादिना

(सा.वि) स्थिता गृहीतानिन्दा प्रसजेदित्याह - दृढपूर्व इति - पूर्वं श्रुतः कश्चनापार्थो दृढो यस्य स तथोक्तः अत एव मूर्खः श्वभ्रङ्गर्तम् । अन्यथेति । अन्यथा प्रतिभातीत्यन्वयः - नानयो -

(सा.सं) विरोधादिकं दृष्टमपि तस्य न कार्यकरं सदृढपूर्वश्रुतः धर्माणामिति - धर्मतत्त्वनिर्णयासमर्थ इत्यर्थः - सन्देहान् , सन्देहविषयार्थान् । सिद्धानां वासितानां- विभ्रान्तानि, विपरीत प्रवृत्तिमन्ति - इन्द्रियाणि मनः प्रभृतीनितान्येव वाजिनोऽश्वाः येषां ते तथोक्ताः - என்கிற दशैயாம், श्वभ्रतयोक्तनरकपतनं स्यादित्यर्थः तर्हि कैः प्रमाणैः केन प्रकारेण सिद्धोपायस्वरूपमनुसन्धेयमिति जिज्ञासां शमयन्नुपपादितमर्थं निगमयति - ஆகையால் इति - गाढोपगूढतोपपादकमेकशेषित्वத்தாலும் इत्यादि एकशेषित्वादौ प्रमाणं नानयोरित्यादि - विमर्शः, विचारः - सिद्धोपायत्वस्य भगवदसाधारण्यसिद्धये सोऽपि ज्ञानशक्ति -

मू - यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम । अस्या देव्या मनस्तस्मिन्तस्यचास्यां प्रतिष्ठितम्। तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति । व्यापकावतिसंश्लेषा देकतत्त्वमिवोदितौ என்கிறபடியே एकशेषित्वத்தாலும் एकाभिप्रायतैயாலும், परस्परप्रावण्यातिशयத்தாலும், स्वरूपरूपादिகளில் பிரிவற்ற अन्वयविशेषத்தாலும், 'गाढोपगूढानि ते' என்னும்படி सुश्लिष्टமான विशिष्टतत्त्वं நிற்கிற நிலைகுலையாதபடி सविशेषणமான नारायणशब्दं प्रतिपादिக்கிறபடியை अनुसन्धिக்கை सत्त्वस्थருக்கு प्राप्तम् । -

(सा.दी) नानयोर्विद्यते என்றும் यथा सर्वगतोविष्णुः என்றும் शेषित्वे प्रमाणम् अस्या देव्या मनस्तस्मिन् என்று एकाभिप्रायत्वத்திலும் परस्परप्रावण्यातिशयத்திலும் व्यापकावतिसंश्लेषात् என்று स्वरूपादिகளில் पृथक् सिद्धिरहितसंबन्धविशेषத்தில் प्रमाणम् - चतुर्धापि सुश्लिष्टत्वं சொல்லுகிறது गाढोपगूढानि என்று- श्रीमन्नारायणனுக்கு सिद्धोपायशब्दार्थत्वத்தைக் காட்டுகிறார் -

(सा.स्वा) यथा सर्वगतः, सर्वैरुपायतयावगतः - आश्रितः । तदनुगुणरक्षणसङ्कल्पवान् । तथा इयमपीत्यर्थः - एकाभिप्रायातायामिदं प्रमाणम् - यद्वा, चतुश्लोकीभाष्योक्तरीत्या विभूतिद्वयनियमनरूपैकाभिप्रायतायामिति वार्थः अस्या इति परस्परप्रावण्ये प्रमाणम् - व्यापकावित्यन्वयविशेषத்தில் प्रमाणम् - सत्वस्थர்க்கு इति - तमोभूयस्तया कुतर्कव्यालदुष्टர்களுக்கு अन्यथाबाधமானாலும் सत्वस्थர்க்கு वैरूप्यமன்றிக்கே बहुप्रमाणानुगुणமான पूर्वोत्तरखण्डத்தில் श्रीमच्छब्दार्थानुसन्धानमुक्तप्रकारமாகவே வருமென்று கருத்து- இப்படி श्रीविशिष्टன் सिद्धोपायமென்று निष्कर्षिத்தது கூடுமோ? सिद्धोपायமாவது फलोदयात्पूर्वं सिद्धமான उपायமன்றோ? அது साध्योपायतुल्यமன்றோ? सिद्धமாக ஒரு उपायமுண்டாகில் साध्योपायवैयर्थ्यं प्रसङ्गिயாது? அது लीलाप्रवाहरूपसंसारनिरोधार्थ மென்னில் அதினாலே स्वतन्त्रனுடைய नरकादिप्रदानसङ्कल्पनिरोधं கூடுமோ? साध्योपायमावश्यकமாகில் सिद्धोपायप्राधान्यंதான் கூடுமோ? सिद्धोपायं प्रधानமானாலும் அது भक्तप्रपन्नसाधारणமாகையாலே प्रपन्नனுக்கு सिद्धोपायनिष्ठैविशिष्यச் சொல்லுகிறதுவும் विरोधिயாதோ? அது भरन्यासेन उपायान्तरस्थानापत्तिव्यञ्जनमुखेन स्वनैर्भर्यसिद्ध्यर्थமென்னிலதுக்கு प्रमाणமுண்டோ? उपायान्तरस्थानापत्ति प्रमाणिकैயாகில் तद्व्यतिरेकेण सिद्धोपायत्वத்திலே தான் प्रमाणமுண்டோ?

(सा.प्र) ननु उपायत्वं नाम किञ्चित्साध्यं प्रति कारणत्वम् - तच्च पूर्ववर्तिनः पूर्ववर्तित्वं च सिद्धस्यैवेति भक्तिप्रपत्त्योरप्युपायत्वात्सिद्धत्वमेवेति भगवान् सिद्धोपायभक्तिप्रपत्ती साध्योपाय इतिविभागो नोपपद्यत इत्यत्र सिद्धत्वसाध्यत्वविभागप्रयोजकं दर्शयन् साध्योपायस्योप-

(सा.वि) र्विद्यते परम् सर्वगत इत्युभयमेकशेषित्वे प्रमाणम् - अस्या देव्या इत्येकाभिप्रायत्वे परस्पर प्रावण्यातिशये च प्रमाणम् - व्यापकावतिसंलेषादिति पृथक्सिद्धिरहितसंबन्धविशेषे च प्रमाणम् - अनुसन्धिக்க, अनुसन्धानं - प्राप्तम् उचितम् -

(सा.सं) करुणा श्रीविशिष्ट एव सिद्धोपाय इति सिद्धोपायत्वव्यपदेश प्रयोजकमाह -

मू - 'समस्तपुरुषार्थानां साधकस्य दयानिधेः । श्रीमतः पूर्वसिद्धत्वात्सिद्धोपायमियं विदुः । भक्ति प्रपत्तिप्रमुखं तद्वशीकारकारणम् । तत्तत्फलार्थिसाध्यत्वात्साध्योपायं विदुर्बुधाः । साध्योपायोत्तरङ्गेण सिद्धोपायस्य शेषिणः । लीलाप्रवाहः कारुण्यप्रवाहेण निरुध्यते ।-

(सा.दी) समस्तेति - पूर्वसिद्धत्वात् என்று सिद्धत्वं दर्शितम् - पूर्वार्धத்தால் उपायत्वं दर्शितम् - श्रीमतो नारायणस्येति शेषः - भक्तिप्रपत्तिகளினுடைய साध्योपायत्वத்தைக் காட்டுகிறார்- भक्तेति - प्रमुखशब्दத்தால் कर्मयोगादिग्रहणम् - साध्योपायफलத்தை सङ्ग्रहिக்கிறார்- साध्येति - साध्योपायத்தால் उत्तरங்கமாய் शेषिயினுடைய कारुण्यप्रवाहम् - அத்தால் लीलाप्रवाहम्-

(सा.स्वा) 'कृष्णं धर्मं सनातनम्' என்று निर्देशத்தாலே सिद्धोपायत्वமுண்டென்னில் सिद्धத்துக்கு यागादिवद्धर्मत्वं கூடுமோ? इत्यादिशङ्कैகளை परिहरியாநின்று கொண்டு कारिकैகளால் उक्तानुक्तार्थங்களை संग्रहिக்கிறார்- समस्तेत्यादिना - समस्तपुरुषार्थानां चतुर्विधानामपि साधकस्य तत्प्रधानशक्तस्य कारुण्याभावे शक्तिमात्रप्रयोजकमित्यत्र उक्तं दयानिधेरिति श्रीमतः, श्रीविशिष्टस्य - पूर्वसिद्धत्वात् - कृतेः पूर्वमपि सिद्धत्वात् - कृत्यसाध्यत्वात् - इमं सिद्धोपायं विदुः साध्योपायस्तु कृति साध्यत्वान्न पूर्वसिद्धोपाय इति भावः भक्तिप्रपत्तिप्रमुखं तस्य भगवतः वशीकारकरणं तत् तत्फलार्थिसाध्यत्वात् साध्योपायं विदुर्बुधाः - वशीकरणस्यवाप्रयोजनं किमित्यत आह । साध्येति साध्योपायेन उत्तरङ्गेण, उत्तम्भितेन । कारुण्यप्रवाहेण लीला प्रवाहः निरुध्यते - सहजकारुण्योत्तम्भनमेव साध्योपाय -

(सा.प्र) योगमप्याह - समस्तपुरुषार्थानामित्यादिना । निरोधकास्सर्वे लीयन्त इत्यन्वयः - अधिकारिकृति साध्यत्वं ततः पूर्वं सिद्धत्वं च सिद्धसाध्यव्यपदेशप्रयोजक धर्माविति भावः -

(सा.वि) साध्योपायेति - उद्गतास्तरङ्गा यस्य उत्तरङ्गः - तरङ्गशब्देन लीलाभिभावनशक्तयो विवक्षिताः - साध्योपायोत्तरङ्गेण उन्नततरङ्गवता - अनेन साध्योपायस्य महामारुतसाम्यं गम्यते - कारुण्य प्रवाह उत्तटस्सन् लीलाप्रवाहं प्रतिबध्नाति - कारुण्यप्रवाहो -

(सा.सं) समस्तेति । पूर्वसिद्धत्वात् , पुरुषकृतेः पूर्वमेव सिद्धत्वात् इमं श्रीविशिष्टं दयाविशिष्टं च - साधकस्येत्यनेन ज्ञानशक्तिमत्ता विवक्षिता । अथ प्रपत्यादेस्साध्योपायत्वव्यपदेशप्रयोजकं प्रयोजनं चाह - भक्तीति । प्रभृतिशब्देन उपासनाप्रपत्तिभेदा यजनादयश्च विवक्षिताः - तत्तत्फलार्थिपुरुषकृतिसाध्यत्वात्साध्योपायत्वम् - भगवद्वशीकरणप्रणाढ्याफलसाधन्त्वादुपायत्वं चेति भावः नन्वनाद्यनन्तमहापराधमूलनिग्रहसङ्कल्पयुक्तलीलाप्रवाहे प्रबले सति कथं साध्योपायेन तद्वशीकरणम्? कथं वा सत्यसङ्कल्पस्य सङ्कल्पास्संसार एवैतान् भ्रामयेयमित्यादि रूपास्तेन निवर्तनीया इति शङ्काद्वयं श्लोकद्वयेन परिहरति साध्योपायोत्तरङ्गेण लीलाप्रवाहाभिभावकशक्तिरेव तरङ्गशब्देन विवक्षिता। उद्गतस्तरङ्गो यस्य स उत्तरङ्गः । साध्योपायानुष्टानादुद्भूतशक्तिकेन कारुण्यप्रवाहेण लीलाप्रवाहा -

मू - तेनैव सर्वे लीयन्ते सिकता सेतुबन्धवत् । स्वतन्त्रस्यापि सङ्कल्पास्स्वकैङ्कर्यनिरोधकाः । प्रसादनस्योपायत्वे शास्त्रीयेऽपि फलं प्रति। कर्तृत्वाव्यवधानाद्यैस्सिद्धोपायप्रधानता । स्वतन्त्रन्यास-

(सा.दी) தகையப்படுமென்கை. तेन, அந்த लीलाप्रवाहनिरोधத்தால் स्वकैङ्कर्यनिरोधங்களான स्वतन्त्रனுடைய सर्वसङ्कल्पங்களும் नशिக்குமென்கிறார் तेनैवेति - भक्तिप्रपत्तिरूपसाध्योपायத்துக்கு फलத்தைக் குறித்து शास्त्रसिद्धமான उपायत्वமுண்டேயாகிலும் இவ்व्याजप्रासाद्यत्वेन फलं प्रत्यव्यवधानத்தாலும், कर्तृत्वेन स्वातन्त्र्यத்தாலும், सिद्धोपायத்துக்கே प्रधानोपायत्वமென்கிறார்- प्रसाधनस्येति - अव्यवधानाद्यैः என்றவிடத்தில் आद्यशब्दத்தால் साद्योपायस्याप्यस्मादुत्पादनादि ग्रहिக்கிறது- भक्त्युपायनिष्ठருக்கு सिद्धोपायाश्रयणமுண்டாயிருக்க स्वतन्त्रन्यासनिष्ठரை सिद्धोपायनिष्ठரென்று विशेषिத்துச் சொல்லுகைக்கு हेतुவெது? என்னவருளிச் செய்கிறார்- स्वतन्त्रेति - सिद्धोपायस्वीकारानन्तरम् -

(सा.स्वा) कार्यवशीकरणम् - तत्कार्यं लीलाप्रवाहनिरोध इति भावः - ननु मूलभूत स्वतन्त्रसङ्कल्पेषु तिष्ठत्सु कथं लीलाविरोध इत्यत्राह - तेनैवेति स्पष्टं - प्रसादनस्येति - तस्या चेतनतया नश्वरतया च भगवतश्च कर्तृत्वाव्यवधानादिभिः प्राधान्यमित्यर्थः - स्वतन्त्रेति - स्वतन्त्र -

(सा.प्र) ननूपायभूतस्य भगवतोऽनादिसिद्धत्वेन प्रसादनानुष्ठाने रक्षणानुपपत्तेस्तदनुष्ठाने रक्षणाच्च साध्योपायस्यैव प्राधान्यं स्यादित्यत्र तस्य प्रसादद्वारा साध्यसाधकत्वादिच्छापूर्वकं साधकत्वाभावा द्भगवत्सङ्कल्पसाध्यस्वरूपसिद्धित्वाच्च भगवत एव प्राधान्यमिति दर्शयन् प्रपन्नस्य भगवदेकनिष्ठयापि भाव्यमित्याह। प्रसादनस्येत्यादिना - एवं च सति भरन्यासनिष्ठानां भगवदेकनिष्ठत्वोक्तिर्व्यर्था स्यादित्यत्राह - स्वतन्त्रेत्यादिना - ननु भगवत्युपायत्वा

(सा.वि) लीलाप्रवाहसामग्रीमप्युच्छेत्तुं कदाचित्प्रभवतीति भावः - सिद्धोपायस्य प्राधान्यं कथमित्यत्राह - प्रसादनस्येति - प्रसाद्यते प्रसादवान् क्रियते अनेनेनि प्रसादनम् - प्रसादकारणम् -तस्य - नन्वेवं साध्योपायस्यापि सत्वे प्रपन्नानां भगवदेकनिष्ठत्वोक्तिर्वृथा स्यादित्यत्राह - स्वतन्त्रन्यासेति -

(सा.सं) निरोधानुगुणप्रकर्षवतेत्यर्थः यथा समुद्रस्य चन्द्रोदयानन्तरं उत्तरङ्गस्य नदीप्रवाहनिरोधकत्वमिति भावः। तेनैव, कारुण्यप्रवाहेणैव - अपि शब्दोविरोधसूचकः। यद्यपि स्वतन्त्रस्य सङ्कल्पास्सत्याश्च, तथापि स्वकैङ्कर्यनिरोधकत्वात्ते सर्वेऽपि मोक्षप्रतिबन्धकास्सङ्कल्पकार्यलोलाप्रवाहो लीयन्ते । स्वकैङ्कर्यनिरोधकत्वादिति हेतुना शेषिण इति पदाभिप्रेतं विवृतम् - नहि स्वाभिमततमातिशयलाभं प्राज्ञश्शेषीनिरोधयतीति भावः। यथा महाप्रवाहेण सैकतास्मेतवो नश्यन्ति तथेत्यर्थः। नन्वन्वयव्यतिरेकाभ्यां साध्योपायस्यैव प्राधान्ये सामान्यकारणस्य भगवतः प्रधानोपायत्वं कथं सिद् ध्येदित्यत्राह - प्रसादनस्येति - प्रसादजनकस्येत्यर्थः शास्त्रीयेऽपि, शास्त्रविहितेऽपि - कर्तृत्वं, प्रसादनरूपप्रपत्त्यादिनिष्पा दनानुगुणकृत्याश्रयत्वम् - फलप्रदानसङ्कल्पाश्रयत्वंच - अव्यवधानं, साक्षात्फललम्भकत्वम् - आदिशब्दात्स्थिरत्वसर्वशक्तित्वादि सङ्ग्रहः। ननु साध्योपायत्वेन प्रपत्त्यादरणे 'त्वमेवोपायभूतो मे भव' इत्युक्तासिद्धोपायै कनिष्ठाहीयेतेत्यत्राह - स्वतन्त्रेति - भक्त -

मू - निष्ठानां सिद्धोपाये विभौ स्थितिः । क्षणात्स्वयत्नविरतिव्यक्त्यै प्रोक्ता विशेषतः । अथो यदर्थं स्वभरस्सिद्धोपाये निवेशितः । तदर्थं शान्तयत्नोऽसौ सिद्धोपायं प्रतीक्षते । प्रपत्तेर्लक्षणे -

(सा.दी) तदर्थமாக ஒரு व्यापारமில்லையென்று தோற்றுகைக்காக सिद्धोपायनिष्ठரென்று विशेषित्துச் சொல்லிற்றென்கை. अत इति स्पष्टार्थम् - भगवाனுடைய उपायत्वத்தில் प्रमाणமெது? என்னவருளிச் செய்கிறார். प्रपत्तेर्लक्षण इति - लक्षणे, 'अनन्यसाध्ये स्वाभीष्टे' என்கிற श्लोकத்தில். அதில் 'तदेकोपायता -

(सा.स्वा) प्रपत्तिनिष्ठानां पश्चात्स्वयत्न विरतिव्यक्त्यै सिद्धोपाये निष्ठा विशिष्योक्तेत्यर्थः - एवं सत्युत्तरकाले नित्यनैमित्तिकानुष्ठानं नस्यादित्यत्राह । अत इति तदर्थं मोक्षार्थं शान्तयत्नस्सन् - सिद्धोपायं प्रतीक्षते - नित्यनैमित्तिकादिकन्तु न मोक्षार्थमिति भावः ननु स्वतन्त्रन्यासनिष्ठानामिति स्वतन्त्रप्रपत्तिनिष्ठान् प्रविभक्तसाधारणरक्षकत्वव्यतिरेकेण भगवत उपायत्वन्नाम आकारान्तरमुक्तम् - तत्र प्रमाणं किमित्यत्राह - प्रपत्तेरिति - ब्रह्मणि स्वरूपतो गुणतश्च अनवधिकातिशयशालिनि सर्वोत्कृष्टे भगवति । प्रपत्तेर्लक्षणे, 'अनन्यसाध्ये स्वाभिष्टे महाविश्वासपूर्वकम् - तदेकोपायता याच्ना प्रपत्तिश्शरणागतिः' इति लक्षणवाक्ये-

(सा.प्र) ध्यवसायेऽपि स्वयत्नविनिवृत्तिर्नोपपद्यते - नित्यनैमित्तिकरूपाज्ञाकैङ्कर्यस्य चानेकस्य व्यापारस्य विद्यमानत्वादित्यत्राह - अतो यदर्थमित्यादि । ननु भगवत उपायत्वे सिद्धे तस्य प्रधानोपायत्वं सिद्ध्येत् - तदेव कुतः? क्वचित्कसेतुत्वश्रुतेर्लक्षणयाप्युपपत्तेरित्यत्र बहुप्रमाणेषूपायत्वश्रवणाच्छ्रौतस्य च विपरीतावगाहि प्रत्यक्षश्रुत्योरन्यतराभावे लाक्षणिकत्वाङ्गीकारो न युक्त इत्यभिप्रयन्नाह - प्रपत्तेर्लक्षण इत्यादिना 'अनन्यसाध्य'' इत्यारभ्य तदेकोपायता याच्ना प्रपत्तिश्शरणागतिः ''इति लक्षणवाक्ये 'उपाये' गृहा' इत्यारभ्य 'सांप्रतं त्वेष उपायार्थैकवाचकः' इत्युपायवाचकतयो -

(सा.वि) विभौ स्थितिः तदेकनिष्ठत्वं - क्षणात्, प्रपत्तिक्षणादूर्ध्वम् - तर्हि कैङ्कर्यविततिरपि स्यादित्यत आह - अतो यदर्थमिति - ननु भगवत उपायत्वे किं प्रमाणमित्यत आह - प्रपत्ताविति- लक्षणे -

(सा.सं) व्यावृत्तये स्वतन्त्रपदम् । विभौ, शेषिणि-स्थितिः, त्वमेवोपाय इति धीरूपा निष्ठा । क्षणात्, प्रपत्त्यनुष्ठानक्षणादूर्ध्वम् - स्वयत्नविरतिव्यक्त्यै । यदर्थं सा तदर्थं स्वव्यापारनिवृत्तिख्यापनाय - नतु प्रपत्तिमपि परित्यक्तुमिति भावः - विशेषतः, असाधारण्येन - प्रोक्ता, पूर्वैरिति शेषः । अत एवातिप्रसङ्गोऽपि परिहृत इति - सिद्धोपायैकनिष्ठा सन्निवेशं दर्शयति अत इति । फलविशेषमुद्दिश्यैव न्यस्तभरत्वादित्यर्थः- तेन भगवदाराधनगुरुशुश्रूषाद्यकरणं न प्रसक्तमिति भावः - सिद्धोपायत्वेन स्वीकृतस्य भगवतो रक्षणकालं प्रतीक्षत इत्यर्थः । ननु ब्रह्मणः प्रधानोपायत्वमस्ति चेत्सिद्धोपायैकनिष्ठतया तत्प्रतीक्षणमुचितम् - तदेव नास्ति । मानाभावादित्यत्राह - प्रपत्तेरिति - प्रपत्तेरित्येतल्लक्षणादि चतुष्केऽप्यन्वेति - लक्षणे, 'अनन्यसाध्य' इत्यादि लक्षणवाक्ये -

मू - मन्त्रे विधौ वाक्यान्तरेषु च। भाष्यादौ संप्रदाये चोपायत्वं ब्रह्मणि स्थितम् ।

(सा.दी) याच्ना என்றது मन्त्रे, द्वयத்தில்- चरणौ शरणமென்றதிறே- विधौ, चरमश्लोकத்தில் 'मामेकं शरणं व्रज' என்றதிறே वाक्यान्तरेषु, 'शङ्खचक्रपाणे भव शरणम् - श्रीरामश्शरणम् - निवासश्शरणं सुहृत्' इत्यादि - चरमश्लोकयोजनाविशेषத்தில் சொன்ன धर्मत्वத்தையும் சொல்லுகிறார் -

(सा.स्वा) मन्त्रे, द्वयाख्यमन्त्रे - विधौ, चरमश्लोके । वाक्यान्तरेषु - 'भव शरणम्' इत्यादि वाक्यान्तरेषु - भाष्यादौ - ''तस्य च वशीकरणं तच्छरणागतिरेव'' इत्यादौ श्रीमद्गीताभाष्यादौ - संप्रदाये - 'तव भरोऽहमकारिषि धार्मिकैश्शरणमित्यपि वाचमुदैरितम्' इत्यादौ - उपायत्वं रक्षकत्वव्यतिरेकेण उपायत्वं नामाकारान्तरम् 'उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् । वर्तते सांप्रतं त्वेष उपायार्थैकवाचकः' इत्यादि प्रमाणानुगुण्येन उपायार्थकशरणशब्दादिभिः स्थितं, प्रतिष्ठितं - ब्रह्मशब्दसूचित सर्वोत्कर्षशालिनः चेतनाचेतनसाधारणोपायत्वाभिधाने निन्दारूपोचारप्रसङ्गेन साध्योपायान्तर -

(सा.प्र) क्तशरणशब्दयुक्तद्वयरूपकरणमन्त्रे - 'मामेकं शरणं व्रज । ग्रसेत्संहारसमये जगच्च बदराण्डवत् । लीलया यस्तु भगवांस्तं गच्छशरणं हरिम्' इति प्रपत्तिविधिवाक्ये - 'उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्त्य च' इत्यादि वाक्यान्तरेषु - प्राप्यपरमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन - यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यनन्योपायत्वश्रवणादित्युपपत्तेश्चेति सूत्रभाष्ये 'उपायोपेयत्वे तदिह तव तत्त्वं नतुगुणौ' इत्यादि सांप्रदायिकोपदेशपारम्पर्ये चेत्यर्थः ननु 'चोदनालक्षणार्थो धर्मः' इत्युक्तरीत्या विधिवाक्यैश्चेतनकृति साध्यतया बोधितस्यैवालौकिक श्रेयस्साधनत्वरूपधर्मत्वोक्ते -

(सा.वि) तदेकोपायतायाश्चेत्यत्र । मन्त्रे, द्वये शरणमित्यत्र । विधौ, शरणं व्रजेत्यत्र - वाक्यान्तरेषु, 'ग्रसेत्संहारसमये जगच्चबदराण्डवत्। लीलया यस्तु भगवान् तं गच्छ शरणं हरिम् 'इत्याप्तोपदेशेषु। भाष्ये, प्राप्यस्य परमपुरुषस्य स्वप्राप्तये स्वस्यैवोपपत्तेरित्यादिषु। संप्रदायेषु, पूर्वाचार्यप्रभृत्यर्वाचीनपरर्यन्तेषु। सिद्धोपाय इति व्यवहारे च ब्रह्मणि श्रीविशिष्टे उपायत्वं स्थितम् - एतावत्प्रमाणसिद्धमित्यर्थः। ननु धर्मस्यैव फलं प्रति मुख्योपायत्वा -

(सा.सं) मन्त्रे, द्वये - तत्र उपायार्थैकवाचकशरणशब्दोपश्लेषाद्भगवच्चरणयोरेवोपायत्वसिद्धिरिति भावः। विधौ, प्रपत्तिविधायके चरमश्लोके 'ग्रसेत्संहारसमये जगच्च बदराण्डवत् । लीलया यस्तु भगवांस्तं गच्छ शरणं हरिम् । राघवं शरणं गतः' इत्यदिकं वाक्यान्तरेषु चेत्यनेनोच्यते - भाष्यपदेनोपपत्तेश्चेति सूत्रमाष्यम् - स्वप्राप्तये स्वस्यैवोपायत्वोपपत्तेरित्युक्तं विवक्षितम् - आदिशब्देन 'ஆறெனக்கு நின் பாதமே' इत्यादयश्शठरिपुप्रमुखऋषिवरादिसूक्तयो गृह्यन्ते । संप्रदायः, उपदेशपारम्पर्यम् - उपायत्वं, प्रधानोपायत्वम् - ब्रह्मणि, ज्ञानशक्तिकरुणाविशिष्टे - स्थितं, पर्यवसन्नम् -

मू - पूर्वसिद्धस्य देशादेर्धर्मत्वं यद्वदिष्यते । एवं तत्त्वविदः प्राहुः कृष्णं धर्मं सनातनम् ।। இஸ்सिद्धोपायं रहस्यत्रयத்தில் प्रथमाक्षरादिस्थानங்களிலே अनुसन्धेयम् -

(सा.दी) पूर्वेति - 'ये च वेदविदो विप्राः' என்று श्लोकार्थं प्रत्यभिज्ञापितமாகிறது.

अनुग्रहाच्छ्रियः पत्युस्तन्मूलाचार्यवीक्षणात् । सत्संप्रदायसिद्धेश्च तत्त्वज्ञानोदयो भवेत् ।। १ ।।
गुरूपारम्परी प्राप्ततत्त्वार्थविगतिर्गुरोः । सत्संप्रदायसिद्धिस्स्याच्छिष्यस्यावहितस्य तु ।। २ ।।
प्रामाणिकार्थापहृतिर्द्विविधा दुष्टवादिनाम् । एका विभूत्यपहृतिस्स्याद्विभूति -

(सा.स्वा) स्थानापन्नत्वापरपर्यायम् अस्य उपायो भवेयमित्याकारकसङ्कल्पवत्वरूपमुपायत्वम् अत्यन्तोत्कृष्टावहमाकारं प्रामाणिकமென்று கருத்து- तदर्थமாகவே இங்கு निरतिशयोत्कर्षवाचि ब्रह्मशब्दமும் उपायत्वशब्दமும் प्रयुक्तமென்றபடி. இங்கு श्रीमति ब्रह्मणि என்று विवक्षितम् - 'श्रीमतः पूर्वसिद्धत्वात्सिद्धोपायमिमं विदुः' इत्युपक्रमादकिञ्चनं प्रति शरण्यस्य उपायान्तरस्थानापन्नत्वरूपाकारान्तरமுண்டாகில் सर्वसाधारणसिद्धोपायत्वाकारे प्रमाणமுண்டோ? 'कृष्णं धर्म सनातनं' इत्यादिकं प्रमाणமென்னில் धर्मशब्दं क्रियावाचिயன்றோ? सिद्धापायवाचिயன்றோ? என்னவருளிச் செய்கிறார்- पूर्वसिद्धस्येति - देशादिகளுக்கு लौकिकश्रेयस्साधनतया धर्मत्वं போலே शरण्यனுக்கும் सिद्धोपायत्वरूपधर्मत्वं प्रामाणिकமென்று கருத்து -

(सा.प्र) भगवतस्सिद्धरूपस्य कृतिसाध्यत्वाभावाद्धर्मत्वानुपपत्तेस्तस्योपायत्वमौपचारिकमेवेत्यत्रालौकिकश्रेयस्साधनस्यैव धर्मत्वात् - 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यति' इति भट्टाचार्योक्तद्रव्यक्रियागुणादिवत्सिद्धस्वरूपस्यापि भगवतो धर्मत्वं मुख्यमेवेति नोपायत्वमौपचारिकमित्यभिप्रयन्नाह पूर्वसिद्धस्येत्यादिना - एवं सिद्धोपायशोधनस्य रहस्यत्रयप्रतिपाद्यत्वमाह இஸ்सिद्धोपायमित्यादिना ।

(सा.वि) च्चोदना लक्षणार्थो धर्म इति कृतिसाध्यस्यैव धर्मत्वाद् भगवत उपायत्वमौपचारिकं स्यादित्यत आह - पूर्वसिद्धस्येति । 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यतः' इति भट्टोक्तरीत्या चोदनालक्षणत्वव्यपदेशादिष्वव्याप्तिग्रस्तत्वादलौकिकश्रयेस्साधनत्वं धर्मलक्षणं वाच्यमिति भगवतोऽप्युक्त लक्षणसत्त्वेन धर्मत्वान्मुख्यमेवोपायत्वमिति भावः -

अत्रायमधिकारार्थसङ्ग्रहः । तत्त्वज्ञानस्य शीघ्रानुवृत्तये स्वामिनिग्रहः । अपराधवशाज्जातो हेतुस्तद्विनिवर्तने ।। प्रधानकारणानित्रीण्यस्तु ते इतिवाक्छ्रियः । आचार्यानुग्रहस्संप्रदायसिद्धिरमीषु च ।।

(सा.सं) नन्वलौकिक श्रेयस्साधनत्वकृतमुपायत्वं चोदनाप्रमाणकधर्मस्यैव न सिद्धरूपस्य भगवत इत्यत्राह - पूर्वसिद्धस्येति - कृतेः पूर्वमेव सिद्धस्य समे यजेतेत्युक्तो देशः - आदिशब्देन 'सायं जुहोति' इत्यादिनोक्ताः काल, द्रव्य, क्रिया गुणादयश्च विवक्षिताः - देशादेरलौकिक श्रेयस्साधनत्वाद्धि धर्मत्वमिष्यते - एवं तथा तत्त्वविदः, 'ये च वेदविदः' इत्युक्ताः- कृष्णं सनातनम् अनादिसिद्धं धर्मं प्राहुः धर्मत्वेन प्राहुः ।।

(सा.दी) मतो परा।। ३ ।। विभूतिमन्तं नेच्छन्ति केचिदन्ये पुनः परम्। विभूतिमन्तंसङ्कल्प्य तद्विभूतिं हरिं विदुः।। ४ ।। केचिद्विभूतिं नेच्छन्ति तां संमत्यापरे पुनः। ईशसंबन्धरहितां वितन्त्रां वान्यगां विदुः।। ५ ।। मृदुप्रज्ञप्रपन्नस्य यद्येतेवेकमापतेत्। दैवादसत्सङ्गवशादधोऽधो निपतेदयम्।। ६ ।। बन्धने चेतनस्येशस्वतन्त्र्यं मुख्यकारणम्।। आज्ञातिलङ्घनं तत्र सहकारितया स्मृतम् ।। ७ ।। मोक्षणे चेतनस्येशकरुणामुख्यकारणम्। तद्वशीकरणं चात्र सहकारितयेष्यते ।। ८ ।। स्यान्निर्दयस्य स्वातन्त्र्यं सर्वचेतनबाधकम्। अस्वतन्त्रस्य कारुण्यं व्यर्थं स्वस्यापि बाधकम् ।। ९ ।। स्वतन्त्रस्यतु कारुण्यं सर्वानिष्टनिवर्तकम्। आश्रितानां स्वस्य चापि मनसः प्रीतिकारणम्।। १० ।। व्यसनेषु मनुष्याणां दुःखाभिनय ईशितुः। रञ्जनायानुकूलानां मोहनायाश्रितद्विषाम्।। ११ ।। हितकृत्त्वाद्राश्रितेश उपायस्तत्र चोदनात्। रक्षाफलित्वाच्छेषी च शेषित्वात्प्राप्य ईशितुः ।। १२।। रक्षकत्वमुपायत्वं शेषित्वं प्राप्यतापिच। धर्मिग्राहक सन्मानसिद्धं विष्णोश्चतुष्टयम्।। १३।। कर्तव्यत्वेन विहिता प्रपत्तिर्नाधिकारिणः । विशेषणं भवेन्नोचेत् भक्तिश्चापि तथा भवेत्।। १४ ।। संबन्धधीरक्षणेच्छानिषेधाभावपूर्विका। रक्षणेनैव हेतुस्स्यादीशस्यातिप्रसङ्गतः।। १५ ।। सर्वस्य रक्षिताश्रीशस्स्वप्रवर्तितहेतुतः। स्वयं प्रसन्नो भवति इत्येवं भावयेत् सुधीः ।। १६।। श्रियो विशेषणत्वान्नभग्नानान्यार्थता यथा। अनन्योपायता चापि तथात्वान्न विहन्यते।। १७।। अत्रानन्यार्थताऽनन्यप्रयोजनत्वम् - उपलक्षणता पक्षे तुल्यन्यायतया श्रियः। गुणेहाविग्रहादीनामुपलक्षणतापतेत्।। १८।। सह सद्धर्मचारिण्याश्श्रियोऽनिष्टनिवर्तनम्। शठारिवाल्मीकिमुखास्स्वप्रबन्धेषु सञ्जगुः।। १९ ।। सर्वेषु विष्णो रूपेषु रमावक्षस्थलस्थिता। अतस्तदन्द भूता सा शास्त्रेण पृथगुच्यते ।। २०।।

இவ்अधिकारத்தில் उपोद्घातத்தில் कर्मवश्यருக்கு கடுக यथा ज्ञानं பிறாவாமைக்குக் कारणமான भगवन्निग्रहத்துக்கு शमनமாக மூன்று कारणமும், அதில் सत्संप्रदायसिद्धि स्वरूपமும், शास्त्रानधिकृतர்க்குமிதுவே प्रधानமென்னுமிடமும், மற்றுள்ளார்க்கு सत्तर्कानुगृहीत सच्छास्त्रश्रवणानुमतिயும், हैतुकादिसंसर्ग मवश्य परिहार्यமென்றும், तत्संसर्गத்தில் வரும் अनर्थமும், आस्तिकருக்கும் असत्संसर्गத்தால் கலக்கங்கள் வரவும், அதற்குப் परिहारं பண்ணுமதும், परिहरिயாதபோது -

---

(सा.वि) संप्रदायादेव सिद्धिश्शास्त्रेष्वनधिकारिणाम्। हरिरेव परं तत्त्वमित्याद्याचार्यवाक्यतः।। ग्रहणं यत्संप्रदायसिद्धिस्तदिह कथ्यते। शास्त्राधिकारिणां संयगपि विश्वासशालिनाम्।। ज्ञानदार्ढ्यायविमतीन् प्रति संबोधनाय च । सच्छास्त्रश्रवणं कार्यं तत्त्वविद्देशिकान्तिकात्।। सहवासो न कर्तव्यो बाह्यैरपि कुदृष्टिभिः। सहवासे सति भवेद्बाह्यता ज्ञानविप्लवात्।। आस्तिकस्य तु बाह्यत्वानुत्पत्तावपि तद्धियः। कालुष्यं वा भवेत्तस्मात्त्यक्तव्यऽस्तु सङ्गतिः।। उपोद्घाततयैतादृगर्थानुक्त्वा ततः परम्। स्वातन्त्र्यादीश्वरो रक्षेत्काले स्वाभिमते स्वतः।। निर्हेतुरित्यत्र दोषो वैषम्यादिर्भवेत्प्रभोः। व्याजसापेक्ष एवातो रक्षेदिति समर्थितम्।। संबन्धादेव संरक्षेत्पुंसः कृत्यं न किञ्चन। एतच्चोद्यं नित्यमुक्तिप्रसङ्गाद्यैर्नि वारितम्।। पूर्वखण्डे -

मू - மன்னு மனைத்துறவாய் மருண்மாற்றருளாழியுமாய்த், தன்னினைவாலனைத்தும் தரித்தோங்குந் தனியிறையாய்,

(सा.दी) संशयविपर्ययज्ञानத்தால் வரும் अनर्थத்தையும் சொல்லி अनन्तरं सिद्धोपायத்தில் ईश्वरस्वातन्त्र्य सहजकारुण्यமடியாக வரும் கலக்கங்களும் परिहारங்களும், गुणविशेषसंबन्ध विशेषமடியாக வருமவைக்கு परिहारங்களும், पत्नीसंबन्धத்தில் शङ्कैகளுக்கு परिहारங்களும் சொல்லித் தலைக்கட்டினார்.

सिद्धोपायविषयத்தில் उक्तार्थसङ्ग्रहरूपமாக பாட்டருளிச் செய்கிறார் - மன்னும் इत्यादि - மன்னுமனைத்துறவாய், नित्यसर्वविधबन्धुவாய் - மருள் மாற்றருளாழியுமாய், अज्ञानना शककृपासमुद्रமாய் - தன்னினை வாலனைத்தும், स्वसङ्कल्परूप ज्ञानத்தால் सर्वपदार्थங்களையும் - தரித்து, धरिத்து । रक्षिக்குமவனாய் இத்தால் सर्वज्ञसर्वशक्तित्वங்கள் சொல்லப்பட்டன. ஓங்குந்தனியிறையாய் -

(सा.स्वा) இப்படி शरण्यனுக்கு उपायान्तरस्थानापत्तिरूपोपायत्व முண்டாகில் अकिञ्चनानां सर्वेषां व्याजमन्तरेण मोक्ष प्रसङ्गिயாதோ? என்கிற शङ्कैயை परिहरिயா நின்று கொண்டு अधिकारार्थத்தைப் பாட்டால் संग्रहिக்கிறார் - மன்னும் इति - மன்னும், दृढமான - அனைத்துறவாய், सर्वविधबान्धव्य முடையனாய் - மருள்- अज्ञानं - மாற்று, नाशकम् । அருளாழி कृपासमुद्रम् । अज्ञाननाशक कृपासमुद्रமாய் - தன்னினைவால், स्वसङ्कल्पத்தாலே - அனைத்தும், कृत्स्नத்தையும், - தரித்து, धरिத்து धारणरक्षणादिप्रयोजकशक्तियुक्तனா யென்றபடி - ஓங்கும், वर्धिயாநிற்கிற - தனி, अद्वितीयனான - இறையாய், स्वामिயாய்

(सा.प्र) उक्तप्रकारेण भगवतस्सिद्धोपायत्वं स्त्रीशूद्रादीनामनुसन्धानार्थं द्रमिडगाधयाह । மன்னுமனைத்துறவாய் इत्यादिना - மன்னுமனைத்துறவாய், ''माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः'' इत्युक्तप्रकारेण विनाशरहितसर्वविधबन्धुर्भूत्वा - மருள் மாற்றருளாழியுமாய், ''येनाश्रुतं श्रुतं भवति'' इत्युक्तप्रकारेण स्वज्ञानेन सर्वविषयाज्ञानस्य निवर्तककृपासमुद्रो भूत्वा - समुद्रो यथा अपरिच्छिन्नजलाधिकरणमेवमपरिच्छिन्न कारुण्यवानित्यर्थः - தன்னினைவாலனைத்தும் தரித்தோங்குந்தனியிறையாய், ''तस्य ध्यानान्तस्य ललाटा -

(सा.वि) द्वये श्रीमच्छब्दे श्रीरुपलक्षणम् । इति पक्षं प्रतिक्षिप्य श्रीस्तत्रापि विशेषणम् ।। उपायभूतावित्येवं प्राधान्येन प्रसाधितम् ।।

लक्ष्म्या सहोपायत्वं गाधयाप्याह - மன்னும் इति - மன்னும், स्थिरः - அனைத்தும், कृत्स्नः உறவாய், बन्धुस्सन् - नित्यभूतसर्वविधबन्धुस्सन् - மருள்மாற்றருளாழியுமாய். अज्ञाननाश ककृपासमुद्रः - தன்னினைவாலனைத்தும் தரித்தோங்குந் தனியிறையாய். தன்னினைவால், स्वसङ्कल्पेन । அனைத்தும், सर्वपदार्थः- தரித்து, सत्तां प्राप्यஓங்கும், यथावर्धेत तथा - தனி, अद्वितीयः - இறையாய் -

(सा.सं) மன்னும் इत्यादि - नित्यनिरुपाधिकान्तरङ्गसर्वविधबन्धुस्सन् ''माता पिता भ्राता निवासः - सर्वेषामेव लोकानां पिता माता च माधवः'' इत्यादिकमिह भाव्यम् - अज्ञानादिनिवर्तककृपा सागरस्सन्தன் इति - स्वसङ्कल्पेनैव कृत्स्नमपि धृत्वा । ஓங்கும் தனியிறையாய்,

मू - இன்னமுதத்தமுதாலிரங்குந் திருநாரணனே மன்னிய வன் சரண் மற்றோர் பற்றின்றி வரிப்பவர்க்கே ।। ३० ।।

(सा.दी) वर्धिக்கும் निस्समाभ्यधिकशेषिயாய் - இன்னமுதத்தமுதாலிரங்கும், இனிய अमृतத்தில் பிறந்த- அமுது, பிராட்டி. அவள் पुरुषकारமாக दयै பண்ணுமவனான. திருநாரணனே, श्रीमन्नारायणனே- மன்னியவன் சரண்- सिद्धமான दृढोपायम् - ஆர்க்கென்னில், மற்றோர் பற்றின்றி வரிப்பவர்க்கே, उपायान्तराशक्तராய் शरणवरणं பண்ணுவார்களுக்கென்கை ।। ३०।।

(सा.स्वा) இன், भोग्यமான- அமுதத்து, अमृतத்திலே பிறந்த - அமுதால், अमृतस्वरूपैயான பெரிய பிராட்டியாகிற पुरुषकारத்தாலே- இரங்கும் दयै பண்ணுமவனான- திருநாரணனே, श्रीविशिष्टनारायणனே- இதினாலே पुरूषकारताकारं தவிர रक्षासङ्कल्पाद्युपकारवत्तया श्रीरूप विशेषणविशिष्ट नारायणனே- மற்றோர் பற்றின்றி, வேறு अवलंबनமில்லாத, भक्तियोगादिरहितரான अकिञ्चनராய். வரிப்பவர்க்கே, शरणागति பண்ணினவர்க்கே-மன்னிய, पूर्वसिद्धமான-வன் சரண், सुदृढोपायम् - उपायान्तरस्थानापन्नன் भगवत उपायान्तरस्थानापत्तिயும் व्याजसापेक्षமாகையால் सर्वमुक्तिप्रसङ्गமில்லையென்றபடி - संबन्धकारुण्यशक्तिपूर्णனாயிருந்தாலும் व्याजमपेक्ष्यैवो पायान्तरस्थानापन्नனாய் मोक्षप्रदனாமென்று கருத்து ।। ३० ।।

(सा.प्र) त्स्वेदो पतत् - सोऽकामयत। बहु स्यां प्रजायेय ''इत्याद्युक्तरीत्या स्वसङ्कल्पात्कृत्स्नं यथा सत्तां प्राप्य अभिवृद्धं स्यात्तथा अद्वितीयस्वामी भूत्वा - இன்னமுதத்தமுதாலிரங்கும், सर्वेभ्यो भोग्यतमेभ्यो अत्यन्तभोग्यतमाया लक्ष्म्याः प्रेरणादस्मासु कृपां कुर्वन् - திருநாராாணனே, श्रीमन्नारायण एव - மற்றோர் பற்றின்றி வரிப்பவர்க்கே, भगवद्व्यातिरिक्तावलम्बनराहित्येन तमेव शरणतया स्वीकृतवतामेवமன்னிய வன் சரண், नित्यसुदृढोपायो भवेदित्यर्थः ।। ३० ।।

(सा.वि) स्वामी सन् - सङ्कल्पमात्रेण सकलवस्तूनि सत्तां प्रापय्य यथा वर्धेरन् तथा कृत्वा अद्वितीयस्वामिभूतः - இன்னமுதத்தமுதாலிரங்கும். இன், भोग्यात् - அமுதத்து, अमृतात्। அமுதால், अमृतभूतया अत्यन्तभोग्यतमया लक्ष्म्या सह - இரங்கும், दयां कुर्वन् - திருநாரணனே, श्रीमन्नारायण एव। மற்றோர் பற்றின்றி வரிப்பவர்க்கே. மற்று, अतिरिक्तस्य - ஓர், एकस्य। பற்று, आश्रयणस्य। இன்றி, राहित्येन - வரிப்பவர்க்கே, भगवन्तं वृण्वतामेव - மன்னிய, नित्यं வன், दृढं - சரண், उपायनिरयाय उपाय इत्यर्थः ।।

(सा.सं) श्रमादिराहित्येन वर्धमानौज्ज्वल्यवदद्वितीयस्वामी भूत्वा - இன் इति - भोग्यभूतामृतादपि - भोग्यतमया श्रिया पुरुषकारभूतया - இரங்கும், रक्ष्यवस्तुविषयककृपाविशिष्टश्श्रीविशिष्टो नारायण एव - तत्र पुरुषकारत्वेन लक्ष्मीमुपादाय पुनः திருநாரணனே इत्युक्त्या संबन्ध ज्ञानशक्तिकरुणादिविशिष्टवल्लक्ष्मीविशिष्ट एव भरं स्वीकुरुते - तेष्वर्थसामर्थ्याच्छ्रियश्शे षित्ववद्भरस्वीकरणरक्षासङ्कल्पौ च स्तः- अतोऽपर्यवसानवृत्त्या शेषित्ववदुपायत्वमप्युभयाधिष्ठानमित्युक्तं भवति - மன்னிய इति - उपायान्तरराहित्येन अनन्य प्रयोजनतया च ''त्वमेवोपायभूतो मे भव'' इति वरणवाक्यवतां नित्यनिरुपाधिकदृढतरोपाय इत्यर्थः ।। ३०।।

मू - विश्राम्यद्भिरुपर्युपर्यपि दिवानक्तं बहिर्दर्शनैरस्मद्देशिकसंप्रदायरहितैरद्यापि नालक्षितः।

(सा.दी) ''तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः'' என்கிற श्रुत्यर्थத்தை स्मरिப்பியா நின்றுகொண்டு இந்த सिद्धोपायाख्यनिधिरद्यापि बाह्यकुदृष्टिகளால் अदृष्टமாய் सात्विकருக்கு स्वयमेव முன்னே காணப்படுகிறதென்கிறார். विश्राम्यद्भिरिति - दिवानक्तं, सर्वदाயென்றபடி. उपर्युपरि विश्राम्यद्भिरपि - மேலே सञ्चरिயாநின்றார்களேயாகிலும் - अस्मद्देशिक संप्रदायशून्यராகையால் - बहिर्दर्शनैः, बाह्यपदार्थमात्रद्रष्टाக்களாய். मतान्तरस्थராலும்

(सा.स्वा) இப்படி ''भाष्यादौ संप्रदाये चोपायत्वं ब्रह्मणि स्थितम्'' என்று व्याजमपेक्ष्यैवोपायान्तरस्थानापन्नत्वरूपोपायत्वं சொன்னது கூடுமோ? श्रीभाष्यकारदर्शनस्थரான लोकाचार्यप्रभृतिகளுக்குமது தோற்ற வேண்டாவோ? என்ன निधिदृष्टान्तத்தாலே सन्निकर्षமிருந்தாலும் अस्मद्देशिकரான அப்புள்ளாருடைய सत्संप्रदायरूपतत्त्वज्ञान कारणமில்லாமையாலே அவர்களுக்கது தோற்றவில்லையென்று श्लोकத்தாலே समर्थिக்கிறார் विश्राम्यद्भिरिति - दिवानक्तं, सर्वदा - उपर्युपरि विश्राम्यद्भिरपि, आसीनैरपि। बहिर्दर्शनैः, बहिर्वर्तमानवस्तुमात्रदर्शनैः - अन्तर्गतनिधिदर्शनायोग्यैः - वेदान्तदर्शनाद्बहिर्दर्शनैः - अन्यसिद्धान्तस्थैश्च अस्मद्देशिकाः, वादिहंसाम्बुवाहाः - तत्संप्रदायरहितैः - अद्यापि श्रीमन्नाथमुनि यामुनाचार्य श्रीभाष्यकारादिभिस्समीचीनाध्वनि प्रवर्तितेऽपि। नालक्षितः, अधुनाप्यसौ निर्धिर्नालक्षित -

(सा.प्र) ननु सर्वविधबन्धुभूतस्य निरवधिककृपाजलधेः पुरुषकारभूतलक्ष्म्या सह जीवशरीरे नित्यसन्निहितस्य ''नायमात्मा प्रवचनेन लभ्यः'' इत्यादि श्रुतिभिरुपायत्वेनावगतस्य भगवतः

(सा.वि) ''तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः प्रजा अहरहर्गच्छन्त्य एवं ब्रह्मलोकं न विन्दन्त्यनुतेन हि प्रत्यूढाः'' श्रुत्यर्थमभिसन्धायाह - विश्राम्यद्भिरिति - दिवानक्तं, सततम् उपर्युपरिविश्राम्यद्भिरपि ब्रह्मणि विश्रमं कुर्वद्भिरपि सुषुप्तिदशायां ''सतासोम्य तदा संपन्नो भवति'' इति नित्यं ब्रह्मणा सहैकीभूतैरपि - अस्मद्देशिकसंप्रदायरहितैः अस्मदाचार्योपदेशरहितैः। बहिर्दर्शनैः, प्रच्छन्नप्रकट बाह्यसिद्धान्तनिष्ठैः। अद्यापि नालक्षितः, निधिरपि भूम्यन्तस्स्थितः - उपरिसञ्चरद्भिः, -

(सा.सं) ननु विचारितोभयवेदान्ता एव श्रीविशिष्ट एव सिद्धोपायः उपायत्वमुभयनिष्ठमिति च केचनजानन्तीत्यत्राह - विश्राम्यद्भिरिति- ''यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुस्तथादिवानक्तमुपरि विश्राम्यद्भिरपि बहिर्दर्शनैः, मतान्तरस्थैः - यथैवं भगवान्नालक्षितः तथास्मद्देशिकसंप्रदायरहितैरपि रहितत्वादेव नालक्षितः- अथापि उक्तविधया तेषामद्य सत्तर्कानुगृहीतप्रमाणसम्प्रदायप्रदर्शनेऽपि श्रुतौ, ''नायमात्या'' इति श्रुतौ-'' अहं मत्वादयुपायो वै साक्षाल्लक्ष्मी पतिस्स्वयम्। अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी इत्यादिकमिह भाव्यम् - नालक्षितः, इतः परमपि -

मू - स्वप्राप्तेस्स्वयव साधनतया जोघुष्यमाणश्श्रुतौ, सत्त्वस्थेषु भजेत सन्निधिमसौ -

(सा.दी) மெப்போதும் காணப்படாததாய்- स्वप्राप्तेः, स्वपदप्राप्तेः - स्वयमेव साधनभावेन श्रुतौ जोघुष्यमाणः - 'अमृतस्यैष सेतुः । यमेवैष वृणुते तेन लभ्यः - तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' इत्यादिகளில் சொல்லப்பட்ட இந்த सिद्धोपायरूपமான निरवधिकनिधियானது सत्सम्प्रदायविशिष्ट सात्त्विकजनங்களில் स्वयमेव सन्निधिயை भजिக்கும்-அவர்களால் -

(सा.स्वा) इत्यर्थः - अनेन 'तद्यथा हिरण्यनिधिमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः - एवमेव इमाः प्रजा अहरहर्गच्छन्त्य एवतं ब्रह्मलोकं न विन्दन्ति - अनृतेन हि प्रत्यूढाः' इति श्रुतिवाक्यं ज्ञाप्यते - पुनः कैर्लक्षित इत्यत्राह - सत्त्वस्थेष्विति - सात्त्विकगुणकेषु । सन्निधिं भजेत, -

(सा.प्र) किमित्येतावन्तं कालं समाश्रयणं जीवेन न कृतमित्यत्र 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो नविन्देयुः एवमेव इमाः प्रजास्सर्वा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेनहि प्रत्यूढः' इत्याद्युक्तरीत्या निक्षिप्तनिधौ गृहेनिध्युपरिस्थितनिधि दर्शनसाधनरहितजनस्य सुकृतविशेषात्कालविशेषे अञ्जनसमवधाने तद्दर्शन तदनुभववदज्ञातसुकृतादिमूल भगवत्कटाक्षविषयीभावात्सत्संप्रदाय सिद्धतत्त्वविदाचार्यकृपाविषयत्वेन 'सहैव सन्तं न विजानन्ति' इत्युक्तभगवद्ज्ञान प्रतिबन्धकर्मनिवृत्तौ -

(सा.वि) मूलज्ञातृ परम्पराप्राप्तोपदेशरहितैर्बाह्यदर्शनमात्रेणानालक्षितो भवति - तद्वदितिभावः - स्वप्राप्तेस्स्वयमेव साधनतया श्रुतौ जोघुष्यमाणः, अतिस्फुटं पुनः पुनरभिधीयमानः 'अमृतस्यैषसेतुः यमेवैष वृणुते तेन लभ्यः - तमक्रतुं पश्यति वीतशोको धातुः प्रसादात् महिमानमीशम्' इत्यादिष्विति भावः - शान्तावधिः, निरवधिः इष्टार्थप्रदातृत्वान्निधित्वाध्यवसानम् - सत्त्वस्थेषु, सात्विकेषु शेवधिः, निधिः - सन्निधिं भजेत, स्वकृपावशेन -

(सा.सं) न लक्ष्यत इति भावः - अन्यैरेवमालक्षितोऽपि सत्त्वस्थेषु सन्निधिं भजेतेत्याह - सत्त्वस्थेष्विति - 'लक्ष्मीनारायणाख्यं तदतो ब्रह्म सनातनम् । व्यापकावतिसंश्लेषादेकतत्त्वमिहोदितौ - नानयो र्विद्यते परम् । युवां तु विश्वस्य विभू जगतः कारणं परम्' इत्यादि सात्त्विकप्रमाणपरिशीलनादुद्रिक्तसत्त्वेषु - 'மெய்ய கண்ணாள் மலர்மேலுறைவாளுறைமார்பினன்- அலர்மேல் மங்கையுறைமார்பா' इत्युक्तविधया 'பூமகளாள் தனிக்கேள்வன்- ஒரு கதியும் சுவைதந்திட்டொழிவிலன்' इति - அருகலிலான் ஒக்கலையான் நெஞ்சுள்ளான்' इति यथोच्येततथा सन्निधिम्, अनुभाव्यतां - भजेत, प्राप्नुयादेव- असौ 'नायमात्मा प्रवचनेन' इत्यादिना प्रतिपन्नः - शान्तावधिः -

1. मू - शान्तावधिश्शेवधिः ।। 52 ।। (शेवधिः)

।। इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे सिद्धोपायशोधनाधिकारस्त्रयोविंशः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

---

2. (सा.दी) लभिக்கப்படுமென்று கருத்து ।। 52 ।।

।। इति श्रीसारदीपिकायां सिद्धोपायशोधनाधिकारस्त्रयोविंशः ।।

---

3. (सा.स्वा) तेषां दर्शनयोग्य इत्यर्थः ।। 52 ।।

।। इति श्रीमदुत्तरसारास्वादिन्यां सिद्धोपायशोधनाधिकारस्त्रयोविंशः ।।

---

4. (सा.प्र) मोक्षोपायतया भगवन्तमाश्रित्य मुक्ता भवन्तीत्याह - विश्राम्यद्भिरित्यादिना ।। 53 ।।

।। इति श्रीसारप्रकाशिकायां सिद्धोपायशोधनाधिकारस्त्रयोविशः ।।

---

5. (सा.वि) स्वयमेवोपायानुष्ठानसंपादनेन प्राप्यो भवतीत्यर्थः ।। 53 ।।

।। इति श्रीसारविवरिण्यां सिद्धोपायशोधनाधिकारस्त्रयोविंशः ।।

---

6. (सा.सं) त्रिविधपरिच्छेदरहितः शेवधिः, निधिः ।। 52 ।।

।। इति श्रीसारप्रकाशिकासङ्ग्रहे सिद्धोपायशोधनाधिकारस्त्रयोविंशः ।।

|| श्रियै नमः ||

|| श्रीमते रामानुजाय नमः ||

|| श्रीमते निगमान्तमहादेशिकाय नमः ||

# || साध्योपायशोधनाधिकारः ||

मू - यथाधिकरणम् -

सा.दी - இனி साध्योपायத்தை - शोधिக்கிறார் -

एवं स्वातन्त्र्यकरुणामूलबन्धनिबन्धनाः । शङ्काश्च पत्नीवैशिष्ट्य श्रीमतोऽत्र निराकृताः ।।
अधिकारे स्वरूपेच तथा परिकरेष्वपि । प्रपत्तेरुत्थिताश्शङ्का निरस्यन्तेऽत्र सर्वशः ।।

सा.स्वा - இனி पूर्वाधिकारप्रारम्भத்திலே उपक्षिप्तங்களான उपायस्वरूप तदङ्गाधिकारादि विषयाक्षेपங்களை साध्योपाय शोधनाधिकारத்திலே परिहरிக்கக் கடவராய் अधिकारार्थத்தை -

सा.प्र- एवं सिद्धोपाय विषये तद्गुणसंबन्धादिनिमित्तं व्यामोहं विनिवर्त्य तत्प्रसादनभूत साध्योपाय विषयव्यामोहं निवर्तयत्यस्मिन्नधिकारे - ननु स्वप्राप्ते स्स्वस्यैव साधनत्वं नोपपद्यते - यागदानहोमादीनामपूर्वद्वारा फलजनकत्वमिति मीमांसकोक्तरीत्या भक्तेरप्यपूर्वद्वारैव मोक्षसाधनत्वेन तस्यानपेक्षितत्वात् । एवंच भगवदुपायत्ववरणरूप भरन्यासस्यैवासिद्धेस्तच्छोधन दूरनिरस्त मित्यत्र "स वाएष महानजः आत्मा अन्नादो वसुदानः - स एवं प्रीतः प्रीणाति स एवैनं भूतिं गमयति तमक्रतु पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् - यं ममन्ततमभि कामा भवन्ति-तं तमेवोपजीवन्ति - यमेवैष वृणुते तेन लभ्यः" इत्यादि श्रुतिभिः "सकल फलप्रदो हि विष्णुः - अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच। भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । ये यजन्ति पितॄन् देवान् ब्राह्मणान् स हुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते । यो यो यां यां तनुं भक्तः" इत्यारभ्य "लभते च ततः कामान् मयैव विहितान् हितान्" इत्यादि स्मृतिभिश्च "फलमुत उपपत्तेः" इति सूत्रे 'स एव हि सर्वज्ञस्सर्वशक्तिर्महोदारो यागदान होमादिभि रुपासनेन चाराधितः ऐहिकामुष्मिक - भोगजातं स्वस्वरूपावाप्ति -

सा.वि - एवं सिद्धोपाय विषयशङ्काः परिहृत्येदानीं यागदान होमादेरिव भक्ति प्रपत्त्योरपि साध्योपाययोः भगवत्प्रीणनार्थत्वे नावश्यकत्वात्तद्विषयशङ्काश्चावश्यं परिहर्तव्या इत्येव -

सा.सं - इत्थं सिद्धोपायानुबन्धिमतिकालुष्यं शामितम् - अथ साध्योपायानुबन्धिमतिकालुष्य -

मू - प्रभुर्यजनदानहोमार्चना, भरन्यसनभावना प्रभृतिभिस्समाराधितः । फलं दिशति देहिनामितिहि संप्रदायस्थितिः -

सा.दी - அதில் முந்த -साध्योपायத்தினுடைய शोध्यत्वसिद्ध्यर्थं सिद्धोपायभूतனான भगवान् साध्योपायங்களால் आराधितனாயே फलप्रदனா மென்று श्रुतिस्मृतिகளால் प्रतिपादिக்கப்படு மென்று காட்டுகிறார் - यथाधिकरणமென்று - साध्योपायं सिद्धोपायप्रसदनार्थமாகையால் तदनन्तरं साध्योपायशोधनமென்று सङ्गतिயும் सूचितम् - यथाधिकरणम्, यथाधिकारम् - यजनं, यागः । अर्चना, समाराधनम् - भावना, निधिध्यासनं - प्रभृतिशब्दத்தால் व्रतचर्यातीर्थयात्रा भगवत्सेवा भगवतसेवादिग्रहणम् - समाराधितः प्रभूः ''अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'' என்று சொல்லப்பட்ட स्वामी आराधकர்க்கு

सा.स्वा - श्लोकத்தாலே - सङ्ग्रहिக்கிறார் - याथाधिकरणमिति - यथाधिकरणं. यथाधिकारम् । अनुष्ठितैरिति - यथावस्थित साङ्गसाध्योपायज्ञानस्याप्यधिकारानुप्रविष्टतया यथाधिकरणमित्यत्त तदप्यन्तर्गतम् । अधिकारशब्दार्थान्तर्गतं यथावस्थित साङ्गसाध्योपाय ज्ञानम् आकिञ्चन्यादिकं तत्तज्ञातिवर्णादिकं चानतिक्रम्यानुष्ठितैः । यजनेत्यादिकं दृष्टान्तार्थम् भरन्यसनभावना प्रभृतिभिरिति प्रकृताभिप्रायम् - प्रभृति पदेन कर्मयोगज्ञानयोगौ गृह्येते - प्रभुः. समर्थः तत्तत्फलप्रसादसमर्थः - समाराधितस्सन् देहिनां देहित्वेन सूचित तत्तदुपायानुष्ठातृभावानां - सत्वाधिकारमतिक्रम्यानुष्ठितै -

सा.प्र - रूपमपवर्गं च दातुमीष्टे । तदाराधनरूपाणि च यागदानहोमात्म कानि ''स्तुतिनमस्कार सङ्कीर्तनार्चनध्यानन्यासादिभिराराधितात्परस्मात्पुरुषाद्भोगापवर्गरूपफलं च वदन्ति'' इत्यादि रामानुजार्यवाक्यैश्च सर्वैरनन्यथासिद्धश्रुतिलिङ्गवाक्य प्रकरणस्थान समाख्यानरूपन्यायानुगृहीतै - श्श्रीमन्नारायणस्यैव सकलफलप्रदत्वावगमात्तस्योपायत्व संभवात्तदुपायत्व-वरणरूप भरन्यासिद्धेस्तस्य शोधनीयत्वमुपपन्नमेवेत्यभिप्रेत्याह - याथाधिकरणमिति, यथाधिकारमित्यर्थः । ''पर्यग्निकरणान्तेषु'' ब्रह्मणे ब्राह्मण मालभते - क्षत्राय राजन्यम्'' इत्यादिभिर्विहित नरमेधादिषु होमशब्दवाच्यत्वाभावात्सायं प्रातर्होमेषु यागशब्दप्रसिद्ध्यभावाच्च यजनहोमयोः पृथगुक्तिः । अर्चना, भगवदाराधनम् - भावना,

सा.वि - मभिप्रायेण सिद्धान्तस्थितिमाह - यथाधिकरणमिति । यजनम्, यागःदानं, प्रसिद्धम् - होमः, जुहोति चोदनाचोदितः - यागस्य देवतोद्देशेन द्रव्यत्यागबुद्धिरूपस्य प्रक्षेपरूपहोमशिरस्कत्वेन तेनैव होमसिद्धावपि पर्यग्नीकृतं पात्नीवतमुत्सृजतीत्यादौ होमाभावेन केवलत्याग सत्वाद्धोमस्य पृथगुपादानम् - अर्चना, पूजनम् । न्नरन्पसनं, प्रपत्तिः - भावना, निधिध्यासनम् प्रभृतिशब्देन तपस्तीर्थयात्रादिकं गृह्यते - एतैस्समाराधितः, प्रसादं प्रापितः -

सा.सं - शान्त्यर्थमधिकारान्तरमारभमाणः प्रतिपाद्यं सङ्गृह्णाति यथेति - यथाधिकरणम्, यथाधिकारम्। प्रभुः, यजनादि फलदानसमर्थः । भावना, उपासना - प्रभृतिशब्देन -

मू - श्रुतिस्मृतिगुरूक्तिभिर्नयवतीभिराभाति नः ॥५३॥

सा.दी - फलத்தைக் கொடுக்குமென்று நமக்கு संप्रदायस्थितिः - मर्यादा ॥५३॥

सा.स्वा - स्समाराधितः फलं दिशतीत्यर्थः - इति हि संप्रदायस्थितिः, उपदेशपरम्परागता मर्यादा - नयवतीभिः, अतिशयेन मतुप् - अतिशयितन्योपेताभिः - श्रुतिस्मृतिगुरूक्तिभिः, न केवलमुपदेश पारम्पर्यमात्रम् । अपि तु तै स्स्वकीयनिबन्धनेष्वप्येवमुक्तमिति भावः - नः, वेदान्तोदय न संप्रदायस्थानामस्माकम् । यद्वा कथकप्रधानगणनेकनिष्ठाश्रयां निष्ठां वहतां कर्तुमकर्तुमन्यथा कर्तुं शक्तानामपि नः । एवमेव भातीत्यर्थः - एकदेशिகளுடைய भावनं श्रुतिस्मृत्यादि विरुद्धतया स्वयं च मन्दतया भ्रान्तिरूप மென்றபடி ॥५३॥

இந்த साध्योपायशोधनं கூடுமோ? ''देवतापारमार्थ्यंच याथावद्वेत्स्यते भवान् -

सा.प्र - ध्रुवानुस्मृतिः - तपस्तीर्थ सेवादिः प्रभृतिशब्दार्थः ॥५४॥

ननूपायत्वोपयुक्तगुणविशिष्टतया भगवतोऽवगमेसति ''आरोग्यमिन्द्रियौल्भण्यं - कर्मणां परिपाकत्वादाविरिञ्चादमङ्गलम् । इति मत्वा विरक्तस्य वासुदेवः परायणम् इत्याद्युक्तप्रकारेणैहिकामुष्मिकक्षुद्रपुरुषार्थवैराग्ये सति प्राप्यत्वरायां सत्यां च -

सा.वि - प्रभुः, देहिनां फलं दिशति - ददाति - इति, एवं प्रकारेन - नः, अस्माकं - संप्रदायस्थितिः, नयवतीभिः - श्रुतभगवत्प्रसादस्यैव द्वारत्वोपपत्तौ अश्रुतापूर्वकल्पना न युक्तेति फलमत उपपत्तेरित्यत्र प्रदर्शितन्यायानुगृहीताभिः - श्रुतिस्मृतिगुरूक्तिभिः, ''स वा एष महानज आत्मान्नादो वसुदानस्स एनं प्रीतः प्रीणाति - स एवैनं भूतिं गमयति - तमः - क्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् । यमेवैष वृनुते तेन लभ्यः'' इत्यादिका श्रुतिः - ''यो यो यां यां तनूं भक्तश्श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । लभते च ततः कामान्मयैव विहितान्हितान्'' इत्यादि का स्मृतिः स एव हि सर्वज्ञस्सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाराधितः ऐहिकामुष्मिकजातं स्वस्वरूपावाप्तिरूपं च फलं दातुमीष्टे'' इति गुरूक्तिः एताभिराभाति ॥५३॥

ननु साध्योपायस्य कर्तव्यत्वे सति तद्विषशङ्काशोधनं युक्तम् ''सति कुड्ये चित्रकर्म'' इति -

सा.सं - तीर्थयात्रादि गृह्यते - श्रुतिः ''अन्नादो वसुदानः एष ह्येवानन्द याति'' इत्यादि का स्मृतयः ''फलानामिह सर्वेषां प्रदाता स्वयमच्युतः । लभते च ततः कामान् मयैवविहितान्हितान्'' इत्यादयः - गुरूक्तिः, फलसम्बिभत्सया कर्मभिः रात्मानं पिप्रीषन्ति । ''सुप्रीतोऽलं फलाय'' इति द्रमिडभाष्यकारादि प्रमुखोक्तिः यस्मिन्नर्थे सत्तर्कानुग्रहोस्ति तस्मिन्नेव श्रुत्यादेरपि प्रमानभावः । ''यस्तर्केणानु सन्धत्ते सधर्मं वेदनेतर'' इत्युक्तेः । अत आह - नयवतीभिरिति - फलमत इत्यादि न्यायानुगृहीताभिरित्यर्थः - आभाति, विशदं प्रतिभाति - एवं च तदाराधनभूतप्रकृत भरन्यसनं स्वरूपतः परिकरतः अधिकारतश्च विशोध्यमिति भावः ॥५३॥

मू - இப்படி सर्वज्ञமாய், सर्वसक्तिமாய் परमकारुणिकமாய் सर्वशेषियாய், सपत्नीकமாய், सर्वलोकशरण्यமான सिद्धेण्पायविशेषं தெளிந்தாலும் ''आरोग्यमिन्द्रियौल्बष्य -

सा.दी - श्लोकத்தில் विवक्षितமான - सिद्धोपायशोधनप्रयोजनத்தை विवरिக்கிறார் இப்படி सर्वज्ञமாய் इत्यादिயால் - இப்படி सिद्धोपायाज्ञानं பிறந்தாலும், संसारवैराग्य முண்டானாலும், प्राप्यத்தில் रुचियும், उपायத்தில் त्वरैயுமுண்டானாலும்இ साध्योपायविशेषத்தினுடைய सम्यक् ज्ञानமில்லாதபோது सिद्धोपायवशीकरणं கூடாமையால் सर्वமும் व्यर्थமாமென்று கருத்து आरोग्यमिति - आरोग्यं गुणं போலே தோன்றும் संसारिகளுக்கு - विवेकिகளுக்கு - इन्द्रियौल्बण्यावहत्वेन दोषமாய்-

सा.स्वा - यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् - स सर्वविद्भजतिमां सर्वभावेन भारत ''इत्यादि களிலும் ''प्राप्तुं दुःखोदधे पारं त्वरयावन्नभिद्यते'' इत्यादिகளிலும் अत्यावश्यकமாகச் சொல்லுகிற परदेवता पारमार्थ्यज्ञानமும், इतरविषयवैराग्यமும், पुरुषार्थत्वरैயும், संपूर्णமாயிருக்கையாலே வேறு चिन्तनीयமில்லாமையால் साध्योपायशोधनं व्यर्थமன்றோ? என்கிற तटस्थशङ्कैயை परिहरिக்கிறார் இப்படி सर्वज्ञமாய் इत्यादिना - இப்படி सिद्धोपायज्ञानं பிறந்தாலும், संसारवैराग्यமுண்டானாலும், प्राप्यरुचिயும் उपायत्वरैயுமுண்டானாலும், साध्योपाय विशेषनिर्णय மில்லாதபோது सिद्धोपाय वशीकरण विशेषं கூடாமையால் सर्वமும் व्यर्थமென்று கருத்து - आरोग्यमिति - आरोग्यं, संसारिகளுக்கு गुणंபோலே தோற்றும் - विवेकिகளுக்கு इन्द्रियौल्बण्यावहत्वेन दोषமாய் தோற்று கையாலும், ऐश्वर्यं -

सा.प्र - एतैरेव वैषम्य नैर्घृण्य प्रसङ्गपरिहारात् ''पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति'' इति वादिन्या सापराधसंरक्षण सन्धुक्षिकया लक्ष्म्या विशिष्टेन भगवता मोक्षप्रदानोपपत्तेर्भरन्यासस्यानपेक्षितत्वात्तद्विषयव्यामोहस्य निवर्तनमयुक्तमित्यत्र अनाद्याज्ञाति लङ्घनमूलनिग्रहरूपस्य भगवत्प्राप्तिप्रतिबन्धकस्य निवर्तकतया विहित भरन्यासाननुष्ठाने प्रतिबन्धकानिवृत्तेः प्राप्त्यसंभवात्तदर्थं भरन्यासस्यापेक्षितत्वात्तद्विष्यव्यामोहनिवर्तनमावश्यकमेवेति तत्प्रतिजानीते - இப்படி सर्वज्ञமாய் इत्यादिना -

सा.वि-न्यायात्तत्रैव प्रमाणं नास्ति - ''कर्मणां परिपाकत्वादाविरिञ्चादमङ्गलम् । इति मत्वा विरक्तस्य वासुदेवः परागतिः'' इति क्षुद्रपुरुषार्थवैराग्ये प्राप्यरुचौ प्राप्यत्वरायां सत्यां तावन्मात्रापेक्षणेनैव ईश्वरस्य गुणलक्ष्मी संबन्धवतो वैषम्यनैर्घृण्य परिहारेण रक्षणसंभवादित्याशङ्क्य तस्य कर्तव्यत्वं प्रमाणसिद्धमिति बहुशो निवेदितमपीहस्मारयति - இப்படிसर्वज्ञமாய் इति - आरोग्यमिन्द्रियौल्बणयम्, आरोग्यमिन्द्रियवृद्धिहेतुः - ''आयुर्घृतम्'' इतिवदौपचारिकप्रयोगः । यद्वा, आरोग्यमस्ति चेदिन्द्रियौल्बण्यं இப்படிभवति - तेन विषयाशक्तिः -

सा.सं - इत्थं सङ्गहीतं विपरीतुं सङ्गतिं दर्शयन्नधिकारानारम्भशङ्कामपि परिहरति இப்படிइत्यादिना தெளிந்தாலும் इत्यन्तेन - अनन्तराधिकारशोधित सिद्धोपादस्वरूपं निष्कृष्टम् । आरोग्यमिति -

मू - मैश्वर्यं शत्रुशालिता । वियोगो बान्धवैरायुः किन्तद्येनात्रतुष्यति என்கிறபடியே विवेक மில்லாதார்க்கு गुणமாய்த் தோற்றினவையும் दोषமானபடி கண்டு (संसार) वैराग्यं पूर्णமானாலும் ''परमात्मनि यो रक्तः'' என்கிறபடியே प्राप्यरुचिயுண்டானாலும் ''महता पुण्यपण्येन क्रीते यं कायनौस्त्वया । प्राप्तुं दुःखोदधेः पारं त्वरयावन्नभिद्यते'' என்கிறபடியே त्वरैபிறந்தாலும் अनादिயாக अनुवृत्तமான आज्ञातिलङ्घनமடியாகப் பிறந்து நிற்கிற बन्धकமான भगवन्निग्रहத்துக்கு प्रशमनமாக ''मामेकं शरणं व्रज'' என்று विधिवाक्य(த்தி)த்தாலும் ''प्रपद्ये'' என்று अनुष्ठानवाक्य (த்தி)த்தாலும் சொல்லப்பட்ட साध्योपाय विशेषं தெளியாதபோது सिद्धोपायभूत மான सर्वेश्वरனை वशीकरिக்க விரகில்லை-

सा.दी - தோன்றும் ऐश्वर्यமும் गुणமாகமாட்டாது शत्रु शालिता हेतुவாகையால். दीर्घायुष्ट्वமும் गुणं போலே தோன்றுகிறது -அது बन्धुக்களோட்டை योगத்தைப் பண்ணும் - चिरजीविपुरुषனுக்கு पुत्रादिमरणदर्शनं संभविக்கையால் सर्वत्र कारणे कार्योपचारः - अतः, अत्र - இந்த लोकத்தில் विवेकि யானவன் யாதொன்றால் सन्तोषिப்பன் - அப்படிப்பட்ட वस्तु ஒன்றுமில்லையென்றபடி - महतेति இது शिष्यனைக் குறித்து गुरुवचनम् வாரீர் பிள்ளாய் महத்தான पुण्यமாகிறவிலையாலிந்த देहरूपமான ஓடம் - इष्टप्राप्ति साधनமாகையால் ஓடமென்கிறது - உன்னால் கொள்ளப்பட்டது ஆகையாலிந்த ஓடமெவ்வளவிலுடையாதிருக்குமதுக்கு முன்னே - दुःखोदधिயினுடைய पार மான திருவடிகளையடைவத -

सा.स्वा - शत्रुशालिताहेतुவாகையாலும், आयुस्सुबन्धुविनाशादि दुःखदर्शनहेतुவாகையாலும், येन तुष्यति तत्किं, सन्तोषहेतु ஒன்றுமில்லை யென்று கருத்து - कार्यं कारणयोरभेदोपचारेण निर्देशः - महतेति इष्टप्राप्तिसाधनतया कायरूपेयं महापुण्य मूल्य द्रव्येण क्रीतानौः यावन्नभिद्यते तावत्तत्पूर्वमेव दुःखोदधेः पारं प्राप्तुं त्वरेति योजना - ஆகையால் साध्योपायमवश्यं शोधनीय மென்று கருத்து प्रथममधिकारविषय शङ्कैயை उद्देशक्रमेण अनुवदिக்கிறார் -

सा.वि- तदर्थं पापारम्भः - विषयालाभे दुःखम् - ऐश्वर्यं शत्रुशालिता, ऐश्वर्यं चेच्छत्रुता - प्रभुत्ववतो बहवश्शत्रवस्संभवन्ति - कामक्रोधादि शत्रवश्च संभवन्ति - तदपि दुःखहेतुः, आयुर्दीर्घायुरस्ति चेत् बान्धवैर्वियोगः, पुत्र कलत्रादि मरण दुःखानुभवः - अत्र, संसारे - येन तुष्यति तत्किमपि नास्तीति - आयुरारोग्यैश्वर्याणामविवेकिनो गुणत्वेन प्रतिभासमानानां विवेकिनो दोषत्वेन प्रतिभासनाद्वैराग्योत्पत्तिरित्यर्थः - व्रज என்று विधिवाक्यத்தாலும் इति -

सा.सं - आयुरारोयैश्वर्य रूप सांसारिकफलेष्वनिष्टा ननु बन्धि किं तत् - न किमपि - बन्धुवियोगेन्द्रियौल्बण्यशत्रुशालित्वैः क्रमेणायुरादेरुपहतत्वा दित्यर्थः - अतो न किमप्यत्र तोषजनकमित्याह। येनात्र तुष्यतीति विवेकः, त्याज्योपादेय विवेकः । त्वया संसार सागरं तर्तुकामेन यावत्कालमभिन्नतया वर्तते तन्मध्य एव - त्वर, उपायानुष्ठानेत्वरितव्यमित्यर्थः । விரகில்லை इति - तद्वशीकरणं तच्छरणाकगतिरेवेति हि । भाष्यमित्याशायः वशीकरणम्, निग्रहसङ्कल्प शामनेन प्रसाद विशेष विशिष्टतया करणम् - ஆகையால் आधिकारादि मुखेन परिशोधित साध्योपाय -

मू - ஆகையால் அதின் अधिकारத்திலும், स्वरूपத்திலும் - परिकरங்களிலும், வரும் கலக்கங்கள் शमिப்பிக்கிறோம் - இப் प्रपत्तिயுமொரு वैदिक धर्मமன்றோ? இதுவுமொரு यागविशेषமாக வன்றோ न्यासविद्यैயிலோதப்படுகிறது - ஆகையால் இது सर्वाधिकारமாகக் கூடுமோவென்று சிலர் विचारिப்பர்கள் -

सा.दी - ரக்கு त्वरिயென்கை - முந்த साध्योपायத்தினுடைய आधिकार (रि) विषयशङ्कैகளை परिहरिப்பதாகக்கோலி शङ्कैயை अनुवदिக்கிறார் இப் प्रपत्तिயுமே इत्यादिயால் - न्यासविद्यैயில் ''तस्यैवं विदुषो -

सा.स्वा- இப் प्रपत्तिயும் इति - वैदिकधर्म மானாலும் सत्यवचनादिवत् सर्वाधिकार மாகலாகாதோ? என்னவருளிச்செய்கிறார் - இதுவும் इति यद्वा, वेदத்திலே आम्नातமல்லாமையாலே वैदिकत्वं கூடுமோ? आम्नातமானாலும் सत्यवचनादिवत्सर्वाधिकारत्वத்துக்கு विरोधமுன்டோ? என்னவருளிச்செல்கிறார் - இதுவும் इत्यादिना ''तस्यैवं विदुषों यज्ञस्यात्मा'' என்று यागरूपமாக आम्नातமாகையாலே वैदिकत्वமும் - ''तस्माच्छूद्रो यज्ञेनावक्लप्तः'' என்கிறபடியே ज्योतिष्टोमादियज्ञवत्सर्वाधिकारत्वविरोध முண்டென்று கருத்து -

सा.प्र - तत्र कृतिसाध्यतया विहित साध्योपायस्य कृतिशेषि भूताधिकारि निरूपणीयत्वात्प्रथममधिकारिविषयव्यामोहं निवर्तयितुमनुवदति இப் प्रपत्तिயும் इत्यादिना - ''तस्यैवं विदुषो यज्ञस्य - यस्समिधाय आहुतीर्यो वेदेन दाशमर्त्यो अग्नये यो नमसा स स्वध्वरः ।हविर्ग्रहीत्वात्मरूपं वसुरण्येति मन्त्रतः । जुहुयात्प्रणवेनाग्नामच्युताथ्ये सनातनेसमित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा यो करोद्देमेसस्वध्वर इतीरितः'' इत्यादिभिर्न्यासविद्याया यज्ञत्वेनोक्तेर्वैदिके यज्ञेच शूद्रादीनामधिकाराभावा -

सा.वि - यद्यापि विधिमन्त्राधिकरणे अग्निमग्नीन् विहरेत्यादौ संबोधविभक्तेरभिमुख श्रोतृमात्रविषयाया अभिमुखानभिमुखसाधारणविधि विरोधित्वमित्युक्तम् - इह मध्यमपुरुषेणाभिमुखमात्रविषयेणविधि विरोधित्वमेव प्रतीयते - तथापि निक्षेपरक्षायां प्रथमपुरुषवन्मध्यमपुरुषेऽपि विधिशक्तेरनपाया दर्जुनाद्युद्देशेन प्रवृत्तावप्यर्थतस्साधारण्यात् - अन्यथा एवंविधेषु सर्वेष्वनाश्वासप्रसङ्गादिति विधित्वं समर्थितम् - अतो व्रजेति विधिवाक्यमित्युक्तम् - आर्थिसाध्योपायस्य प्रपदन्यस्य शमिப்பிக்கிறோம் - शमिष्यामः - प्रथममधिकार विषय शङ्कां परिहर्तु मनुवदति - இப்प्रपत्तिயும் - इति - इयं प्रपत्तिर्वेदविहित धर्मः, यागरूपः, यागरूपः, वैदिकमन्त्रकरणिका चेति शूद्राणामप्यधिकारोक्तावपशूद्राधिकरणविरोध इति परेषामभिप्रायः - ''सर्वस्य शरणं सुहृत्'' इति -

सा.सं - स्यैव संयगनुष्ठितस्य तद्वशीकरणत्वात् - तत्र प्रथमं प्रपत्तिर्न सर्वाधिकारा? वैदिकधर्मत्वात् - न चाप्रयोजकत्वम्? तथा सति पूर्वोत्तर काण्डापशूद्राधिकरण विरोध इति यन्मतं तदनूद्य बहुभिः प्रमाणैरस्सामान्यधर्मत्वसिद्ध्या पूर्वोत्तरकाण्डन्यायाप्रसरा द्दूषयति - प्रपत्तिயும் इत्यादिना - यागविशेष மாக इति - ''ब्रह्मणे त्वा महंस ओमित्यात्मानं युञ्जीत'' इति विधिविहितस्य ''तस्यैवं विदुषो -

मू - இதுसर्वेश्वरனை सर्वருக்கும் शरण्यமென்றோதுகிற श्वेताश्वतरश्रुतिबलத்தாலே - परिहृतम् - இவ்अर्थं ''सर्वलोक शरण्याय ।

सा.दी - यज्ञस्यात्मा यजमानः என்றதிரே परिहरिக்கிறார் - இது सर्वेश्वरனை इत्यादिயால் - ''सर्वस्य शरणं सुहृत्'' என்று श्रुति - இவ் अर्थம் उपब्रह्मणங்களாலும் सात्वतादि भगवच्छास्त्रத்தாலும் दढीकृत மென்கிறார் - இவ் अर्थमित्यादिயால் - सर्वयोग्यमिति - सर्वयोग्यम्, இது सर्वशरण्यत्वव्यञ्जकम्

सा.स्वा - शङ्कापर्यवसानத்தை उपसंहरिக்கிறார் - ஆகையால் इतिइத்தை परिहरिக்கிறார் - இது इति - श्रुतिबलத்தாலே इति ''सर्वस्य शरणं सुहृत्'' என்கிற श्रुतिबलத்தாலேயென்றபடி - அங்கு शरणशब्दம் - उपायान्तरस्थानापत्त्यापर पर्याय भरस्वीकर्तृत्वव्यञ्जन मुखेन वर्णाश्रमादि विशेषनादरेण सर्व ருக்கும் भरन्यासयोग्यனென்று सर्वाधिकारत्वद्योतकமிறே न्यायबलத்தாலே श्रुति यस्य परैயானாலோ? என்னவருளிச்செய்கிறார் - இவ் अर्थमिति - सर्वलोकशरण्यः, सर्वेषां लोकानां शरणं गन्तुं योग्य इत्यर्थः - सर्वयोग्यं, सर्वेषां शरणं गन्तुं योग्यम् -

सा.प्र - द्भरन्यासस्य न सर्वाधिकारत्वमित्यपि वदन्तीत्यर्थः - अनूदित व्यामोहनिवर्तनप्रकारमाह - இது सर्वेश्वरனை - इत्यादिना - यथा शूद्रादीनां वैदिकाग्न्याधानादावधिकारित्वाभावेऽपि शूद्रविशेषाणां रथकार निषादस्थपत्यादीनां ''रथकारोग्नीनादधीत् एतया निषाधस्य पतिं याजयेत्'' इत्यादि विशेषवचनाद्वैदिके कर्मण्येवाधिकारस्स्वीक्रियते - एवमेव 'सर्वस्य शरणं सुहृत्'' इत्यादि श्रुतिभिर्भरन्यासस्य सर्वाधिकारत्वसिद्धिरित्यथः - ननु श्रौतस्य सर्वशब्दस्य अपशूद्राधि करणविरोधपरिहाराय त्रैवर्णिकविषयतया सङ्कोच एवोचित इत्यत्र उपब्रह्मणेष्वपि भरन्यासस्य सर्वाधिकारत्वोक्तेः स्त्रीशूद्रादि सर्वविषयत्व मेवेति दर्शयन्नुपब्रह्मणानामपि सङ्कुचितविषयत्वमाशङ्क्य श्रुतिवदेव प्रमाणतमभूते श्रीपाञ्चरात्रे'' त्रयाणां क्षत्रियादीनां प्रपन्नानां च तत्त्वतः । अमन्त्रमधिकारस्स्याच्चतुर्व्यूहक्रियाक्रमे'' इति शूद्राणां विशिष्य प्रपदने अधिकारोक्ते स्सर्व शब्दस्यासङ्कोच एव स्वीकार्य इत्याभिप्रयन्नाह இவ் अर्थमित्यादिना ।

सा.वि - श्वेताश्वतरवाक्ये सर्वसाधारण्येन बोधितत्वात् । '' सर्वलोकशरण्याय'' इति तस्याश्श्रुतेरूप बृह्मितत्वात्त्रयाणां क्षत्रियादीना मित्यारभ्य ''प्रपन्नानां च तत्त्वतः'' इत्युक्तेश्श्रीसात्वतवचने क्षत्रियादिषु त्रिषु शूद्रस्य तृतीयत्वेन विशिष्य शूद्रस्याप्यधिकारकथनेन ''कुयोनिष्वपि संजात'' इति शूद्रादपि निकृष्टयोनि जातस्यापि अधिकारकथनेन च सर्वशब्दस्य ब्राह्मणादि त्रैवर्णिकविषयतया सङ्कोचायोगात्, वैदिकत्वेऽपि साधारणत्वेन सत्यवदनादिवद्विरोधाभावात् - यागत्वेऽपि विहितत्वेऽपि विहितत्वे सति ''एतया निषाधस्थपतिं याजयेत्'' इत्यादिवदधिकारसंभवात्तान्त्रिकमन्त्रेणापि तदनुष्ठानसंभवेन अपशूद्राधिकरणविरोधाभावात् - काकादीनां च प्रपन्नत्वस्य प्रमाणसिद्धत्वाच्च प्रपत्तेस्सर्वाधिकारत्वेन कश्चिद्विरोध इति परिहारमाह । இது सर्वेश्वरன் - इति -

सा.सं- यज्ञस्य ''इत्यनेन यागविशेषत्वेनाम्नातत्वादिति भावः - श्रुतीति - ''सर्वस्य शरणं सुहृत्'' इति हि श्वेताश्वतरमन्त्र इत्यर्थः - बलशब्दस्सर्वशब्दस्यासङ्कुचिततायास्स्वरससिद्धतां -

मू - मनायासमप्रमादमनूपमम् । प्रपन्नार्तिहरं विष्णुं शरणं गन्तुमर्हसि इत्याद्युपब्रह्मणங்களாலும் ''त्रयाणां क्षत्रियादीनाम्'' என்று துடங்கி शूद्रपर्यन्तங்களான वर्णங்களையெடுத்து ''प्रपन्नानां च तत्त्वत:'' என்று சொல்லுகிற श्रीसात्वतवचनத்தாலும் ''कुयोनिष्वपि संजातो यस्सकृच्छरणं गत: । तं माता पितृहन्तारमपि पाति भवार्तिहा'' என்று சொல்லுகிற सनत्कुमारसंहितावचनத்தாலும் दृढीकृतम्

सा.दी - सर्वयोग्य மானாலும் समार्जनादि आयाससाध्यமாயிருக்கும் - அப்படியன்றென்கிறார் - अनायास மென்று - अनायास மானாலும் சிலவற்றில் प्रमादं संभविக்கும் - அதுவுமில்லை யென்கிறார் - अप्रमादமென்று - अप्रमादत्वेऽपि சிறிது अप्रधान மாயிருக்கும் - அதுவு மில்லையென்கிறார் - अनूपमम्, अनुपमமென்றபடி - सर्वेभ्योऽप्यधिक மென்றபடி - இவை भगवद्विशेषणங்களானாலும் तत्प्रपत्तिயையும் विशेषिக்குமென்று கருத்து - कुयोनिष्वपीतिकुयोनि கள், निषादादि जातिகள் - ब्रह्मविद्या विषयமான - अपशूद्राधिकरणविरोधशङ्कैயையும், - मन्त्रविशेष सापेक्षत्वத்தால் -

सा.स्वा - किमायासेन योग्य इत्यत आह - अनायासमिति - रक्षणकरणे प्रमादसंभावनायां सर्वयोग्यत्वं कथमित्यत्राह - अप्रमादमिति - एवं भूत शरण्यान्तरसंभावनायां कथं सर्वभूतयोग्यत्वमित्यत्राह - अनूपममिति - अतुल्यमित्यर्थ: । இது भगवद्विशेषण மானாலும் वैयर्थ्यान्यथानुपपत्त्या तत्प्रपदनத்திலும் सिद्धिக்குமென்றபடி - இந்த उपब्रह्मणद्वयமும் श्रुतिसमानமாகையாலே स्पष्टतया निर्णयिकोपब्रह्मणान्तर மருளிச்செய்கிறார் - त्रयाणामिति - இந்த वचनத்தில் शूद्रனுக்கு - स्पष्टமாக - अधिकारं தோற்றவில்லையே? என்னவருளிச்செய்கிறார் - शूद्रपर्यन्तங்களான इति । प्रपन्नानं क्षत्रियादीनां त्रयाणां चेत्यन्वयமாகையாலே शूद्राधिकारं स्पष्टமாகத் தோற்றுகையாலே अनन्यथा सिद्धानेको पब्रह्मणத்தாலே स्वत एव भरन्यासव्यञ्जनैक प्रवृत्त शरणशब्दाङ्कित श्रुति अन्यथा नेतुं शङ्कि तुमप्यनर्हं என்று கருத்து. இப்படியாகில் -

सा.प्र - ननु भरन्यासे करणमन्त्राणां वैदिकत्वाच्छूद्राणां तदुच्चारणस्य निषिद्धत्वेन तदनुष्ठानासंभवान्न तस्य सर्वाधिकारत्व मित्यत्रास्य सत्यवचनादिवत्सर्वाधिकारत्वस्य वाचनिकतया वेदे -

सा.सं - बहूपब्रह्मणसिद्धतां च व्यनक्ति - विष्णुमिति विशेषणमपि सर्वयोग्यत्वं सर्वैरपि प्रपत्तव्यत्वमेव व्यनक्तीति भाव: - सर्वयोग्यत्वं, सर्वशेषित्वकृतम् - अनायासत्वं, स्वरूपतो विभुत्व परिपूर्णत्वभक्तिसुलभत्वै: । हेयप्रतिभटत्वेन संसारनिवर्तकत्वकृतमप्रमादत्वम् - ''प्रमादं वैमृत्युमहं ब्रवीमि'' इति श्रुते: - उक्त विशेषण त्रयेण स्वसमवैधुर्यादुपमानशून्यत्वमनूपमत्वम् - प्रपन्नार्तिहरत्वं सर्वफलप्रदत्वं - त्रयाणाम्, ब्राह्मणादीनामित्यनुक्त्या क्षत्रियादीनामित्यक्त्या च शूद्रस्यापि प्रपन्नत्व सिद्धिरिति भाव: कुयोनिष्वपीति - अविहिते अर्थवादवैयर्थ्यात्कुयोनिरपि शरणवरणं कुर्यादिति विधेरत्रैव सिद्ध्या उक्तार्थसिद्धिरिति भाव: - श्रुत्यवगतस्योपब्रह्मणेन विशदीकरणात् दृढीकृतमित्युक्तम् - उत्तरकाण्डापशूद्रनयविरोधमपि -

मू - ஆகையால் उपासनं त्रैवर्णिकाधिकारமாக अपशूद्राधिकरणத்திலே समर्थितமானாலும் वैदिकங்களான सत्यवचनादिகள் போலே प्रपत्तिயும் सामान्यधर्मமாகையாலே यथाधिकारं वैदिकमन्त्र த்தாலேயாதல், तान्त्रिकमन्त्रादिகளாலேயாதல், सर्वருக்கும் प्रपत्तयनुष्ठानத்துக்கு विरोधமில்லை - काकादिகளும் प्रपन्नராக शास्त्रங்களிலே கேளாநின்றோம் ''मां हि पार्थ व्यपाश्रित्ययेऽपिस्यु: पापयोनय: ।

सा.दी - வரும் नियताधिकारत्वशङ्कैயையும் परिहरिக்கிறார் - ஆகையால் उपासनமென்று - श्रुतिबलात् அவ் अधिकरणं भक्तितमात्रविषयமென்றபடி - இது सर्वाधिकारமென்னுமிடம் आचारத்தாலும் सिद्धமென்கிறார் काकादिகளுமென்று - இவ் अर्थம் भगवतापि समर्थित மென்கிறார்- मां हि पार्थेति -व्यपाश्रित्येत्याश्रयणशब्दं प्रपत्तिसाधारण மாகையாலென்கை - उपासनं त्रैवर्णिकाधिकार -

सा.स्वा- शारीरकापशूद्राधिकरणं सर्वविषयமாக प्रसङ्गिயாதோ? किञ्च वेद विहितयज्ञरूपतया वेदविहित மானபடியாலே ज्योतिष्टोमादिवच्छद्राधिकार மன்றென்னவேண்டாவோ? இது वैदिकமானாலும் सत्यवचनादिवत्सामान्य धर्मமாகையாலே- विरोधமில்லையென்னிலானாலும் प्रणवाधिकरणमन्त्रसाध्य மான प्रपदनं सर्वाधिकारமாகக்கூடுமோ? என்னவருளிச்செய்கிறார் - ஆகையால் इति - ஆகையால், प्रपदनं सर्वाधिकार மென்று सोपब्रह्मण श्रुतिसिद्धமாகையால், तान्त्रिकेति - आदिशब्देन ''मन्त्रैरनुश्रवणमुखेष्वधिगम्यमानै स्स्वाधिक्रिया समुचितैर्यदि वान्यवाक्यै:'' इत्युक्तलौकिकवाक्यसङ्ग्रह: - शारीरकापशूद्राधिकरणமும் भक्तियोगविषयமென்று கருத்து - विशेषनियामक மன்றிக்கே - सत्यवचनादिवत्तिर्यगादि साधारणसामान्यधर्मत्वं சொல்லக்கூடுமோ? என்ன அதுக்கு शास्त्रसिद्धानुष्ठानமே नियामकமென்கிறார். काकादिகளும் इति - एतावत्पर्यन्तं वेद विहितत्वाविशेषण भक्तिवत्प्रपदनமும் न्यायतो विचार्यमाणे त्रैवर्णिकाधिकारமென்று प्राप्तமாக विशेष वचनबलத்தாலே सर्वविषय மென்று समर्थिத்து इत: परं भक्तियोगादि साधारण्येन भगवदाश्रयणं सर्वं सर्वाधिकार மென்று समर्थिக்கிறார் मां हीति - ये पापयोनयोऽपिस्त्र्यादथ: मां हि -

सा.प्र - अधिकृतानां वैदिकमन्त्रेण इतरेषां तान्त्रिकेण चानुष्ठानसंभवान्न सर्वाधिकारत्वविरोध इत्यभिप्रयन्नाह ஆகையால் उपासनमित्यादिना - भयन्यासस्य सर्वाधिकारत्वं श्रुतिस्मृतिभिरुपपाद्याचारेणाप्युपपाद यति - काकादिகளும் इत्यादिना - कपोतादिरादिशब्दार्थ: । एवं विशिष्य सर्वाधिकारत्वस्य भक्ताविवापवादाभावादपि तत्सिद्धिरित्यभिप्रयन्नाह - मां हि पार्थेत्यादिना ।

सा.सं - परिहरति ஆகையால் इति - सोपब्रह्मण श्रुतिबलादेव सर्वाधिकारत्व सिद्धिरित्यर्थ: - इयं यदि भक्तिवदग्नि विद्या साध्या वा? वैदिकमन्त्रकरणकत्वनियमवती वा स्यात्? तदा त्रैवर्णिकाधिकारैव स्यात्? न च तथेत्यतो न तद्विरोधोऽपीति भाव: - प्रपत्तौ तिरश्चामप्यधिकारे शास्त्रदृष्टे शूद्रस्याधिकार: कैमुतिक न्यायसिद्धोऽपीत्याह - काकादीति अनेन तिर्यगधिकरणविरोधोऽप्यत्र नेति फलितम् - अस्यास्सर्वाधिकारता शरण्योक्तिसिद्धापीत्याह - मां हीति - मात्रपदं वैदिकमन्त्रकता.

मू- स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ''என்று भगवदाश्रयण मात्रं साधारणமாக शरण्यன் தானும் அருளிச் செய்தான் उपासनத்(ம்தனக்கும்)துக்கும் प्रारम्धं त्रैवर्णिकशरीरத்திலேயானாலும் अवसानम् - सर्वशरीरத்திலும் கூடுமென்னுமிம் ''धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे संप्राप्तास्संसिद्धिं श्रमणी यथा'' என்று श्रीविष्णुधर्मத்திலே சொல்லப்பட்டது -

सा.दी - மாகையால் आश्रयणமெல்லாம் सर्वाधिकारமெங்ஙனேயென்ன विशेषनियामकबलத்தால் उपासनप्रारब्धं त्रैवर्णिकशरीरेष्वेव என்று नियमத்தால் அங்கு இந்த वचनத்துக்கு सङ्कोचम् - अवसानத்துக்கு सङ्कोचமில்லாமையால் सर्वाधिकारமா மென்கிறார் उपासनத்துக்கு इत्यादि - धर्मव्याधाय इति जुगुप्सितமான वर्णावरत्वத்தில் நின்றார்களேயாகிலும் पूर्वजन्माभ्यासवशத்தால் அஜ் जन्मத்திலே संसिद्धिயை யடைந்தார்கள் - அதில் दृष्टान्तं சொல்லுகிறது श्रमणी यथा என்று श्रमणीயாவாள் सन्यासिनीயான शबरी - அவளெப்படி வேடுவ जन्मத்திலே संसिद्धिயையடைந்தாள் அப்படியேயென்கை प्रपत्तिக்கு -

सा.स्वा- यस्माद्व्यपाश्रित्य स्यु: तेऽपि परां गतिं यान्ति என்றபடி - இங்கு त्रैवर्णिकान्तर्गतस्यापि वैश्यस्य पापयोनित्वकथनं सत्राधिकारापादकार्त्विज्यौद्यनर्हत्वरूपापकर्षात् - क्षत्रियस्य तु ''तस्माद्वाजपेय याज्यात्विजिन'' इति आत्विज्यार्हत्वस्य श्रुतत्वान्नापकर्ष: என்று श्रीमत्तात्पर्य चन्द्रिकैயிலே व्यवस्थापितम्। भगवदाश्रयणमात्रमिति मात्रपदं कात्स्न्यार्थकम् - सर्वं भगवदाश्रयणम् - भक्तियोगादिकमपि என்றபடி - இப்படியாகில் शारीरकापशूद्राधिकरणं निर्विषय மாக प्रसङ्गिயாதோ? அந்த अधिकरणं भक्तियोगारम्भं त्रैवर्णिकनियतमित्येतत्पर மென்னில் இப்படி कल्पिக்கைக்கு निदानமுண்டோ? என்னவருளிச் செய்கிறார் उपासनं தனக்கும் इति - धर्मव्याधादय इति - धर्मव्याधादय: जुगुप्सिते वर्णावरत्वे स्थिता अपि पूर्वजन्मारब्ध भक्तियोगाभ्यासवशाच्छ्रमणीव परमां संसिद्धिं भक्तियोगपूर्तिं संप्राप्ता: என்கை - उपासनத்தில் போலே प्रपदनத்திலும் प्रारम्भनियमமுண்டோ? என்ன இல்லை யென்று उपसंहरिக்கிறார்.

सा.प्र- अग्निविद्यासापेक्षस्योपासनप्रारम्भस्य त्रैवर्णिकाधिकारत्वेऽपि तन्निरपेक्षभक्त्यवसानस्य शूद्रादिष्वपि संभवदग्नि विद्यानिरपेक्षत्वादेव भरन्यासस्य सर्वाधिकारत्वं सुस्थमित्यभिप्रयन्नाह-उपासनं தனக்கும் इत्यादिना - नन्वेवं सर्वाधिकारत्वे भक्त्याद्यनुष्ठान शक्तानां भरन्यास स्वरूपमजानतां चास्मिन्नधिकारस्स्यादिति भक्त्या विधिवैयर्थ्यं स्यादिति न सर्वाधिकारत्वमित्यत्राकिञ्चन्यस्य विशिष्टस्त्रीशूद्रादि स्सर्वेऽप्यधिकारीति प्रपत्तियोग्याधिकारोक्तं स्मारयन् त्रैवर्णिकत्व-

सा.वि - धर्मव्याधादय इति । जुगुप्सिते वर्णावरत्वे सत्यपि पूर्वाभ्यासात्पूर्वजन्मकृतयोगाभ्यासवशात्संसिद्धिं प्राप्ता: श्रमणी यथा शबरी वेति योजना । -

सा.सं - मस्या: न्यासविद्योपदेष्टृतां च शूद्रादेर्व्यवच्छिनत्ति - उपासनस्य त्रैवर्णिकाधिकारत्व नियमोऽप्यारम्भमात्र एवेत्याह - उपासनத்துக்கும் - इति - पूर्वेति - पूर्वशरीरे भगवदनुभवज संस्कारे-

मू - இப்படி उपासनं त्रैवर्णिकர்க்கே आरम्भणीयமானாற்போலே प्रपत्तिயிலொரு नियामकத்தாலே सामान्यवचनத்துக்கு सङ्कोचமில்லாமையாலும் विशेषवचनबलத்தாலும் प्रपदनं सर्वர்க்கும் योग्यम् - ஆனபின்பு இது தனக்கு विशेषिத்து வேண்டும் अधिकारार्शं முன்பே சொன்னோம் अतस्त्रैवर्णिकत्वादे र्भावोऽ भावोऽपि कस्यचित् । नाधिकारः प्रपत्तेस्स्यादाकिञ्चन्यमनाश्रितः ।

सा.दी- प्रारम्भத்திலும் सङ्कोचமில்லையென்கிறார் - இப்படி उपासनமென்று துடங்கி - இதுக்கு विशेषिத்து வேண்டும் अधिकारமெது? என்னவருளிச்செய்கிறார் - இதுதனக்கு इत्यादि - आकिञ्चन्यமே இதுக்கு अधिकारं வேறில்லையென்கிறார் - अतः என்று कारिकैயால், अतः, இப்படி निर्णीतமாகையால் - त्रैवर्णिकत्वादेः कस्यचित् - आदिशब्देनाश्रमादिग्रहणम् - भावः, सद्भावः - अभावः, तद्राहित्यं च - आकिञ्चन्यमनाश्रितः । இப்பதம் हेतुगर्भम् - आकिञ्चन्यानु पयुक्तत्वात् என்கை - प्रपत्तिக்கு - अधिकारं அன்று - विलम्बाक्षमत्वादिயும் आकिञ्चन्यमाश्रित्य तत्संपादकत्वेन अधिकारकोटिயில் -

सा.स्वा-இப்படி इति । இப்படி प्रपदनं सर्वाधिकारமென்று சொன்னது கூடுமோ? भक्तियोगसमर्थனுக்கும் प्रयोजनान्तरपरனுக்கும் आधिकारं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார், ஆனபின்பு इति । முன்பே इति - प्रपत्तियोग्याधिकारத்திலேயென்றபடி - प्रपत्तियोग्याधिकारத்தில் - भक्तियोगानधिकारं प्रपत्त्यधिकारமென்று निष्कृष्टமாகையாலே त्रैवर्णिकत्वं भक्त्यधिकारமாகையால் तदभावं प्रपत्यधिकारமென்று फलिக்கையாலே त्रैवर्णिकருக்கு प्रपत्त्यनधिकारं प्रसङ्गिயாதோ? இனி आकिञ्चन्ये सति त्रैवर्णिकत्वं प्रपत्त्यधिकार மென்னில் शूद्राद्यधिकारं சொல்லுகிறது विरोधिயாதோ? என்ன कारिकैயாலே प्रपत्तियोग्याधिकार तात्पर्यार्थத்தை संग्रहिக்கிறார் - अत इति - अतः पूर्वोक्त प्रकारेण सर्वाधिकारत्वसिद्धेः - त्रैवर्णिकत्वादेः - आदि पदेनाश्रमादि परिग्रहःकस्यचित्पुंसः - त्रैवणिकत्वादेर्भावः, सद्भावः - अभावः, असद्भावश्च । आकिञ्चन्यमनाश्रितश्चेत्प्रपत्तेर्नाधिकारस्स्यात् - आकिञ्चन्यसद्भावेतु त्रैवर्णिकत्वमत्रैवर्णिकत्वमुभय-

सा.प्र - तदभावयोर्भरन्यासानुष्टाने अप्रयोजकत्वमाह - இப்படி उपासन मित्यादिना-

सा.वि- प्रपदनं सर्वருக்கும் योग्यமானபின்பு, प्रपदने सर्वेषामपि योग्ये स्थिते सति, - இதுதனக்கு, अस्य प्रपदनस्य - முன்பே சொன்னோம், प्रपत्तियोग्याधिकार इति भावः - अत्रापि निष्कृष्य दर्शयति - अत इति - अतः, सर्वाधिकारत्वेन निर्णीतत्वात् - त्रैवर्णिकत्वादेः कस्यचिद्धर्मस्य - आदिशब्देन आश्रमपुंस्त्वादिग्रहणम् - भावः, सद्भावः - अभावः, व्यतिरेकोऽपि - आकिञ्चन्यमनाश्रितः, आकिञ्चन्यापर्यवसितः - तदनुपयुक्तत्वादिति भावः - विलंबाक्षमत्वादिकंत्वाकिञ्चन्यसंपादकत्वादधिकार कोटिप्रविष्टम् - प्रपत्तेरधिकारो न स्यात्,

सा.सं- अप्रमोषादित्यर्थः - प्रपत्तौ चैवं किं न स्यादित्यत्र वैषम्यमाह - இப்படி इति । एवं सति सकिञ्चस्यान्यगतेश्च स्वतन्त्र प्रपत्त्याधिकारस्स्यदित्यति प्रसङ्गं वारयति இது தனக்கு - इति इत्थं कृतमधिकारविषय क्षोभोप शमनं सङ्गृह्णाति - अत इति - उक्तार्थे श्रुतिस्मृत्युपपत्ति सद्भावा दित्यर्थः - पुंस्त्वादिकमादि शब्दविवक्षितम् - कस्यचित्प्रपित्सो । ''आकिञ्चन्यमनाश्रितः आकिञ्चन्ये -

मू - இவ்அர்थத்தை "குலங்களாயவீரிரண்டிலொன்றிலும்பிறந்திலேன் " என்கிற பாட்டிலும் -"जनित्वाहं वंशे" என்கிற श्लोकத்திலும் கண்டு கொள்வது -

सा.दी- प्रवेशिக்கும் वर्णादिகளப்படி யென்று - இவ் अर्थத்தில் திருமழிசையாழ்வார் दिव्यसूक्तिயையும், ஆளவந்தார் दिव्यसूक्तिயையும் उदाहरिக்கிறார் - இவ் अर्थத்தையென்று துடங்கி जनित्वाहं என்று தமக்குண்டான कुलादिகளும் अधोगतिनिवर्तकமாயிற்றில்லை யென்று கொண்டு शरणद என்கையால் शरणागतिயின் सर्वाधिकारत्वं सूचितम् - साधित्त अर्थத்தை निगमिக்கிறார் -

सा.स्वा - मव्यधिकारமென்று கருத்து. இவ் अर्थத்தில் संप्रदायமும் प्रमाणமென்று அருளிச் செய்கிறார் - இவ் अर्थத்தை इति । குலங்களாய इति । குலங்களாயவீரிரண்டில், நான்கு குலங்களிலும் - ब्राह्मणादि நான்கு குலங்களிலும். பிறந்திலேன், जनिத்தேனல்லேனென்றபடி. जनित्वाहमिति - இந்த श्लोकத்தில் महाकुल प्रसूतत्वமும் अधोगतिनिवर्तक மன்றென்று தோற்றுகையாலும், शरणद என்று शरणवरणधिकारं தோற்றுகையாலுமென்றபடி. இப்படி प्रपत्तिக்கு आकिञ्चन्यमधिकारமாகில் उपायान्तरसमर्थருக்கு आधिकारமில்லை யென்று फलिக்கையால்

सा.प्र - स्वोक्तार्थस्य सांप्रदायिकत्वमाह । இவ் अर्थத்தை इत्यादिना - குலங்களாய इत्यादि - तत्तद्धर्मानुष्ठानयोग्यब्राह्मण, क्षत्रिय, वैश्य, शूदात्मककुलद्वयद्विके कस्मिंश्चिदपि न जात इत्येतदर्थ प्रापकगाधायामित्यर्थ: - अस्यां गाधायामस्मिन् श्लोके च सत्कुल प्रसूतत्वतदभावयोरकिञ्चित्करत्वोक्तेः उपायान्तरा शक्तिरेवाधिकार: - एवं च सर्वजातीयेष्वप्यर्थित्व सामर्थ्यवतामकिञ्चनानां भरन्यासे अधिकार इति वदन्नधिकारि विषयव्यामोहनिवर्तनं -

सा.वि - न भवति - त्रैवर्णिकत्वमेवाधिकारश्चेच्छूद्रस्याधिकारो न स्यात्तदभावोधिकार श्चेद्ब्राह्मणादेरधिकारो न स्यादिति सर्वाधिकारत्वं न स्यात्तदुभयमप्रयोजकम् - आकिञ्चन्यमेव सर्वत्राधिकार: - "भक्त्यादौ शक्त्यभाव:" इत्युक्तं सर्वमाकिञ्चन्यार्थमिति भाव: - उक्तार्थस्य सांप्रदायिकत्वं दर्शयितुं भक्तिसारदिव्यसूक्तिं यामुनाचार्यश्रीसूक्तिंचाह - குலங்களாய इति - குலங்களாய வீரிரண்டிலும், कुलेषु चतुर्षु - ஈரிரண்டிலும், द्विकद्वये इति पदार्थ: - वर्णचतुष्टये अहं न जात: - अतस्तद्वर्णधर्मानुष्ठानयोग्यो नास्मीत्याकिञ्चन्यं व्यञ्चितम् यद्यपि भार्गवमुनि स्स्वर्वेश्यायामुत्पन्न इति प्रसिद्धि: - तथापि मेधजातिपुरुषेण स्वीकृतत्वेन मुख्यवर्ण: कश्चिदपि नास्तीति हृदयम् - तथा "जनित्वाहं वंशे" इत्यत्र महाकुल,प्रसूतत्वेऽपि तमसि निमज्ञामीत्युक्त्या महाकुल प्रसूतत्वमप्यप्रयोजकमित्याविष्कृतम् - "अथोध: पापात्मा "इत्युक्तिभङ्ग्या आकिञ्चन्यमेव व्यञ्जितम् - एवमधिकार विषयशङ्का परिहृत्य प्रपत्तिस्वरूपविषय-

सा.सं - अपर्यवसित: - भाव:, ब्राह्मणादेस्त्रैवर्णिकत्वसद्भावो वा? अभावो वा? शूद्रस्य तदभावो वा? अधिकारो न । किं त्वाकिञ्चन्यमेव अधिकार इति भाव: - आकिञ्चन्य पदमनयगतित्वस्याप्युपलक्षणम् - இவ் अर्थத்தை, उक्तभावाभावयो: प्रपत्त्यनधिकारत्वम् - குலங்களாய इत्यत्र त्रैवर्णिकवाद्यभावेऽपि स्वस्य भगवदङ्गीकार हेतुरुक्त: - जनित्वेत्यनेन तत्सत्वेऽपि तदभाव उच्यते -

मू - ஆகையால் शरण्यशरणागतिज्ञानமும், आकिञ्चन्यादिகளுமுடைய सर्वजातीयர்க்கும் प्रपत्त्यधिकारं सिद्धम् - இவ்உபாய स्वरूपத்தைப்பற்ற "नारायणं सलक्षमीकं प्राप्तुं तच्चरणद्वयम् । उपाय इति विश्वासो द्वयार्थश्शरणागति:" என்ற अभियुक्तர் பாசுரமும், अधिकारकोटिயிலும்,

सा.दी- ஆகையால் इत्यादिயால் - இப்படி अधिकारविषयशङ्कैகளைப் परिहरित्து இனி - प्रपत्तिस्वरूपविषयशङ्कैகளை परिहरिக்க उपक्रमिக்கிறார் - இவ் उपायस्वरूपத்தைப்பற்ற என்று - இதுக்கு अभियुक्तர் பாசுரமென்கிறத்தோடு अन्वयम् - यद्वा, வரும் शङ्कैகளைப் परिहरिக்கிறோம் என்றது शेषम् - नारायणमिति - सलक्ष्मीकं नारायणं प्राप्तुं सलक्ष्मीकनारायणचरणाद्वयमेव उपाय इति यो विश्वास:स द्वयार्थ इति श्लोकार्थ: இதுக்கு उत्तरத்தைக் காட்டுகிறார் अभियुक्तர் इत्यादिயால் प्रपत्तिर्विश्वास: என்னுமதும்-

सा.स्वा- सर्वाधिकारत्वं சொன்னது சேருமோ? என்கிற शङ्कैயைப் परिहरित्துக்கொண்டு उपसंहरिக்கிறார் - ஆகையால் इति - ஆகையால், त्रैवर्णिकत्वादिकमनधिकार மாகையால். सर्वाधिकारत्ववचनम् आकिञ्चन्यादि विशिष्टसर्वजातीयाधिकारपरமென்று கருத்து - प्रपत्त्यधिकारस्वरूपத்தை शोधिத்து प्रपत्तिरूपाङ्गिயில் பிறக்கும் पूर्वोक्तशङ्कैகளைப் परिहरिக்கிறார் - இவ் उपायத்தைப்பற்ற इति - இதுக்கு अभियुक्तர் பாசுரம் என்கிறத்தோடு अन्वयம் - अधिकारकोटिயிலு மென்றது विश्वासवाனே अधिकारिயாகையாலே -

सा.प्र - निगमयति - ஆகையால் इत्यादिना - अनाधिकारि कृति साध्योपायस्वरूपविषय व्यामोहं निवर्तयन् अङ्गेऽङ्गित्वव्यपदेशप्रयोजनमप्याह - இவ் उपायस्वरूपத்தை इत्यादिना - तच्चरणद्वय मुपाय इति कन्येयं कुलभूषणमितिवत् - अधिकारकाटिயிலும் इति प्रपत्त्यनुष्ठानकालात्पूर्वभाविविश्वासस्याधि कारत्वमिति भाव: - विश्वासे प्रपत्तित्वबुद्धि: कथं व्यामोह -

सा.वि- शङ्का: परिहर्तुमारभते । இவ் उपायस्वरूपத்தைப்பற்ற इति एतदुपायस्वरूपं प्रति - शङ्कैயைப் परिहरिக்கிறோம் इति शेषपूरणेनान्वय: । यद्वा, एतदुपायस्वरूपं प्रति - अभियुक्तர் பாசுரம் इति संबन्ध: । ननु उपाय इति विश्वासो द्वयार्थश्शरणागतिरिति कैश्चिदुक्तं "प्रपत्तिर्विश्वास स्सकृत्प्रार्थनामात्रेणापेक्षितं दास्यतीति महाविश्वासपूर्वकं प्रार्थनमिति यावत्" इति रामानुजाचार्यै: कदाचित्प्रपत्तिस्वरूपं कीदृशमिति शिष्यै: पृष्टे सत्युक्तं मुक्तकं वाक्यम् - "न्यास: पञ्चाङ्गसंयुत: इत्यादि वचनेष्वात्मनिक्षेणोऽङ्गी इतराण्यङ्गानीत्युक्तम्- एतेषां परस्पर विरोध इत्याशङ्क्य विश्वासप्रार्थनयोरङ्ग्योरेव प्राधान्यविवक्षयाङ्गित्ववाद: । आत्मनिक्षेप एवाङ्गीति वचनबाहुल्यात् । भूयसां न्यायादिति सिद्धान्तयति। नारायणं सलक्ष्मीकमित्यादिना । अधिकारकोटिயிலும் इति । प्रपत्त्यनुष्ठानात्पूर्वभाविविश्वास स्याधिकारकोटिप्रवेश इति भाव:।

सा.सं - अधिकारानुबन्धि व्यामोह परिहारमुपसंहरति - अथाङ्गि स्वरूप व्यामोहशमनायारभ्यते । இவ் उपायेत्यादिना - प्रप्तुमित्यन्तेन उत्तरखण्डार्थ उक्त: । विश्वास इत्यन्तेन पूर्वखण्डार्थ उक्त: - एवं विश्वासात्मकबुद्धिविशेषस्यैव गतिवाचिधातुना प्रतीतेस्स एवाङ्गीति भाव: - एतत्परिहरति - अधिकारेति - शास्त्रार्थानुष्ठाने तद्विश्वासवानधिकारी-

मू - अङ्गकोटियிலும், நிற்கிற விश्वासத்தினுடைய प्राधान्यंசொல்லுகைக்காகவத்தனை - அப்படியே ''प्रपत्तिर्विश्वासस्सकृत्प्रार्थनामात्रेणापेक्षितं दास्यतीति विश्वासपूर्वकं प्रार्थनमिति यावत्'' என்கிற वाक्यமும் प्राधान्य विवक्षैயாலே முதல் विश्वासத்தைச் சொல்லி ''अनन्यसाध्ये'' என்கிற भरतमुनिप्रणीतलक्षणवाक्यத்தின்படியே विश्वासपूर्वकं प्रार्थन மென்று निष्कर्षिத்தது.

---

सा.दी- प्राधान्यद्योतनार्थமென்கிறத்தை वचनान्तरத்தாலே उपोद्बलिக்கிறார். அப்படியே इत्यादि । निक्षेपமே प्रपत्तिயென்று सिद्धान्तமாகையாலிந்த वाक्यं தானும் प्रार्थनारूपाङ्गத்தினுடைய प्राशस्त्य-

---

सा.स्व- இந்த இரண்டு विशेषणமும் प्राधान्योपपादकமென்று கருத்து இப்படி अभियुक्तர் பாசுரத்துக்கு अन्यथाकरणं கூடுமோ? ''प्रपत्तिर्विश्वासः'' என்று श्रीभाष्यकारवाक्यानुगुणமாக विश्वासமே प्रपदन மென்று சொல்லவேண்டாவோ? என்னவருளிச் செய்கிறார் அப்படியே इति - श्रीभाष्यकारரும் - प्रथमं विश्वासத்தை प्रपदनமென்று निष्कर्षिத்துப் பின்பு ''प्रार्थनमिति यावत्'' என்று विश्वासத் தைவிட்டு प्रार्थनத்தையே प्रपदनமென்று - निष्कर्षिக்கையாலே विश्वासे प्रपत्त्यभेदोक्ति अन्यपरैஎன்று கருத்து - ஆகில் श्रीभाष्यकारர்தான் प्रधानமான विश्वासத்தை விட்டு प्रार्थनத்தை प्रपदनமென்று निष्कर्षिக்கக் கூடுமோ?

---

सा.प्र - इत्यत्र भाष्यकारैर्विश्वासपूर्वकं प्रार्थनमिति प्रार्थनायाः प्राधान्यव्यपदेशेन विश्वासस्याङ्गत्वसिद्धेरित्याह । அப்படியே प्रपत्तिरित्यादिना - इदं वाक्यं भरन्यासविषयप्रश्नोत्तरत्वेन भाष्यकारैः कदाचिदुक्तं मुक्तकं वाक्यमिति संप्रदायः - विश्वासोऽङ्गान्तराणामङ्गिनश्चा विलम्बेनानुष्ठापकत्वात्प्रधानाङ्गमिति भावः - नन्वेवं दर्शन प्रवर्तकै रामानुजाचार्यै र्गप्तृत्ववरणस्य प्रधान्यव्यपदेशात् ''तदेको पायता याच्ना प्रपत्तिः'' इति भरतमुनिनोक्तत्वाच्चतदेवाङ्गीत्यत्र भरन्यासस्य वचनतोऽङ्गित्वावगमाद्गोप्तृत्ववरणे प्रपत्तिरिति -

---

सा.वि - विश्वासस्य प्रशास्त्यमनेनात्र प्रतिपादितम् - अभियुक्तர் பாசுரம் प्राधान्यं சொல்லுகைக்காக வத்தனை, प्राधान्याभिधानार्थमेव - இப்படி, एतत्प्रकारेण - என்கிற वाक्यமும் அப்படியே इत्यन्वयः - प्रधान्यविवक्षयैवेत्यर्थः - तेदवोपपादयति । प्राधान्यविवक्षैயாலே - முதல் विश्वासத்தைச் சொல்லி, प्रपत्तिर्विश्वास इति विश्वासप्राधान्य विवक्षया प्रथमं विश्वासमुक्त्वा अनन्यसाध्य इति ''अनन्यसाध्ये स्वाभीष्टे महाविश्वास पूर्वकम् । तदेकोपायता याच्ना प्रपत्तिश्शरणागतिः ''इति भरतमुनिप्रणीत लक्षणवाक्यानुसारेण महाविश्वासपूर्वकप्रार्थनமென்று निष्कर्षिத்தது, इति निष्कृष्टम् - एतन्निष्कर्षवाक्यमपि प्रार्थनाप्राधान्य विवक्षयैव -

---

सा.सं - प्रपत्तिरूप शास्त्रार्थस्तु महाविश्वासाङ्गक इत्युभयत्रानुप्रविष्टो विश्वासः - न तथाङ्गान्तरमितीदृक्प्राधान्याभिप्रायेणायं निर्देशः - अन्यथा बहुप्रमाणसंप्रदायविरोध इति भावः - अन्यथा श्रुतार्थपरत्वे अभियुक्तनिष्कर्षविरोधमाह - அப்படியே इति - यथा नारायणमित्यत्र विश्वासस्य शरणागतित्वकथनं प्राधान्य विवक्षया तथा प्रार्थनस्य प्रपत्तित्वकथनमपीति भावः - यथाभियुक्तनिष्कर्षमेव वा प्रार्थनैवाङ्गीति किं न स्यादित्यत्राह -

मू - இவ் वाक्यंதானும் आत्मनिक्षेपमङ्गि - इतरங்கள் अङ्गங்களென்று சொல்லுகிற "न्यासः पञ्चाङ्गसंयुत" इत्यादि वचनங்களாலே प्रार्थनैயும் अङ्गமாகையால் "रक्ष्यापेक्षां प्रतीक्षते" என்கிறபடியே-

सा.दी- परமென்கிறார் - இவ் वाक्यंதானுமென்று रक्ष्यस्य, चेतनस्य - अपेक्षां, प्रार्थनाम् - अपेक्षते என்கை-

सा.स्वा- साङ्गप्रपदनाधिकारத்தில் - निर्णयं विरोधिயாதோ? என்னவருளிச்செய்கிறார் - இவ் वाक्यந்தானும் इति - இவ் वाक्यந்தானும், श्रीभाष्य कारवाक्यந்தானுமென்றபடி - "अनन्यसाध्ये" என்கிற वचनத்தில் अभेदनिर्देशमन्यथासिद्ध्यर्ह மாகையாலும், "न्यासः पञ्चाङ्गसंयुतः" என்கிற वचनमन्यथासिद्ध्यनर्ह மாகையாலும், "न्यासे अङ्गित्वग्राहक स्फाटतरप्रमाणानुसारத்தாலே "अनन्यसाध्ये" என்கிற लक्षणवाक्यத்திலும் श्रीभाष्यकारवाक्यத்திலும் प्रार्थनायां प्रपत्तिनिर्देशं अङ्गप्रधान्यद्योतनार्थतया औपचारिकமென்று கருத்து - இப்படி निक्षेपமே अङ्गिயாகில் द्वयविवरणமான -

सा.प्र- व्यपदेशोऽपि प्रधानाङ्गत्वविवक्षयैवेत्याह - இவ் वाक्यந்தானும் इत्यादिना - अनन्यसाध्य इत्यस्य व्याख्यानरूपं भाष्यकारवाक्यमपीत्यर्थः सिद्धोपायस्य परमकारुणिकत्वबोधकत्वाद्गोप्तृत्ववरणं प्रधानाङ्गमिति भावः - ननु मित गद्येऽ "प्येवमवस्थितस्याप्यर्थित्वमात्रेण" -

सा.वि - नतु तयाः प्रपत्तित्वविवक्षयेत्याह - இவ் वाक्यந்தானும் इति - இவ் वाक्यं தானும், एतद्वाक्यमपि - प्रार्थनैயும் अङ्गமாகையாலே, प्रार्थनाया अप्यङ्गत्वात् - प्राधान्यத்தை विवक्षित्துச் சொன்னபடி इत्यन्वयः - ननूपायत्वप्रार्थनाया अङ्गि शरीरान्तः पातित्वं परिकर विभागाधिकारे अभिप्रेतम् - तत्र "अहमस्म्यपराधानामित्यारभ्य उपायत्वाध्यवसायं இவ்விடத்திலே विवक्षितமாயிற்று, इत्युक्तम् - तेन उपायत्वाध्यवसायस्य आवश्यकत्वमुक्त्वा चेतनाचेतनसाधारणफलसाधनत्वरूपोपायत्वा काराद्रक्षणोपयुक्तयत्नवत्वरूपरक्षकत्वस्य भक्त्याद्यधिकारि साधारणस्य भिन्नतयोपायवरणादतिरिक्तं गोप्तृत्ववरणमपि फलत्वपुरुषार्थत्वसिद्धये विवक्षितम् - तच्चार्थम् । उपायवरणं शब्दम्" इत्युक्तम् - तत्र गोप्तृत्ववरणस्य "रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा" इत्यङ्गमध्ये परिगणनं कृतम् - उपाय वरणस्याङ्गत्वं नोक्तम् -

सा.सं - இவ் वाक्यमिति - प्रार्थनमितियावदित्यन्त वाक्यंதானும் इत्यर्थः - अत्र भरतमुनि प्रणीतलक्षणवाक्यத்தின் படியே इत्युक्त्या प्रार्थनमुपायत्व प्रार्थनं भवति - न्यासः पञ्चाङ्गसंयुतः इति वचनोदाहरणादङ्गமாகையாலே इत्युक्त्या च गोप्तृत्ववरणमपि भवति - சிறிய गद्यத்திலும் इति वाक्ये प्रार्थनैயைப் பண்ணி इत्युक्त्या तत्र नित्यकिङ्करतां प्रार्थये" इति स्थितेः फलप्रार्थनमपि भवतीति प्रसक्तम् - तत्रोत्तर खण्डार्थफल प्रार्थनस्य अङ्गाङ्गि समुदायरूपोपायकोट्यनन्वयादभियुक्तनिष्कर्षो न तमादाय विश्राम्यतीति என்கிற वाक्यमित्यादि विवक्षित்துச் சொன்னபடி इत्यन्तं देशिकोक्तिर्न तत्परा - गोप्तृत्ववरणमादाय स निष्कर्षो यदि विश्राम्यति - तर्हि तस्यनाङ्गित्वम् - "न्यासः पञ्चाङ्गसंयुतः" इत्यङ्गत्वेनैव तन्निर्देशात्तद्रूपाङ्गप्राधान्यविवक्षैव स भवेत् - यद्युपायत्वप्रार्थनामादाय तदा सा गोप्तृत्ववरणगर्भा सति -

मू- ईश्वरन் - अपेक्षामात्र - सापेक्षனென்றிவ் अङ्गத்தின் प्राधान्यத்தை विवक्षिத்துச் சொன்னபடி

सा.दी - ननु சிறுगद्यத்தில் ''विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये'' என்று प्रार्थनैயைப் பண்ணி आत्मनिक्षेपंபண்ணினவிடம் காணாமையால் प्रार्थनामात्रமே प्रपत्तिயாக வேண்டாவோ? என்ன அங்குச் முடிவில் ''नमोऽस्तुते'' என்று आत्मनिक्षेपवाचिशब्दप्रयोगமுண்டாகையாலும் கீழே ''तव चरणारविन्दयुगलं शरणमहं प्रपद्ये'' என்று उपायवरणशब्द सामर्थ्यத்தாலும் निक्षेपं सिद्ध-

सा.स्वा- சிறு गद्यத்தில் निक्षेपத்தைச் சொல்லாமல் ''विश्वासपूर्वकं प्रार्थनमिति यावत्'' என்கிற मुक्तकवाक्यं போலே தானே ''विश्वास पूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये'' என்று श्रीभाष्यकारர்-

सा.प्र- त्यारभ्य ''नित्यदास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये'' इत्यङ्गी तया प्रार्थनाया एव व्यपदेशान्निक्षेपस्याङ्गित्वव्यपदेशस्तद्विरुद्ध इत्यत्र ''तत्रैव अनागतानन्तकाल समीक्षयाप्यदृष्टसन्तारोपायो निखिलजन्तुजातशरण्यं श्रीमन्नारायणचरणारविन्दायुगलं शरणमहं प्रपद्ये'' इति पूर्वमुक्त्वान्ते च ''नमोऽस्तुते'' इत्युक्तत्वात् श्रीवैकुण्ठगद्ये च -

सा.वि - स चानुक्तत्वेऽपि तस्याप्यङ्गत्वमस्तीति वाच्यम् - न्यासः पञ्चाङ्ग संयुतः इत्युक्ताङ्गपञ्चकाधिक्यापत्तेः तत्कथमत्राङ्गत्वमुक्त मिति चेत्सत्यम् - उपायत्व प्रार्थनैव गोप्तृत्ववरणं न पृथग्यथाचैत्त तथा साधितमधस्तात् - अत एव सारप्रकाशिकायामुपायत्वप्रार्थनमिति गोप्तृत्ववरणमुच्यते - गोप्तृत्ववरणव्यतिरेकेणोपायत्वप्रार्थनाया अनिरूपणात्पूर्वत्र ''இவ் अङ्गத்தின் प्राधान्यத்தை विवक्षिத்துச்சொன்னபடி ''इति वाक्ये ''तदेकोपायता याच्ना प्रपत्तिरित्यनेन गोप्तत्ववरणस्य प्राधान्यमित्युक्ततत्वात् ''इत्युक्तम् - यद्वा இவ் वाक्यं தானும் इति रामानुजाचार्योक्तमुक्ततकवाक्यपरम् - नतु भरतमुनिप्रणीतलक्षणवाक्य परम् - पूर्वं प्रार्थनै யென்று निष्कर्षिத்தது इत्युक्तत्वात् । तत्र गोप्तृत्व वरणप्राधान्यतात्पर्यस्य पूर्वमप्रतिपादितत्वेन प्रतिपादनीयत्वात् - प्रधान्य विवक्षैயாலே इत्यस्य विश्वासप्राधान्यप्रतिपादन तात्पर्यकत्वात् - अत एव विश्वासத்தைச் சொல்லி इत्युक्तम् - एवं च प्रार्थनमिह गोप्तृत्ववरणमेव विवाक्षितम् - नोपायत्वप्रार्थनं अतो न विरोधः - नचैवं सति भरतमुनिप्रणीतलक्षणवाक्यத்தின்-

सा.सं - तद्वरणेनैकीभावमापन्ना अङ्गकोट्यन्वितेति यदि पक्षः तत्पक्षे ''न्यासः पञ्चाङ्गसंयुतः'' इति वचनोदाहरणम् - अङ्ग மாகையால் इत्युक्तिः இவ் अङ्गத்தின் प्राधान्यத்தை इत्युक्तिश्चोपपन्नतरा - यदि गोप्तृत्व वरणा गर्भतया प्रार्थना अङ्गिकोट्यन्वितैवेति पक्षस्तत्पक्षे ''न्यासः पञ्चाङ्गसंयुतः'' इति वचनेन न्यासे प्रधानाङ्गितया स्थिते तत्प्रार्थनाया एव प्रधानाङ्गि त्वमित्यभियुक्तान निष्कर्षं कुर्वन्तीति उपायत्व प्रार्थनाया अङ्गिकोटौ गुणाभावे नान्वितत्वमभिप्रेत्यगुणभूतेप्यङ्ग शब्दस्य प्रयोक्तु मुचितत्वात् अङ्गமாகையால் இவ் अङ्गத்தின் - इत्युक्तिरुपपन्नतया - एवं च प्रार्थनाय एव प्रधानाङ्गित्वापनुपत्तये गोप्तृत्ववरणे अङ्गित्व संभावनाया अपत्तये च प्रार्थनापदेन द्वयोरप्यभिधानयोग्यत्वात्प्रार्थनां वरणं च तेन पदेन -

मू - சிறிய गद्यத்திலும் विश्वासपूर्वक प्रार्थनैயைப் பண்ணி ''नमोऽस्तुते'' என்று முடிக்கையாலும் उपायवरणशब्द सामर्थ्यத்தாலும் निक्षेपமும் सिद्धम् -

मा.दी - மென்கிறார் - சிறு गद्यத்திலும் इत्यादिயால் नमश्शब्दத்துக்கு आत्म निक्षेपपरत्व மெங்ஙனே கண்டதென்ன -

सा.स्वा - प्रार्थनामात्रத்தை निर्देशिத்தது கூடுமோ? என்னவருளிச் செய்கிறார் - சிறிய गद्यத்திலும் इति - उपायवरणेति - भरस्वीकारापर पर्यायोपायत्व प्रार्थनापरமான ''तव चरणारविन्दयुगालं शरणमहं प्रपद्ये'' इति वाक्यागत शरणशब्दसामर्थ्यத்தாலுமென்றபடி - ''नमोऽस्तुते'' என்கிற शब्द -

सा.प्र- ''श्रीमता मूलमन्त्रेण मामैकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्वेति याचमानः प्रणम्यात्मानं भगवते निवेदयेत्'' इत्युक्तत्वाच्च । मितगद्येऽप्यात्मनिक्षेप एवाङ्ग्यभिप्रेत इति न तद्विरोध इति दर्शयन्नम इत्यस्य निक्षेपपरत्वं सप्रमाणमाह - சிறு गद्यத்திலும் इत्यादिना - सामर्थ्यத்தாலும் - इति । ''उपायार्थैक वाचक'' इत्युक्ते श्शरणशब्दस्यो पायवाचकत्वात् - तथा च तत्तत्फलसाधनयागदानाद्याराधनेन सर्वफल प्रदतया भगवतस्सर्वाधिकारिणामप्युपायत्वेऽप्यकिञ्चनविषये विशिष्योपायत्वस्य तत्तत्साधनाननुष्ठानेऽपि तत्तत्फलप्रदत्वरूपस्याकिञ्चन -

सा.वि- படியே इति दृष्टान्त दार्ष्टान्तिकविरोधस्स्यादिति वाच्यं तत्र महाविश्वास पूर्वकमिति विश्वास प्राधान्यद्योतनाय विश्वासं पूर्वमुक्त्वा तदेकोपायता याच्ना प्रपत्तिरिति यथोक्तं तथैवात्रापि विश्वासपूर्वकं प्रार्थनमिति विश्वासस्य प्रथमकीर्तनं प्राधान्यद्योतनार्थमेवेत्यंशे दृष्टान्तत्वे विरोधाथावात् - ननु श्रीरङ्ग राजगद्ये ''नित्यदास्यं दास्यतीति महाविश्वासपूर्वकं नित्यकिङ्करतां प्रार्थये'' इति श्रीभाष्यकारैः स्वानुष्ठानस्य निबद्धत्वात्तेषां प्रार्थनैव प्रपत्तिरित्यत्र तात्पर्य मित्यत आह - சிறிய गद्यத்திலும் इति - उपायवरणशब्दसामर्थ्यத்தாலும் इति ''तत्रैवानन्तकाल समीक्षयाऽप्यदृष्टसन्तारोपायो निखिलजन्तुजातशरण्यं श्रीमन्नारायण चरणारविन्दयुगलं शरणमहं प्रपद्ये'' इत्युक्तत्वात्तत्र शरणं प्रपद्ये इत्यस्य उपायत्वेनाध्यवस्यामीत्यर्थकत्वादुपायत्वाध्यवसायस्य यागदानादिफलप्रदातृत्वसाधारणरक्षकत्व

सा.सं- निर्दिश्य अभियुक्तनिष्कर्षान्यिथासिद्धिर्देशिकवरेणोपपादितेति देशिका शयविद्भिर्विद्वद्भिर्विभावनीयम् - ननु मितगद्ये एवमवस्थितस्यापीत्यादिना विश्वासपूर्वकप्रार्थना मात्राभिधानान्ननिक्षेपस्याङ्गित्वं स्यादित्यत्राह । சிறிய गद्यத்திலும் इति -प्रार्थनैயை, नित्यकिङ्करताप्रार्थनामित्यर्थः । उपायवरण शब्द सामर्थ्यத்தாலும் इति । मितगद्य एव ''निखिलजन्तुजात शरण्य श्रीमन्नारायण तव चरणरविन्दयुगलं शरणमहं प्रपद्ये'' इत्यत्र उपाय वरणपरस्य शरणं प्रपद्ये इति शब्दस्य सामर्थ्यादित्यर्थः - अयं भावः । शरणशब्दोपश्लिष्ट गतिवाचि धात्वर्थ उपायत्वाध्यवसायः - ''अनन्यसाध्ये - त्वमेवोपायभूतो मे - भवशरणमितीरयन्ति'' इत्यादि प्रमाणबलात्प्रार्थनापर्यवसन्नः - तस्यां चोपायान्तरस्थाननिवेशनार्थो भरस्वीकारांश एव प्रार्थ्यः - तत्प्रार्थनंच अत्यन्ताकिञ्चन मुमुक्षोरात्मसमर्पणान्वित -

मू- नमस्वात्मनिक्षेपपर மென்னுமிடம் ''नमस्कारात्मकं यस्मै विदायात्मनिवेदनम्'' इत्यादिகளிலே प्रसिद्धम् - श्रीवैकुण्ढगद्यத்திலே - प्रार्थनापूर्वकात्मनिक्षेपं कण्ठोक्तமாயிற்று -

सा.दी- வருளிச்செய்கிறார் - नमस् इत्यादि - श्रीवैकुण्ठेति - ''याचमानः प्रणम्यात्मानं भगवते निवेदयेत्''

सा.स्वा- सामर्थ्यத்தினாலே निक्षेपसिद्धि எங்ஙனே? என்னவருளிச்செய்கிறார்? नमस्सिति - शरणशब्दमुपायत्वप्रार्थनामात्रपरतया अन्ययासिद्ध्यर्हமாகையாலும் नमस्ஸானानार्थतकया अन्यथासिद्ध्यर्ह மாகையாலும், अन्यथासिद्ध्य नर्ह प्रार्थनातिरिक्त निक्षेपकण्ठोक्तिயல்லாமல், अन्यासिद्ध्यर्हवाक्य मात्रத்தாலே अतिरिक्ताङ्गि निर्णयंகூடுமோ? என்னவருளிச்செய்கிறார் - श्रीवैकुण्ठगद्यத்திலும் इति - ''याचमानः प्रणम्यात्मानं भगवते निवेदयेत्'' என்று याचनातिरिक्तात्मनिवेदनरूपनिक्षेपं कण्ठोक्त மென்றபடி? ஆகையால் अन्यथासिद्ध्यनर्हस्फुटतर श्रीवैकुण्ठगद्यानुसारத்தாலே अन्यथा सिद्ध्यर्हगद्यान्तरवाक्यं नेयமென்று கருத்து - இப்படி श्रीभाष्यकार वाक्यத்தாலே अङ्गिस्वरूपनिर्णयं பண்ணினது கூடுமோ? श्रीभाष्यकारवाक्यமும் - स्फुटतरप्रमाणविरोधத்தில் अन्यथा नेयமன்றோ? இங்கு ''तदेकोपायता याच्ना प्रपत्ति श्शरणागतिः'' என்கிற वचनத்தில் प्रार्थनैயை शरणागति யென்று स्फुटतरமாகத் தோற்றுகையாலே श्रीभाष्यकारवाक्यமும் तदनुगुणமாக नेयமேன்றோ? ''न्यासः पञ्चाङ्ग संयुतः'' इत्यादि प्रमाणबलத்தாலே न्यासமே अङ्गिயென்னில் ஆனாலும் न्यास शब्दं ''तदेकोपायता याच्ना'' इत्यादि प्रमाणप्रति पादितयाच्ना परமாகலாகாதோ? बुद्धिகளுக்கு विषयமே विशेषமாகையாலே ''न्यासः पञ्चाङ्गसंयुतः'' इत्यादौ विषय विशेषानुपादानத்தாலேயும் ''तदेकोपायता याच्ना ''इत्यादौ उपायत्वरूपविषयविशेषोपात्तयाच्ना தோற்று -

सा.प्र- समर्पित भरस्वीकारं विनानुपपत्तैरुपायवाचि शरणशब्दात्तत्सिद्धिरिति भावः - रक्षाभरश्च तत्तत्फलोत्पादनानुकूलयत्नवत्वम् - तस्य भगवति समर्पणं नाम तन्निवृत्तिफलकभगवदीयत्वाध्यवसायः मदिष्टोत्पादनानुकूलयत्नस्तवैवेत्यध्यवसाय इति -

सा.वि- वैलक्षण्येन तत्साधनानुष्ठानं विनैव त्वमेव तत्स्थाने स्थितस्सन् तत्फलं ददासीति विश्वसिमीत्येवं रूपत्वात् तत्रात्मनिक्षेपं विनापरत्वे प्रमाणमाह - नमस् ஸ० इति - वैकुण्ठगद्ये कण्ठोक्तत्वादात्मनिक्षेप श्रीभाष्यकारानुष्ठाने निस्सन्देह इत्याह - श्रीवैकुण्ठगद्यத்திலே इति - कीदृशमङ्गि स्वरूपमित्याकाङ्क्षाया-

सा.सं- भरसमर्पणेन विना न पर्यवस्यतीति निक्षेपமும் सिद्धमित्युक्तिरिति - समर्थशेषिण्यकिञ्चनस्य मुमुक्षोः अङ्गानुष्ठानानन्तरा नमः इत्युक्तिर्भरनिक्षेप प्रधानात्मनिक्षेपव्यञ्जिकेति ''नमोऽस्तुते'' इति முடிக்கையாலும் सिद्धमित्युक्तिः -नमश्शब्दो व्यञ्जक इत्येव न - किन्तु प्रमाण पर्यालोचनया सः स्वसंबन्ध निवृत्ति पूर्वक सपरिकरात्म समर्पणार्थक एवेत्याह - नमस् ஸ० इति - आदि शब्देन नमश्शब्दस्थूलयोजना परकृत्स्नाहिर्बुध्न्यवचनसङ्ग्रहः - कण्ठोक्त மாயிற்று इति - ''मामैकान्तिकात्यन्तिक परिचर्याकरणाय परिगृह्णीष्वेति याचमानः प्रणम्यात्मानं भगवते विवेदये दित्यनेन'' इति शेषः - भरस्वीकारा संभवादात्मनिक्षेपदिद्ध इति भावः - नमश्शब्दस्यात्मनिवेदन ।

मू- ஆகையால் "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्, आत्मात्मीय भरन्यास:" इत्यादिகளிலே अङ्गिविधानम् இப்படி அல்லாதபோது "षड् विधाशरणागति:" என்கிற वाक्यத்தில் आपातप्रतीतिயைக் கொண்டு "स्नानं सप्तविधं स्मृतम्" इत्यादिகளில் சொன்ன स्नानादि भेदங்கள் போலே தனித்தனியே प्रपत्ति विशेषங்களாக प्रसङ्गिக்கும்.

सा.दी- தென்று कण्ठोक्तम् - निक्षेपरूपाङ्गि विधानवचनங்களைக் காட்டுகிறார் - ஆகையால் इत्यादिயால் - अनन्यसाध्ये इत्यादिகளுடைய पापात प्रतीतार्थस्वीकारத்தில் बाधकமருளிச் செய்கிறார் - இப்படியல்லாதபோது इत्यादिயால் - आनुकूल्य सङ्कल्पादिகளுக்குப் प्रत्येकं प्रपत्तित्वं प्रसङ्गिக்குமென்று கருத்து -

सा.स्वा- கையாலும், तदेकोपायता याच्नेति प्रमाणமே अनन्यथा सिद्धமன்றோ? "शरणं व्रज" इत्यादि प्रमाणமும் विश्वास प्रार्थनादि साधारणமன்றோ? "प्रपत्तिं तां प्रयुञ्जीत" इति वचनமும் विषयविशेषानुपादानத்தினாலே तदेकोपायता याच्ना" इत्यादि प्रमाणसिद्धयाच्नापरமென்று கொள்ளுகை उचितமன்றோ? ஆகையால் श्रीभाष्यकारवाक्यத்தாலே अङ्गिनिर्णयமெங்ஙனே? என்னவருளிச் செய்கிறார் - ஆகையால், श्रीवैकुण्ठगद्यத்தில் "याचमान:" என்று निर्देशिத்து तदतिरिक्तமாக आत्मनिवेदनरूप निक्षेपं सिद्धமாகையாலே இந்த ज्ञापकத்தாலே யென்றபடி - अङ्गिविधानमिति - निर्णीत मिति शेष: - आत्मात्मीय भर रूपविषय विशेषविशिष्टसमर्पणरूप बुद्धिविशेषं निक्षेप மென்று उत्पत्ति विधिसिद्धமாகையாலே "निक्षेपापरपर्यायो न्यास: पञ्चाङ्गसंयुत:" इत्यादिकमप्यनन्यथासिद्ध विधिवाक्यानुसारத்தாலே भरन्यासपरமாகையால் पञ्चाङ्गसंयुत इत्येतदंशं तदतिरिक्तप्रार्थनाद्यङ्गपरமென்று अवश्यमङ्गी कार्यமாகையாலே तदेकोपायता याच्नेत्यादिकं विधि யல்லாமையாலே अङ्गप्राधान्यविवक्षया वा, असाधारणफल प्रार्थनाविवक्षया वा, अभेदनिर्देशमौप चारिकமென்று निर्वाह्यமாகையாலே अन्यथासिद्धतया आत्मात्मीयेति आदावेव निक्षेपरूपाङ्गि विधान மென்று निर्णायकं श्रीभाष्यकार वचनமே என்று கருத்து - अभेदनिर्देशमात्रத்தாலே प्रार्थनமே प्रपदनமென்கிற परपक्षத்தில் परेण समाधानं वाचयितुं प्रतिबन्द्याबाधक மருளிச்செய்கிறார் - இப்படியல்லாத इति-

सा.प्र - यावत् - एवं तर्हि किमङ्गीत्यत्र प्रमाणोपन्यासपूर्वकं निक्षेपाङ्गीत्याह ஆகையால் इत्यादिना - इत्यादिகளிலே इति - "आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपते: पदे" इत्यादिरादिशब्दार्थ: - ननु विश्वासप्रार्थना भरन्यासानां त्रयाणामप्यङ्गित्वं स्वीकार्यम् । अन्यथा श्रुतहानप्रसङ्गादित्यत्र प्रतिबन्धिमाह இப்படியல்லாத इत्यादिना - षण्णामङ्गित्वस्य "न्यास: पञ्चाङ्गसंयुत: -

सा.वि - माह ஆகையால் इति - अङ्गेऽङ्गित्ववादस्य प्राशस्त्यार्थत्व मङ्गीकृत्य यथा श्रुतार्थस्वीकारे बाधकमाह - இப்படியல்லாதபோது इति - தனித்தனியே प्रत्येकम् - षड्विधा शरणागतिरित्यु क्तत्वान्न किञ्चिदप्यङ्गं स्यादिति भाव: - प्रतिबन्धिमुखेन परिहारं वक्तुं तत्र परिहारं परेण वाचयति -

सा.सं- ஆகையால், "वेदनं ध्यानविश्रान्तम्" इत्यादिवत्विश्वासस्य आत्मनिक्षेप पर्यन्तत्वात् प्रतिबन्धिमुखेन च परेण निक्षेपस्यैव अङ्गित्वमभ्युपगमयितुं तामाह - இப்படியல்லாத इत्यादिना -

मू- ''प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम्'' इत्यादिवचनान्तर बलத்தாலே नियमமிருக்கப் பார்க்கில் அப்படியே प्रार्थनाविश्वासादिகளைப் प्रपत्तिயென்று சொல்லுகிற वचनங்களையும் नियमித்து ''न्यासः पञ्चाङ्गसंयुतः'' इत्यादिகளிற்படியே निक्षेपமென்றும் अङ्गि इतरங்கள் अङ्गங்களென்கை उचितम् -

सा.दी- அங்கு परिहारं शङ्किக்கிறார் प्रपत्तिं तामित्यादि - அப்படியே இங்கும் नियमித்துக்கொள்கவென்கிறார் - அப்படியே इत्यादि षट्सु पञ्चानामङ्गत्वकथनं एकस्य प्रपत्तित्वकथनं षण्णां प्रपत्तित्व विरुद्ध மென்றபடி ननु विश्वासादेः प्रपत्तित्वप्रतिपादकवचनங்கள் बहुவன்றோ? अतो ''भूयसां स्यात् बलीयस्त्वम्''

सा.स्वा- प्रपत्तिं तामिति । पञ्चभिरङ्गै रावृता மென்று சொல்லுகையாலே ஒன்றே अङ्गि - इतरங்கள் अङ्गங்களென்றில் என்றபடி, ''आनुकूल्यस्य सङ्कल्प'' इत्यादिवचनத்தில் निर्दिष्टமான ஆறு पदार्थ ங்களிலே निक्षेपத்தை अङ्गिயென்று சொல்லுகையாலே इतरங்கள் ஐந்தும் अङ्गங்களென்று கருத்து - ஆனாலும் ''तदेकोपायतायाच्ना प्रपत्तिः - त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः - शरणागतिः - भवशरणमितीरयन्ति । तवामीति च याचते'' इत्यादि बहुस्थलங்களிலே प्रार्थनமே शरणागतिயென்று தோற்றா நிற்கையாலே बहुप्रमाणान्यथाकरणं பண்ணி निक्षेपமே प्रपत्तिயென்று निर्णयिக்கக்கூடுமோ? என்னவருளிச்செய்கிறார் -

स.प्र- स्वाङ्गैः पञ्चभिरावृताम्'' इत्यादि वाक्यविरोधात्त्यागश्चेद्विश्वासप्रार्थनयोरपि समानमित्याह - प्रपत्तिं तामित्यादिना - ननु ''न्यासः पञ्चाङ्गसंयुतः - स्वाङ्गैः पञ्चभिरावृताम्'' इति द्वाभ्यां वचनाभ्यामङ्गत्वावगमात् ''त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता - तेदकोपायतायाच्ना प्रपत्तिः'' इति द्वाभ्यां प्रार्थनायाः प्राधान्यस्यापि अवगमाद्वैपरित्यं किन्न स्यात् ''उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्त्य चं ''इति वचनादपि प्रार्थनायाः प्राधान्यप्रतीतेः भूयसां न्यायात्प्रार्थनाया एवाङ्गित्वं युक्तमित्यत्र निक्षेपपस्यैवानेकेषु भगवच्छास्त्राध्यायेषु ''स्वात्मानं मयि निक्षिपेत् - निक्षिप्त स्वस्वगोचरः आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते । तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता । केशवार्पण पर्यन्ता ह्यात्मनिक्षेप उच्यते । न्यासः पञ्चाङ्गसंयुतः । विधायात्म निवेदनम् - आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे । न्यासेनैव महामुनेः'' -

सा.वि - प्रपत्तिं तामिति - नियमिக்கப் பார்க்கில், नियन्तुं दर्शनि - அப்படியே, विश्वासप्रार्थन योरप्यङ्गत्वादिति भावः - ननु प्रार्थनैवाङ्ग्यस्तु आत्मनिक्षेप एवाङ्गमित्युच्यताम् - प्रपत्तित्वबोधक -

सा.सं - परेण प्रतिबन्ध्युद्धारं वाचयति । प्रपत्तिमिति - प्रपतिं तामिति वचनपर्यालोचनया निर्धारितविशेष प्रपत्ति पदवाच्यस्यैव अङ्गित्वमि तरेषामङ्गत्वमेवेत्यभ्युपगमनीयम् - स्नानेतु तथा वचनाभावात्सप्तानामपि स्नानभेदत्वमिति मनुषे यदि तर्हीह विशेषनिर्धारकवचने सति किमुतेति भावः -नियमिத்து - इति - प्रार्थनानैर्भर्यविशिष्टो निक्षेपोऽङ्गीत्यङ्ग्यंशे गुणभूतां प्रार्थनां पुरस्कुर्वन्ति कानिचिद्वचनानि - अङ्गेषु विश्वासस्य प्राधान्यात्तं पुरुस्कुर्वन्ति कानिचिद्वचनानीति नियम्येत्यर्थः - नन्वेवमपि भूयसा न्यायेन याच्नाया एवाङ्गित्वं युक्तम्-

मू - भूयसां न्याय त्तैप् पार्त्तालुम् सात्यकि तन्त्र, लक्ष्मीतन्त्राहिर्बुध्न्य संहितादिकळिल् प्रपत्त्यध्यायङ्गळिले निक्षेपम् अङ्गियॆन्ऱे प्रसिद्धम् 'त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता'' ऎन्गिऱदुवुम्. तत्प्रकरणत्तिले प्रधानमागच् चॊन्न भरन्यासपर्यन्तमॆन्नुमिडम् -

सा.दी- ऎन्ऱु न्यायत्ताल् विश्वासादिकळुक्के प्रपत्तित्वमॆन्नवरुळिच् चॆय्गिऱार् - भूयसां न्यायत्तै इत्यादियाल् निक्षेपस्याङ्गित्वप्रति पादकवचनङ्गळ् ततोऽपि बहुवॆन्ऱु करुत्तु - इप्पडि 'प्रपत्तिर्विश्वासः'' ऎन्नुम् वचनङ्गळुक्कु निर्वाहमरुळिच् चॆय्दु वचनान्तरत्तुक्कुम् निर्वाह मरुळिच् चॆय्गिऱार् त्वमेवेत्यादि -

सा.स्वा- भूयसाम्न्यायत्तै इति - निक्षेपमङ्गियॆन्ऱे प्रसिद्धमिति । प्रमाणभूयस्तैतुल्यैयानालुम् ऒरिडत्तिलुम् प्रार्थनत्तुक्कु अभेदोक्तियिरुन्दालुम् अङ्गित्वकण्ठोक्तियिल्लै - निक्षेपत्तुक्कानाल् ''न्यासः पञ्चाङ्गसंयुतः - एव मङ्गै रुपाङ्गैश्च नमनं ते प्रकीर्तितम् - कथं त्वां शरणं गच्छेत् - कीदृशी शरणागतिः'' इति ब्रह्मप्रश्नपूर्वकं 'अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्'' इत्यादि भिरङ्गित्वकण्ठोक्तियाले विशेषोक्ति सहित भूयसां न्यायत्ताले आत्मनिक्षेपमे अङ्गिऎन्ऱु करुत्तु - प्रपत्त्यध्यायङ्गळिले इति ऒरॊरु संहितैकळिले नानाप्रपत्त्यध्यायङ्गळिले ऎन्ऱु भूयस्त्वतिशयं चॊन्नपडि, आनालुम् अहिर्बुध्न्यादिसंहितैकळिले ''त्वमेवोपाय भूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता'' इति ''तदेषाभ्युक्तां इतिवत्प्रार्थनामतिये शरणागतिऎन्ऱु शास्त्रङ्गळिल् चॊल्लप्पट्टतॆन्ऱु भेदनिर्देशमात्रमन्ऱिक्के सविशेषोक्तिबलत्ताले प्रार्थनैयै शरणागति ऎन्ऱु चॊल्ल वेण्डावो? ऎन्नवरुळिच्चॆय्गिऱार्. त्वमेवेति - तत्प्रकरणत्तिल् इति । ''एवमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् - ऎन्ऱु तत्प्रकरणत्तिल् निक्षेपे अङ्गित्व कण्ठोक्तियिरुक्कैयालम् इङ्गु ''त्वमेव रक्षकी भूतो भवेति प्रार्थनामतिः''

सा.प्र- इत्यादि भिर्भूयोभिः प्रतिपादनान्निक्षेपस्यैवाङ्गित्वं युक्तमित्याह । भूयसामित्यादिना - संहितादीति - सनत्कुमारविष्वक्सेनसंहितादिरादि शब्दार्थः - संहिताग्रहणं निक्षेप प्रापक वचनानां तासु बहुत्वाद्ग्रन्थविस्तरभयादिति मन्तव्यम् - एवमनन्यसाध्य इत्येतत्तुल्यार्थस्य प्रपत्तिर्विश्वास इत्यस्यौचित्याच्च भरन्यासपर्यन्तत्वमुक्त्वा वचनान्तरस्यापि प्रकरणाच्च भरन्यास पर्यन्तत्वे युक्तिमाह - त्वमेवोपायभूत इत्यादिना - रक्षा भरन्यासस्य तस्मिन् समर्पण एव -

सा.वि- प्रमाणनामुभयोस्तुल्यत्वादित्यत आह - भूयसां न्यायत्तै इति - पार्त्ताल्, दर्शने । अनन्यसाध्य इत्येतन्मूलभूतस्य त्वमेवोपायभूतो मे इत्यस्य भरन्यासपर्यवसानमाह - त्वमेवोपायेति -

सा.सं- श्रीमद्रामायणे ''अभियाचाम वैदेहीम् । भर्त्सितामपि याचध्वम्'' इत्येव श्रवणात् । भरतमुनिप्रणीत लक्षणवाक्ये ''अहमस्म्यपराधानां - सर्वज्ञोऽपिहि - अप्रार्थितो न गोपायेत् - त्राहि मां पुण्डरीकाक्ष - भरशरणम्'' इत्यादिष्वपि याच्नाया एव निर्देशादित्यत्राह - भूयसामिति - तर्हि प्रार्थनामतिश्शरणागतिरित्युक्तिः कथं घटत इत्यत्राह - त्वमेवेति -

मू - अवधारण सहकृतोपायशब्दத்தாலே व्यञ्जितम् - ஓரோரு विवक्षैகளாலே अङ्गங்களை प्रधानமாகச் சொல்லுகை लोकத்திலு முண்டு -

सा.दी- विवक्षाविशेषத்தால் अप्रधानங்களிலும் प्रधानोपचारமுண்டென்கிறார் - ஓரோரு इत्यादि - यथा भटेषु राजवदुपचारप्रयोगः - ननु ''शरणं व्रज शरणं गच्छ'' इत्यादिवाक्यस्थ धातुக்களுக்கும்-

सा.स्वा- என்று சொல்லாதேயும் ''त्वमुपायो भव'' - निरवधारणமாகச் சொல்லாமலும் त्वमेवोपायभूतो मे भवेति'' என்று - निर्देशिக்கையாலேயும் भरस्वीकारपर्यायोपायान्तरस्थानापन्नत्व प्रार्थनापरமான இந்த वचनं भरन्यासமில்லாமல் भरस्वीकारं கூடாமையாலும் प्रार्थनान्वित भरन्यासरूपामतिशशरणागतिरित्युक्तेत्येतदर्थव्यञ्जक மென்று கருத்து இனி अवधारणसहकृतोपाय शब्दமில்லாதவிடத்திலும் ''अज्ञानादथवाज्ञानादपराधेषु सत्स्वपि । प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम्'' इत्यादौ लोकानुगुणமாக निर्वाहान्तरं साधिக்கிறார் - ஓரொரு इति राजभृत्ये राजैवायमित्यादि व्यपदेश மென்றபடி - அப்படியே क्षमस्वेति प्रार्थनायाम् अङ्गभूतायाम् अङ्गप्राधान्यद्योतनाय प्रपदनरूपप्रायश्चित्ताभेदनिर्देशः என்று கருத்து - ஆனாலும் ''मामेकं शरणं व्रज'' - तमेव शरणं गच्छ'' -

सा.प्र- स एवोपायस्स्यात् - अन्यथा भक्तिरप्यपेक्षिता स्यादिति कृत्वावधारणार्थभूतनैरपेक्ष्यं भरन्यास लिङ्गमिति भावः - नन्वेवं चेत्प्रामाणिकानामङ्गे अङ्गित्वव्यपदेशोऽनुपपन्न इत्यत्र प्रयोजनविशेषण भृत्ये राजशब्दप्रयोगवदुपपद्यत इत्याह - ஓரொரு इत्यादिना । शरणं गच्छ-

सा.वि- अवधारणार्थभूतनैरपेक्ष्यं भरन्यासलिङ्गमिति भावः - नन्वेवं चेत्प्रामाणिकाना मङ्गित्वव्यपदेशोऽनुपपन्न इत्यत्र प्रयोजनविशेषणभृत्ये राजशब्द प्रयोगवदुपपद्यत इत्यत - ஓரொரு इति - ननु क्वचित् ''आत्मानं मयि निक्षिपेत् ''इत्यात्मसमर्पणमङ्गितया विधीयते - क्वचित् ''आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते'' इत्यात्मात्मीय भरसमर्पणं प्रपत्ति रित्युच्यते ''स्वप्रवृत्तिनिवृत्त्यंशः प्रपत्तिरिति लक्षित ''इति केचिद्वदन्ति - एवमङ्गिस्वरूपेऽपि न निर्धारणं संभवतीत्याशङ्क्यात्मापहारादि दोषप्रायश्चित्तत्वेन सर्वमुमुक्षुसाधारणतया कर्तव्यत्वात् तदंशविवक्षया ''आत्मानं मयि निक्षिपेत्'' इत्युक्तः - एतेनास्य समर्पणस्य यागत्वं च सिद्ध्यति - उपायान्तरस्थाननिवेशस्ये होपायान्तरविवक्षया विशेषत्वादात्मात्मीय भरसमर्पणस्यैवोपायान्तरस्थाननिवेशनरूपत्वादिदमेव सर्वफलसाधन रूपमङ्गिस्वरूपमिति ''आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते'' इत्युक्तम् - ''त्वमेवोपायभूतो मे भव'' इत्यत्र च यत्साध्ययत्नमन्तरेणैव त्वं मे फलं देहीति प्रार्थनायां रक्षाभरसमर्पणमाक्षिप्तं भवति -

सा.सं- अवधारणसहकृतेति - उपायान्तरस्थाने निविष्टो भवेति हि प्रार्थनार्थः - सा च भरस्वीकारप्रार्थनार्थत्वाद्भरनिक्षेपमादायैव पर्यवस्यतीत्य पर्यवसानवृत्त्या तत्परेति व्यञ्चितमित्युक्तम् - लोकमर्यादयापीयमर्थं - दृढीकरोति ஓரொரு इति । अङ्गங்களை, अप्रधानानि -

मू - आलंभशब्दं यागपर्यन्तமானாற்போலே ''शरणं व्रज'' इत्यादिகளில் धातुக்கள் न्यासनिक्षेपत्यागादिशब्दங்களாலே சொல்லப்பட்ட आत्मयागத்தைச் சொல்லுகை वैदिकमयदिக்கும் अनुगुणम् -

सा.दी- विश्वासात्मकाङ्गपरत्वமுண்டாகையால் आत्मनिक्षेपपरत्वத்தில் क्लिष्टத்தை வாதாதோ? என்னவருளிச் செய்கிறார் - आलम्भेत्यादिயால் -

सा.स्वा- इत्यादि विधिवाक्यங்களிலே आत्मनिक्षेपं தோற்றாமையாலே निक्षेप प्राधान्यं சொன்னது கூடுமோ? ''वायव्यग् श्वेतमालभेत'' इत्यादौ आलम्भ शब्दं यागपर्यन्तबोधकமானாற்போலே இங்கும் व्रजेत्यादि धातुக்கள் आत्मयागापर्यन्तबोधकங்களென்னில் அங்கு - द्रव्यदेवता संबन्धाक्षिप्तयागप्रधानतयावाक्यस्यालम्भशब्दं तत्पर्यन्त மானாலுமிங்கு அப்படி சொல்லுகைக்கு निदान முண்டோ? என்னவருளிச்செய்கிறார் - आलम्भशब्दमिति - न्यासेति - ''न्यास: पञ्चाङ्ग संयुत:'' -

सा.प्र- ''शरणं व्रजे'' त्यादिषु प्रयुक्तगच्छेत्यादि धातूनां न्यास निक्षेपादि भिन्नार्थकत्वात्कथं सर्वेषु वचनेषु भरन्यास एवाङ्गित्वेन विवक्षित इत्युच्यत इत्यत्र स्पर्श हिंसार्थस्यालम्भशब्दस्यार्थप्रकरणादिना यथायाग पर्यन्तत्वं तथा ''गच्छति व्रजति'' इत्यादि धातूना मर्थ प्रकरणादि नैवन्यास निक्षेपादि शब्द बोध्यभरन्यसपर्यन्तत्वमेवेत्याह - आलंभशब्द मित्यादिना ।

सा.वि- भरसमर्पणं विना उपायत्व प्रार्थनाया अयोगात् - ''आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपते: पदे। उपायं वृणु'' इत्युक्तत्वाच्च तत्रोपायत्वं स्वीकुर्वित्यर्थ: - उपायत्वेनाध्यवसायं कुर्विति यावत् - तथा चात्रापि भरसमर्पण मेव अङ्गिस्वरूपमिति दर्शितम् - प्रार्थनात्वङ्गमिति प्रागेवोक्तम् - भरसमर्पण विवक्षयैव स्वप्रवृत्तिनिवृत्त्यंश इत्युक्तम् - समर्पणाभावे स्वप्रयत्ननिवृत्यसिद्धे: - लोके कुत्रचिदाप्ते निक्षिप्तधनस्य पुरुषस्य तद्रक्षणे स्वप्रयत्न निवृत्तिर्दृश्यते - नत्वनिक्षिप्तधनस्यापीति तस्मान्न कस्यचिदपि विरोध इत्यभिप्रायेणाह - आलंभशब्दमित्यादिना - तत्र ''शरणं व्रज'' इत्यादिष्वात्म समर्पणस्याप्रतीतेस्तद्विरोध इत्याशङ्क्य मुमुक्षु मात्रसाधारणत्वेन तस्यावश्यकत्वात् - ''नमसा योऽकरोद्देवे स स्वध्वर इतीरित: । ब्रह्मनेत्वामह स ओमित्यात्मानं युञ्जीत - हविर्गृहीत्वात्मरूपं वसुरण्येति मन्त्रत: । जुहुयात् प्रणवेनाग्नावच्युताख्ये सनातन'' इति यागत्व निर्देशन्न्यासनिक्षेपत्यागादि शब्दैर्यागत्वप्रतीतेश्च ''अग्नीषोमीयं पशुमालभेत'' इत्यत्रालभेतेरङ्गभूतालम्भनप्रतिपादनद्वारा यागपर्यन्तत्ववत् ''व्रज'' इत्यादि धातुष्वप्यङ्ग भूतोपायत्वाध्यवसायादि द्वारा आत्मसमर्पणपर्यन्तत्वसिद्धेर्न विरोध इत्याह - आलम्भशब्दमिति - धातुக்கள் धातुभि: - व्रजगतौ प्रपद्य इत्यत्र पदल् गतौ वृण्वीत्यत्र वृङ् संवरण इत्यादिभि: - न्यास निक्षेपत्यागादिशब्दங்களாலே சொல்லப்பட்ட आत्मयागத்தை'' - न्यासनिक्षेपादिशब्दवाच्ययागस्य - சொல்லுகை, अभिधानं - वैदिकमयदिக்கும் अनुगुणम् -

सा.सं - वैदिकमर्यादया चोक्तां दृढीकरोति - आलम्भेति । यथा यागाङ्ग भूतपशुहिंसा वाच्यालम्भशब्दस्तदङ्गकपश्ववयवभूतद्रव्यत्याग रूपयाग पर्यन्त: एवं व्रजप्रभृति धातुश्शब्दत -

मू - यागமாவது. இன்ன देवतैக்கு இந்த हविस्ஸென்றிங்஦னேயொரு बुद्धिविशेषम्, - இப்படியென் आत्माவாகிற स्वादुतमமான इविस्ஸு श्रीमान् ஆன नारायणன் பொருட்டென்றிங்஦னே யிருப்பதொரு बुद्धि विशेषम् இவ்விடத்தில் आत्मयागम् -

सा.दी- यागशब्दार्थத்தைக் காட்டுகிறார் यागமாவது इति । இது स्वरूपसमर्पणम् இத்தால் भरसमर्पणமும் उपलक्षितम् । இவ் आत्मनिक्षेपத்தில் इत्यादि स्वरूपसमर्पणभरसमर्पणं फलसमर्पण மென்று आत्मनिक्षेपम् अंशत्रयமாயிருக்கும் - அதில் भरसमर्पणं फलान्तरार्थप्रपन्नர்க்கும் साधारण -

सा.स्वा- सन्यासस्त्याग इत्युक्त इत्यादि प्रमाणங்களிலென்றபடி - आत्मयागத்தை इति - ''तस्यैवं विदुषो यज्ञस्यात्मा यजमानश्श्रद्धापत्नी'' त्यादौ यागत्वेन निरूपितமானவென்றபடி - यद्वा, ஆனாலும் निक्षेपमङ्गिயென்று சொன்னது கூடுமோ? ''तस्यैवं विदुषो यज्ञस्यात्मा'' என்று यागமன்றோ? अङ्गिயாகத் தோற்றுகிறது - न्यासनिक्षेपादिशब्दமும் आत्मयागवाचिயாகையாலே विरोधமில்லை யென்னிலானாலும் शरणं व्रजेत्यादि वाक्यத்தில் இது தோற்றாமையாலே अङ्गिயாகக் கூடுமோ? व्रजेत्यादि धातुக்கள் आत्मयाग परங்களாகையால் बाधकமில்லை யென்னிலப்போது क्लिष्ट गति प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார் आलम्भेति । वैदिकमर्यादानुगुणமாகையாலே क्लिष्टगतिயில்லை யென்று கருத்து - आत्मयाग மென்று निक्षेपத்தை यागமாக निरूपिத்தது கூடுமோ? यागமாவது हविषः अग्नौ प्रक्षेप மன்றோ? என்னவருளிச்செய்கிறார் - यागமாவது - इत्यादिना - स्वादुतमेति लोकத்தில் हविस्सुப்போலேயன்றிக்கே अत्यन्तातिशयितமான हविस्सु तदुचितसर्वोत्कृष्टदेवतैகளின் பொருட்டு என்று बुद्धिविशेषமென்றபடி - இப்படி आत्म समर्पणरूप மான यागमङ्गिயென்று निर्णयिக்க -

सा.प्र-भरन्यासस्य कथं याग शब्देनोक्तिरित्यत्राह । यागமாவது इत्यादिना । स्वादुतमेति । परिशुद्धात्मस्वरूपस्याप्यपहतपाप्मत्वाद्यष्टगुणविशिष्टतया आनन्दरूपतया च ''अहमन्नमहमन्नम्'' इत्युक्तरीत्या च भोग्यतमत्वमिति भावः - नन्वात्मनिक्षेपस्याङ्गित्वमयुक्तम् । फलान्तरार्थप्रपदने -

सा.वि- ''अग्निष्टोमीयं पशुमालभेत - आग्नेयमष्टाकालं निर्वपेत्'' इत्यादिवैदिकमर्यादाया अप्यविरुद्धमित्यर्थः - आत्मसमर्पणस्य यागत्व सिद्धये यागलक्षणमाह - यागமாவது इति இங்஦னே, अनेन प्रकारेणस्वादुतमமான इति - ''अहमन्नमहमन्नम्'' इत्युक्तरीत्या आनन्दरूप भोग्यमित्यर्थः - श्रीमन्नारायणன் பொருட்டே श्रीमन्नारायणायैव ஒரு बुद्धिविशेषமிவ்விடத்தில் आत्मयागमित्यन्वयः - अत्र रक्षाभरसमर्पणं कार्यमिति पूर्वोक्तं स्मारयति -

सा.सं- उपायत्वाध्यवसायपरोऽपि भरतमुनिप्रणीतलक्षणवाक्यानुसारेणाध्यवसाय पूर्वकयाच्ना विशेषपरस्सन् न्यासादि शब्दवाच्ययागपर्यन्त इत्यर्थः - एवं व्रजेति विधेरेव निक्षेप पर्यन्तत्वे याच्नादि शब्दानां तत्परता किमुतेति न्यायसिद्धेति भावः - नन्वस्ययागसाम्यमनुपपन्नम् - देवतोद्देशेनद्रव्यत्यागात्मकक्रियात्वस्य बुद्धिविशेषरूपे प्रपदने असंभवादित्यत्राह । यागமாவது इत्यादिना - अत्र ''हविर्ग्रहीत्वात्मरूपं वसुरण्येति मन्त्रतः । जुहुयात्प्रणवेनाग्नावच्युताख्ये सनातने । ब्रह्माग्नौ जुहुयादोमित्यनेन .द्वयरूपेण''

मू - இவ் आत्मनिक्षेपத்தில் - सर्वफलार्थिகளுக்கும் साधारणமான कर्तव्य स्वरूपं रक्षाभरन्यास மென்னுமிடம் முன்பே சொன்னோம் -

सा.दी- மென்கிறார் - இவ் आत्मनिक्षेपத்தில் इत्यादिயால், முன்பே சொன்னோம், साङ्गप्रपदनाधिकारத்திலென்றபடி.

सा.स्वा- கூடுமோ? लोकத்தில் लौकिक द्रव्यनिक्षेपத்திலேயும் दृष्टफलार्थप्रपत्तिயிலும் आत्मसमर्पणं प्रसङ्गि யாதோ? मोक्षार्थप्रपत्तिயிலும் भरन्यासயில்லையாக प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார் - இவ் आत्मनिक्षेपத்தில் इति - यद्वा, இங்கு निक्षेपरूपाङ्गि स्वरूपमात्मयागमात्र மாகில் "आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते" என்கிறது विरोधिயாதோ? भरसमर्पणமே निक्षेपशब्दवाच्यமென்னில் "आत्मानं मयि निक्षिपेत्" - "आत्मानं भगवते निवेदयेत्" इत्यादि विधिवाक्यமும் आत्मयागस्वरूपनिर्वचनरूपपूर्व वाक्यமும் विरोधिயாதோ? இனி आत्मसमर्पणं स्वरूपभरफलसमर्पणरूप दळत्रयात्मकமென்று சொல்லில் लौकिकद्रव्य निक्षेपத்திலும் फलान्तरार्थप्रपत्तिயிலும் अव्याप्ति प्रसङ्गि யாதோ? என்னவருளிச்செய்கிறார் - இவ் आत्मनिक्षेपத்தில் इति - दलत्रयात्मकात्मनिक्षेपத்திலென்றபடி - सर्वेति - मोक्षार्थनिक्षेपं दलत्रयात्मक மென்றும் फलान्तरार्थप्रपदनं भरसमर्पणमात्ररूप மென்றும் साङ्ग प्रपदनाधिकारத்திலே சொன்னோமென்று கருத்து. இப்படி सर्व फलार्थि களுக்கும் भरन्यासं साधारणकर्तव्यமாகில் उपायान्तरसमर्थனுக்கும் भरन्यासं कर्तव्यமாக प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார்.

सा.प्र- तस्यानपेक्षिततत्वेन कृत्स्नप्रपत्ति व्यक्त्यनुयायित्वाभावादित्यत्र "मुमुक्षु मात्रसामान्यं स्वरूपादि समर्पणम् । अकिञ्चने भरन्यासस्त्वधिकोऽङ्गितया स्थित इति पूर्वोक्तं रक्षाभरन्यासस्थ कृत्स्न प्रपदनानुयायित्वादङ्गित्वमित्येतत्स्मारयति । இவ் आत्मानिक्षेपத்தில் इत्यादिना - ननु "ओमित्यात्मानं युञ्जीत - न्यासमात्मनः नमसा योऽकरोद्देवे - अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यः" इत्यादिभिः मुमुक्षूणां आत्मनिक्षेपस्य कर्तव्यत्वावग माद्यागादौ इविस्स्वरूप समर्पणेऽपि तद्रक्षाभरसमर्पणासिद्धिवदात्मरक्षा भरसमर्पणासिद्धेस्तस्याङ्गित्वं नोपपद्यत इत्यत्र "आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे । उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्त्य च । हविर्ग्रहीत्वात्मरूपं वसुरण्येति मन्त्रतः । जुहुयात्प्रणवेनाग्वाक्युताख्ये सनातने" इतिचप्रयोगविधौ वसुरण्येत्यस्य हविर्ग्रहणे विनियोगात्तत्र च सर्व कारणत्वसर्वरक्षकत्वादेरनुसन्धेयत्वेक्तेरात्मरक्षकत्व स्याप्यनुसन्धेयत्वात् स्वाकिञ्चन्यानुसन्धानाच्च मुमुक्षुप्रपदने आत्मरक्षाभर समर्पणमप्यर्थात् सिद्ध्यतीति तस्याङ्गित्वम्-

सा.वि- இவ் आत्मनिक्षेपத்தில் इति । ननु ज्योतिष्टोमादियागेषु हविस्समर्पणेऽपि रक्षाभरसमर्पण-

सा.सं - इत्यादिकमिह विवक्षितम् - एवं चतत्पर्यसानं युक्तमिति भावः । तस्यात्म निक्षेपस्यैव सर्वत्राङ्गितास्यादित्यत्राह । இவ் आत्मेति - முன்பே, साङ्ग प्रपदनाधिकारे । अत्र रक्षाभरन्यास इति कारिकयोक्त मित्यर्थः - सत्यमुक्तम् । तत्र किं नियामकम्? हवि स्समर्पण मेव हि सर्वत्रयाग इत्यत्राह-

मू - ''हविस्समर्पणादत्र प्रयोगविधिशक्तित: । आत्मरक्षाभरन्यासोऽकिञ्चन स्यातिरिच्यते -

सा.दी- अकिञ्चनனான अधिकारिக்கு, मुमुक्षुவுக்கென்றபடி - ननु சோமாசியாண்டானுள்ளிட்டார் स्वप्रवृत्तिनिवृत्तिरेव प्रपत्ति: என்று சொல்லுகையால் भरन्यासं எப்படி प्रपत्ति யென்னவருளிச் செய்கிறார் -

सा.स्व- हविस्समर्पणादिति । अत्र, मोक्षार्थप्रपदने । प्रयोगविधिशक्तित: । ''आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपते: पदे । अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्त कर्तव्य: कृतकृत्यो भविष्यति'' इत्यादि भरन्यासानुष्ठानविधिसामर्थ्यात् उपायान्तर सामर्थ्य முண்டாகில் भरन्यासமே கூடாமையாலே अकिञ्चनனான मोक्षफलार्थिகளுக்கும் - आत्महविस्समर्पणरूपात्मयागात्मरक्षा भरन्यासोऽतिरिच्यते'' अधिको भवति என்று கருத்து - இப்படியாகில் स्वप्रवृत्तिनिवृत्ति: प्रपत्ति: என்ற श्रीराममिश्रोक्तिக்கு विरोधं வாராதோ? அங்கு अङ्गप्राधान्यविवक्षैயாலும் -

सा.प्र-युक्तमित्यभिप्रयन्नाह । हवि स्समर्पणादित्यादिना - हविस्समर्पणादतिरिच्यत इत्यन्वय: - ननु भरन्यासस्य प्रपदनत्वसमर्थनं स्वयत्न निवृत्ते: प्रपत्तित्वबोधक

सा.वि- भावात् - ''आमित्यात्मानं युञ्जीत - न्यासमात्मन: -नमसा योऽकरोद्देव इत्युन्नीतविधिवाक्ये ''अनेनैवतु मन्त्रेण स्वात्मानं मयि निक्षिपेत्'' इत्यादिविधिषु भरसमर्पणाश्रवणाच्च कुतस्तस्याङ्गित्व मित्यत्राह हविस्समर्पणादिति - प्रयोगविधिशक्तित:, ''उत्पत्तिविधिरधिकारविधिर्विनियोग विधि:'' इति विधिप्रकारभेदा: - तत्र साङ्गप्रपदनानुष्ठान प्रकारबोधको विधि: प्रयोगविधि: - प्रकृते - ''आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपते: पदे । उपायं वृणु लक्ष्मीशम्'' इति प्रयोगविधि - तथा ''हविर्ग्रहीत्वात्मरूपं वसुरण्येति मन्त्रत: । जुहुयात्प्रणवेनाग्नावच्युताख्ये सनातने'' इत्ययमपि प्रयोगविधि: - तत्र प्रथमे प्रयोगविधौ भरं निक्षिप्येति भरसमर्पणस्य कण्ठोक्तत्वात् द्वितीये प्रकरणादिपर्यालोचनादि सहायेन अकिञ्चनाधिकारि विषयस्य तन्मूल भूतस्य ''ओमित्यात्मानं युञ्जीत'' इत्यस्याकिञ्चनाधिकारि विषयत्वात्तत्र रक्षाभरसमर्पणं विना उपायत्वासिद्धे: प्रयोगविधि सामर्थ्यात् । अत्र, आत्मयागे । हविस्समर्पणात्, हविस्समर्पणापेक्षया । भरन्यासोऽतिरिच्यते, अधिको भवति - तत्र ''प्रयोग विधिशक्तित:'' इत्युपलक्षणम् ''आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते'' इत्यादिनिर्वचनादपि ''आत्मानं मयि निक्षिपेत्'' इत्यादिषु रक्षाभरसमर्पणसिद्धिरिति द्रष्टव्यम् - वसुरण्येति हविर्गृहीत्वेति - वसु रण्येति मन्त्रेण ग्रहणं विधाय प्रणवेनेत्योमित्यस्य समर्पणकरण मन्त्रतया विधानात् - तत्राकारवाच्याय स्वात्मानं समर्पयामीति स्वानुसन्धानाद कारार्थरक्षकत्वाध्यनुसन्धाने सति सामर्थ्याद्रक्षा भरस्सिद्ध्यतीत्याहु: - तत्र प्रयोगविधिपर्यन्तधावनं वृथा स्यात् - ''आमित्यात्मानं -

सा.सं- हविरिति । अत्र, प्रपत्तिप्रकरणे । आत्मरक्षाभरन्यास: अकिञ्चनप्रपित्सो: - हविस्समर्पणात्, मुमुक्षुमात्र सामान्य स्वरूपादि समर्पणात् । यागमात्रसामान्य हविस्समर्पणाच्च । अतिरिच्यते, अधिकोभवति, कुत:? प्रयोगविधिसामर्थ्यात् । अनुष्ठापकविधिबलात् । ''आत्मात्मीय -

मू - अतश्श्रीराममिश्राद्यैर्भरन्यासविवक्षया । स्वप्रवृत्तिनिवृत्त्यंशः प्रपत्तिरिति लक्षितः

सा.दी- अत इति - अतः, एवं निश्चितत्वाதென்றபடி - भरन्यासविवक्षयेति । भरन्यासांशेऽपि विवक्षास्तीत्यर्थः - भरन्यासे अकृते स्वयत्ननिवृत्तिயுண்டாகாதென்கிறார் -

सा.स्वा - अभेदनिर्देशं கூடாதே? என்னவருளிச்செய்கிறார் - अत इति - अतः, अकिञ्चनனுக்கு भरन्यासमधिकமாகையாலே भरन्यासमन्तरेण स्वप्रवृत्ति निवृत्तेरसंभवेन कारणीभूत भरन्यास व्यञ्जनार्थमिव स्वप्रवृत्तिनिवृत्तिः प्रपत्तिरिति लक्षितः என்றபடி - இங்கு स्वप्रवृत्तिनिवृत्तिः प्रपत्तिरिति लक्षितः என்று निर्देशिயாதே स्वप्रवृत्तिनिवृत्त्यंशः என்றது उत्तरकालीनस्वप्रवृत्तिनिवृत्तिः प्रपत्तिरिति लक्षितः என்ற கருத்து उत्तरकालीन स्वप्रवृत्तिनिवृत्त्यंशं गोप्तृत्ववरणायुपायान्तरத்தாலும் संभावितமாகையாலே स्वप्रवृत्तिनिवृत्त्या भरन्यासविवक्षै கூடுமோ?

सा.प्र- पूर्वाचार्यवचनविरुद्ध मित्याशङ्क्य कृत्स्न स्वयत्ननिवृत्तेः प्रपत्तित्वोक्तौ निवृत्तिरूप स्वयत्न स्यापि क्रोडीकारेण स्वव्याघात प्रसङ्गात् - निषिद्धेभ्यो निवृत्तेरेव प्रपत्तित्वस्यावश्यवक्तव्यत्वाद शक्तिसिद्धायास्तस्य एव मोक्षहेतुत्वे सर्वमुक्तिप्रसङ्गात्प्रपत्तित्वानुपपत्ते बुद्धिपूर्वकं यत्नसाध्यायाः तस्यास्सिद्धेर्भरन्यासानन्तरभावित्वेन लोके दर्शनात्तद्धेतु भरन्यास विवक्षयैव स्वयत्ननिवृत्तेः प्रपत्तित्वव्यपदेश इत्याह - अतश्श्रीरामेत्यादिना-

सा.वि- युञ्जीत ''इति विधिबलादपि सामर्थ्यात्तत्सिद्धिसंभवात् भक्त्यादि साधारण्येन प्रयोगविधिनापि सामर्थ्यासिद्धेश्च । स्वप्रवृत्तिनिवृत्त्यंशः प्रपत्तिरिति श्रीराममिश्रवाक्यस्य तात्पर्यमाह - अतश्श्रीराममिश्राद्यैरिति - अतः, पूर्वोक्तप्रकारेण भरन्यास एव प्रपत्तिरिति स्थापनात् -' अयमाशयः - प्रयत्नमात्रत्यागो जीवतो न शक्यः - नापि नित्य नैमित्तिक कर्मत्यागः - अलेपकमतप्रवेशापत्तेः - किन्तु भगवद्व्यतिरिक्तेभ्य उपायान्तरेभ्यो निवृत्तिरिति वाच्यम् - तादृशव्यावृत्तिश्च भगवदेकोपायत्वम् - तच्च न्यस्तभरत्वं विना नोपपद्यत इति स्वव्यापारत्यागो भरन्यासव्याप्य एव भवतीति विवक्षयास्वयत्नत्यागः। प्रपत्तिरित्युक्तमिति - ननु भरन्यास मन्तरेण निर्भरत्वापर पर्यायिस्वयत्ननिवृत्तिर्नेत्युक्तम् - तत्कथं भरन्यासं विनापि रक्षापेक्षणमात्रेण स्वप्रयत्नविरामोपपत्तेरित्याशङ्कायां व्यतिरेकमुखेन रक्षाभरन्यासस्यावश्यकत्वं साधयति -

सा.सं - भरं सर्वं निक्षिप्य श्रीपतेः पदे । उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्त्यच । हविर्ग्रहीत्वा'' इत्यादिकाः प्रयोगविधयः । तर्हि स्वप्रवृत्ति निवृत्तिरेव प्रपत्तिरित्यभिधानं कथमित्यत्राह - अत इति । भरन्यासस्य अकिञ्चनसर्वाधिकारि साधारण्यादित्यर्थः - विवक्षया, तात्पर्येण । निवृत्तिरूपोंऽशो निवृत्त्यंशः - सोऽशो नैर्भर्यम् । न्यस्तभर एव हि नैर्भर्यसंभव इति भावः । लक्षितः, प्रपत्तिलक्षणलक्ष्यतया कृतः - नहि कारणाविनाभूतकार्यस्य लक्ष्यतयोक्तिः कारणस्य लक्ष्यत्वेन विवक्षिततां विघटयतीत्याशयः - ननु भरन्यासमन्तरेण नैर्भर्यापर पर्यायिस्वयत्नविरतिर्नेत्यासीत् - तत्कथम्? रक्षापेक्षण मात्रेणापि स्वयत्ननिवृत्त्युपपत्तेरित्यत्राह -

मू - अकृतेतु भरन्यासे रक्षापेक्षणमात्रतः । पश्चात्स्वपत्नविरतिर्निप्रसिद्ध्यति लोकवत् ।

सा.दी- अकृतेत्विति - भरन्यासांशमकृत्वा केवलं रक्षापेक्षै பண்ணினால் तदुत्तरकालं स्वयत्ननिवृत्तिसिद्धियாது - लोकத்தில் போலே, लोकத்தில் रक्षापेक्षामात्रं பண்ணினாலும் वस्तुनिक्षेप மில்லாதபோது तदर्थ -

सा.स्वा- என்னவருளிச் செய்கிறார் - अकृतेत्विति - लोकத்திலே रक्षिக்கவேணுமென்று प्रार्थनामात्रத்தாலே स्वयत्ननिवृत्तिसिद्धियாமையாலே लोकवदेव प्रकृतेऽपि भरन्यासाभावे स्वयत्ननिवृत्तिसिद्धियாமையாலே अतार्थमुपपन्न மென்று கருத்து - ஆனாலும் स्वप्रवृत्तिनिवृत्तिः प्रषत्तिः என்று பொதுவிலே சொல்லியிருக்கையாலே पूर्वकालीनस्वप्रवृत्तिनिवृत्तिயிலும் प्रपत्त्यभेदोक्ति தோற்றுகையாலே அது கூடுமோ? पूर्वकालीनस्य प्रवृत्तिनिवृत्त्यंशं भरन्यास कार्यமல்லாமையாலே कार्यमुखेन कारणाभिव्यञ्जनं கூடாதே? किञ्च "तदेकोपायता याच्ना प्रपत्तिः - त्वमेवोपायभूतोमे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता" इत्यादावुपायत्वप्रार्थनायां

सा.प्र-एवंच श्रीराममिश्रोक्ताकिञ्चन्यस्य भरतमुन्युक्तोपायत्वप्रार्थनाया "आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते" इत्युक्तात्मरक्षाभरसमर्पणस्य च प्रत्येकं प्रपत्तित्वे अङ्गपञ्चकासिद्धेश्श्रीराममिश्रवाक्यस्य भरतमुनिवाक्यस्य आत्मात्मीयेत्यादि वाक्यस्य चैकार्थ्ये आवश्यके -

सा.वि- अकृतेत्विति - लोकवत्, लोक इदं धनं अस्मामापदि मामनपेक्ष्यत्वयैव रक्षणीयम् - तवैवायं भर इति न्यस्तभरस्स्वव्यापारान्निवर्तते - नत्वन्यः, न्यायवदिति भावः - एवं सति स्वप्रवृत्तिनिवृत्यंशः प्रपत्ति रिति श्रीराम मिश्रवाक्यस्य भरन्यासे कृते स्वयत्न विरतिर्यातस्यां तात्पर्यं ततश्च स्वव्यापारनिवृत्तिहेतुभूता-किञ्चन्यानुसन्धानमावश्यकमित्युक्तं भवति - स्वव्यापारत्याग भरन्यासयोर्व्याप्यिव्यापक भावलक्षण संबन्ध एवाङ्गित्वेन व्यपदेशहेतुः - 'तदेकोपायता याच्ना प्रपत्तिश्शरणागतिः "इति लक्षणे "अप्रार्थितो न गोपायेत्" इति प्रार्थनमन्तरेण समर्प्यमाणं भरं न स्वीकुर्यादिति आवश्यकाङ्गभूता दुपायत्व प्रार्थनाद्भरस्वीकारसिद्धिस्यादित्युपायत्व प्रार्थनाभरन्यासयोर्जन्यजनकभावोऽङ्गाङ्गिभावश्चाङ्गित्वेन व्यपदेशहेतुः । "आत्मात्मीयभरन्यास" इति लक्षणवाक्यंतु बहुमानानुसाराद्भूयसां न्यायात् स्वार्थतत्परमित्याकिञ्चन्य भरन्यासोपायत्व प्रार्थनात्मनां त्रयाणां सूक्ष्मं सौहृदं अङ्गित्वव्यपदेशनिमित्तान्तरङ्गसंबन्धं यः पश्यति स एव लक्षणत्रयस्यैककण्ठ्यं जानातीत्यभि प्रायेणाह-

सा.सं- अकृतेत्विति - मद्रक्षणभरस्तवैवेति भरन्यासे अकृते । रक्षापेक्षण मात्रतः, निरपेक्षरक्षकत्वप्रार्थनयैव - पश्चात्, भरन्यासानन्तरभाविनीलोकवत्, एतद्धनरक्षणभरस्तवैवेति योधनमर्पयति स एव तद्रक्षणरूपस्वव्यापारान्निवर्तते । न तद्विना कृतनिरपेक्षरक्षकत्व प्रार्थनयैवेत्यथः-ननु श्रीराममिश्रैः स्वप्रवृत्तिनिवृत्तिरूपनैर्भर्यात्मकाकिञ्चन्यस्यैवाङ्गितोक्ता - "न्यासः पञ्चाङ्ग संयुतः - आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते" इत्यादि सात्यकितन्त्रलक्ष्मीतन्त्राहिर्बुध्न्यसंहितादिषु भरनिक्षेप एवाङ्गि तयोक्तः-

मू - आकिञ्चन्य भरन्यासोपायत्व प्रार्थनात्मनाम् ।

सा.दी- स्वप्रयत्ननिवृत्तिகாணாகிறே आकिञ्चन्येति । आकिञ्चन्यं, उपायान्तराशक्तत्वम् - भरन्यासः, आत्मनिक्षेपः - भगवत्युपायत्व प्रार्थना என்னும் இம்மூன்றுக்கு - अधिकाराङ्ग्यङ्गங்களுக்கு என்றபடி.

सा.स्व - शरणागतित्ववादंதான் கூடுமோ? - उपायत्वप्रार्थनै भरन्यासकार्यமல்லாமையாலே कार्यमुखेन कारणाभिव्यञ्जनार्थமென்றும் கூடாதே? उपायत्वप्रार्थनमङ्गமல்லாமையாலே अङ्गप्राधान्यव्यञ्जनार्थ மென்று சொல்லவும் கூடாதே? என்னவருளிச்செய்கிறார் - आकिञ्चन्येति - आकिञ्चन्यं, स्वरक्षणार्थोपायान्तर प्रवृत्ति शून्यत्वम् - भरन्यासः, भरस्य, स्वरक्षणार्थोपायान्तररूपस्वव्यापार निवृत्तिरूप स्वत्याग पुरस्सर परस्वत्वापादनम् - उपायत्वप्रार्थना, ''என் தலையில் उपायान्तरத்தைச் சுமத்தாதே அவற்றைச் சுமந்தால் -

सा.प्र - आकिञ्चन्यानुसन्धानस्य प्रार्थनायाश्च वचनान्तरेणाङ्गत्वसिद्धेर्वाक्यि त्रयेऽपि व्याप्योक्त्या कारणोक्त्या स्वस्वरूपेण च भरन्यास एवोच्यते इति सूक्ष्मधियां प्रकाशेतेत्याह - आकिञ्चन्येत्यादिना - ''अप्रार्थितो न गोपायेत्'' इति सूचितं प्रार्थनायाः कारणत्वं प्रार्थितः परमपुरुषस्समर्पणं भरं स्वीकुर्यादिति ज्ञापनद्वारा भरसमर्पणे प्रवर्तकत्वादिति । उपायत्व प्रार्थनमिति गोप्तृत्ववरणमुच्यते - गोप्तृत्ववरणव्यतिरेकेणोपायत्व प्रार्थनाया-

सा.वि- आकिञ्चन्येति - केचित्तु ''अहमस्म्यपराधानामालयोऽकिञ्चनो गत्तिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः'' इत्याकिञ्चन्य निवेदनोपायत्व प्रार्थनयो रभावे त्वमेवोपायान्तरस्थाने निविश्य अकिञ्चनस्य ममतदुपायसाध्यमिष्टं साधय - रक्षाभरस्त्वयि निवेशितः - इतः पश्चादस्मद्यतननिरपेक्ष एव भवानिममर्थं साधयत्विति वक्तुमवकाशाभावात्तदुभयसहित एव भरन्यासोऽङ्गि गोप्तृत्ववरणमुपायत्व प्रार्थनादन्यदेवाङ्गभूतमिति तत्तल्लक्षण प्रतिपाद्यानामाकिञ्चन्यभरन्यासोपायत्व प्रार्थनात्मनां त्रयाणामङ्गि शरीरान्तर्गतत्वेनात्यन्त सन्निकर्षादङ्गिभूत भरन्यासनिष्ठप्रपत्तित्वेन व्यपदेशं सौहृदं चैकराश्यं यः पश्यति स एव प्रपत्तिशास्त्राभिज्ञ इति व्याचक्षते - अपरे तु ''अनन्यसाध्ये स्वाभीष्ट'' इति मुनिलक्षणानुसारेणोपायत्व प्रार्थनामात्रं नालम् -किन्तु भरन्यसनमपि तत्र प्रवेश्यमिति साङ्गप्रपदनाधिकारश्लोके ''अभीष्टे दुस्साध'' इति पूर्वार्धेन सूचयित्वा श्रीराममिश्रोक्त स्व -

सा.सं - ''त्वमेवोपायभूतो मे भवं'' सत्यादिषु भरतमुनिभिश्च उपायत्व प्रार्थनाया एव अङ्गितोक्ता - एवमुक्तिविषयता नियामकमाकिञ्चन्यादेः किं सौहृद मित्यत्र अस्ति सौहृदं, तच्च सूक्ष्मं, तद्द्रष्टाच यः कश्चित् देवेत्याह - आकिञ्चन्येति - न्यस्तभरेऽपि यदि निर्भरता न स्यात्तदापवनतनयब्रह्मास्त्र न्यायाद्भरन्यासोऽपि न स्कार्याय स्यात् । यदि शेषिणि भरमविन्यस्यैव निर्भरोऽहमिति भावयेत्तदातेनापि भरस्वीकरणाच्छेषिणोऽप्युपेक्षा विषय एव स्यात् - उपायत्वप्रार्थनान चेद्भरस्वीकरणप्रार्थनाविरहात् रक्षापेक्षाप्रतीक्षको भरन्यासमात्रेण भरं -

मू - त्रयाणां सौहृदं सूक्ष्मं यः पश्यति स पश्यति ।

सा.दी- सूक्ष्मं सौहृदम्, अन्योन्यमविनाभावः - स्थूलदृष्टिகளால் अनुपलभ्यमानत्वं सूक्ष्मत्वं यः पश्यति - अयमर्थः, எங்கே आकिञ्चन्यं சொல்லிற்று அவ்விடத்தில் भरन्यासप्रार्थनैகளும் வரும், எங்கே भरन्यासं சொல்லிற்று அங்கே इतरங்களுடைய सद्भाव முண்டு. எங்கே उपायत्वप्रार्थनै அங்கே -

सा.स्व- மேல் வரும் अभिमतं எல்லாந்தருகை समर्थकारुणिकனானவுனக்கே भरமாக வேரிட்டுக் கொள்ளவேணுமென்கை इति द्वयाधिकारोक्तप्रार्थनै - இந்த மூன்றுக்கும் स्वरक्षणार्थगुरुतर स्वव्यापारनिवृत्तिघटितमूर्तित्वं सूक्ष्मसौहार्दम् இதினாலே त्रयाणां प्रपत्त्यभेदनिर्देशम् - இத்தையறிந்தவனே उपायस्वरूपத்தையறிந்த வனென்று கருத்து - यद्वा, त्रयाणां सौहार्दमेकाधिकारिनियतत्वम् - इदं यः पश्यति स पश्यति என்று கருத்து - अत्रेदमवधेयम् - ''तदेकोपायता याच्ना - त्वमेवोपायभूतो मे भव'' इत्यादि वचनेषु भरन्यासपर्यन्त மென்னுமிடம் अवधारणसहकृतोपायशब्दத்தாலே व्यञ्जितमित्यत्रैव कथना त्तत्पूर्वमत्रैव ''भरतमुनिप्रणीतलक्षणवाक्य த்தின் படியே विश्वासपूर्वकं प्रार्थन மென்று निष्कर्षित्तது. இவ் वाक्यं தானும்'' इत्युपक्रम्य प्रार्थनैயும் अङ्गமாகையாலே ''रक्ष्यापेक्षां प्रतीक्षते'' என்கிறபடியே ईश्वरनपेक्षामात्रसापेक्षனென்று இவ்अङ्गத்தின் प्राधान्यத்தை विवक्षित्துச் சொன்னபடி யென்று गोप्तृत्व -

सा.प्र- अनिरूपणात् - पूर्वत्र ''இவ் अङ्गத்தின் प्राधान्यத்தை विवक्षित्துச் சொன்னபடி'' इतिवाक्ये ''तदेकोपायता याच्ना प्रपत्तिः'' इत्यनेन गोप्तृत्ववरणरूपाङ्गस्य प्राधान्यमुक्त -

सा.वि - व्यापारनिवृत्तिरपि भरन्यासानन्तरभाविनिर्भरत्वपर्यवसन्ना विवक्षितानतु भरन्यासात्प्रागपि तूष्णीं भावरूपेति ''इतः पश्चादस्मत्'' इत्युत्तरार्धेन स्फुटीकृतमाचार्यै - अस्मिन्नङ्गिस्वरूपे ''अहमस्म्यपराधाना मालयोकिञ्चनो गतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम्'' इति वरदाचार्यलक्षणानु सारेणाकिञ्चन्यमपि प्रवेशनीयमित्या हृत्यलक्षण चतुष्टयस्यापि ऐककण्ठ्यं सिद्धम् - इदं चाकिञ्चन्यं कर्मयोगादिभ्यो व्यावृत्तिरूपं प्रपदनप्राक्कालीनं ''अभीष्टदुस्साध'' इत्यंशेन व्यक्तम्प्रपदनानन्तरं स्वरक्षणार्थव्यापारेभ्यो भरन्यासादिभ्यो व्यावृत्तिरूपमाकिञ्चन्यंतु श्रीराममिश्रैस्स्वव्यापारनिवृत्तिरिति शब्दान्तरेण व्यवहृत्य स्वनिर्भरत्व पर्यवसन्नमन्यदेवोत्तरार्धेन व्यक्तम् - एवमाकिञ्चन्यद्वयक्रोडी कारादेर्वरदाचार्यश्रीराममिश्रलक्षणद्वयमपि सङ्गृहीतं भवति - ननु आधिकाररूपमाकिञ्चन्यमङ्गि शरीरे प्रवेश्यमिति कथमुच्यते - अधिकारातिरिक्तमेव ह्यङ्गिस्वरूपं वक्तुमुचितम् - किञ्च शेषशेषिभाव ज्ञानमुपायानुष्ठानात्प्रागेव शास्त्रजन्यमिति संप्रतिपन्नम् - शेषत्व ज्ञानमेव ह्यात्मनिक्षेपः तथाच शेषत्वज्ञानमेवाङ्गीति भवतामनभिमतमेव सिद्ध्येत् - किञ्च गोप्तृत्ववरणमङ्गमित्यविवादम् -

सा.सं - न स्वीकुर्यात् - एवं प्रत्येकं प्रत्येकं त्रयाणामप्यावश्यकत्वे तत्रोपायत्व प्रार्थना यदि भरन्यासविधुरास्यात्त दानिरर्थकशब्दरूपा सेति यक्ष्ये इत्युक्त्वोपरतस्येव -

सा.दी - மற்ற(வை)யவையும் வருமென்கைமுயன்று இவ் அர்த்தை எவனறிகிறான் அவனே प्रपत्तिशास्त्रार्थ-

सा.स्वा - वरणपरप्रमाणोदाहरणपूर्वकमभिधानाच्च एकशब्दोपायशब्दयोर्भरन्यास व्यञ्जनेन चारितार्थ्ये केवलप्रार्थनायां प्रपत्त्यभेदोक्तेः गोप्तृत्ववरणे अभिधोक्ति पर्यवसानेन रक्षकत्वप्रार्थनाप्रपत्ति श्शरणागतिरिति गोप्तृत्ववरणपरतया काचिद्योजनाद्वयाधिकारोक्तोपायत्व प्रार्थना पराकाचिद्योचना । तत्राद्य योजनायामङ्गप्राधान्य विवक्षा अभेदनिर्देशः - द्वितीय योजनायामाकिञ्चन्योकत्या कारिकोक्तसूक्ष्म सौहार्दकृतोऽभेद निर्देशः - स्वप्रवृत्तिनिवृत्तिः प्रपत्तिरित्येतदुत्तरकालीनस्वयत्ननिवृत्तिपरं चेद्भरन्यासकार्यत्व कृतोऽभेदनिर्देशः भरन्यासव्यञ्जकः । पूर्वकालीनाकिञ्चन्य परं चेत्सौहार्दकृतोऽभेदनिर्देशः - प्रपत्तिर्विश्वास इत्यभेदेननिर्देशस्तु प्राधान्यकृत इत्याकार एव स्पष्टमिति -

सा.प्र - मित्युक्तत्वाच्च - सौहृदं, स्वरूपभेदेऽप्यासक्त्यतिशयसिद्धमैक्यमित्यर्थः - स्वोक्ते संमतिमाह -

सा.वि - तच्चोपायत्वप्रार्थनान्नातिरिच्यत इति कथमङ्गस्य तस्याङ्गित्ववाद इत्यत आह - आकिञ्चन्यभरन्यासेति - अयमर्थः, आकिञ्चन्यं स्वरूपसदधिकारिविशेषणम् - अनुसन्धीयमानं सदङ्गिशरीरेऽपि निवेश्यताम् - एकस्यैव स्वरूपसत्वानुसंहितत्वभेदेन द्व्यात्मकत्वाभ्युपगमेकाहानिः - यद्यप्याकिञ्चन्यानुसन्धानस्य कार्पण्यरूपत्वेन आत्मनिक्षेपकार्पण्य इति कार्पण्यस्याङ्गत्वादङ्ग्यंत र्भावोक्तिर्न घटते - तथापि तस्याकिञ्चन्यानुसन्धानमूल गर्वहानिर्वा कृपाजनककृपणवृत्तिर्वा कार्पण्यमङ्गं स्यात् - तस्य प्रयोजनं कृपोत्तम्भनम् - तथाचोक्तम् ''परिकरविभागाधिकारे'' அதடியாக வந்த गर्वहानि யாதல் कृपाजनककृपणवृत्तिயாதல்'' इति - अत्र भरन्यास शब्देन भरन्यासांश भूतात्मसमर्पणं विवक्षितम् - यद्यपि शेषत्वज्ञानं शास्त्रादेव जातम् - तदेवात्मनिक्षेपरूपं च - तथापि शास्त्रजन्यं शेषत्वज्ञानं सर्वस्यापि कारणमन्यदेव - इदं तु शेषत्वज्ञानं रक्षाभरसमर्पणविशिष्टवेषेणाङ्गपञ्चकान्वितत्व वेषेण चाङ्गि स्वरूपेऽप्यन्वेति - उपायत्ववरण गोप्तृत्ववरणयोश्च स्फुट एव भेदः - उपायत्वस्य चेतनाचेतन साधारणत्वाद्गोप्तृत्वस्य चेतनैकान्तत्वात् अतस्त्रयाणामङ्गि स्वरूपानुपविष्टानां स्वस्वप्रति संबन्धिभिरधिकारगताकिञ्चन्य शास्त्रजन्यशेषत्वज्ञानगोप्तृत्ववरणैस्सह सौहृदमानुकूल्यं तदपेक्षया एतानि भिन्नानि तेषां तदानुकूल्यमिति यः पश्यति स एव पश्यति वेद - कुशल इत्याहुः - सर्वलक्षण वाक्योपसंहारेण निष्पन्नमाचार्याणामनुष्ठानप्रयोगवाक्यमिदम् - ''न्यस्याम्यकिञ्चनश्श्रीमन्ननुकूलोऽन्य वर्जितः । विश्वासप्रार्थनापूर्वमात्ममरक्षाभरं त्वयि -

सा.सं- प्रत्युपायो फलालाभश्च स्यात् । एवमेकैकवैधुर्ये द्वयोर्द्वयोरप्यकिञ्चित्करताद्वयोर्द्वयोरपि वैधुर्ये एकैकस्यापीति तेष्वेकतरवैधुर्येऽपि भगवान् फलायनोपायान्तरस्थाने निविशत इति त्रयाणामपि स्वरूपफलनिक्षेपयोरिव अङ्गिकोट्यन्वितत्वेन सौहृदमभिप्रेत्य सूक्ष्मं यः पश्यति स पश्यतीत्यनुग्रहीतम् - पूर्वं प्रमाणेषु भूयसां न्याय उक्तः - संप्रदायेऽपि भूयसां -

मू- இப்படி अङ्गपञ्चकसंपन्नமான आत्मरक्षाभरन्यासமே प्रपत्तिशास्त्र மெல்லாவற்றிலும் प्रधानविधेय மென்று श्रीविष्णुचित्तवादिहंसाम्बुवाइवरदाचार्यादिகள் सङ्ग्रहिத்தார்கள் - இவ்விடத்திலே சிலர் शास्त्रार्थतत्त्वं தெளிந்தபோதே शेषत्वानुसन्धानं பண்ணினானன்றோ? "स्वोज्जीवनेच्छयादितेस्व सत्तायां स्पृहायदि । आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदास्मर" என்றதுவும் परमपुरुषार्थ तदुपायங்களை வேண்டியிருந்தா யாகில் நீ दासवானாய் ईश्वरன் स्वामिயாய் இருக்கிறது स्वभावसिद्धமென்று तत्त्वத்தில் தெளிவோடே -

सा.दी - மறிந்தவனென்கை - श्रीविष्णुचित्तர், எங்களாழ்வான் - वादिहंसांबुवाहர், அப்புள்ளார் वरदाचार्यர், நடாதூர் பெரியம்மாள். இனி शेषत्व ज्ञानमात्रமே प्रपत्तिயென்னும் पक्षத்தை अनूद्य परिहरिக்கிறார் - இவ்விடத்திலே சிலர் इत्यादिயால் -

सा.स्व - गोप्तृत्ववरणादिकमङ्गமானாலும் उपायत्वप्रार्थनै अङ्गिயென்றும், अङ्ग्येकदेशமென்றும், षष्ठाङ्गமென்றும், சிலர் சொல்லுகையாலே இது संप्रदायविरुद्ध மன்றோ? என்னவருளிச் செய்கிறார் - இப்படி इति सत्संप्रदायमूल மாகையாலே अङ्गपञ्चकान्वित भरन्यासமே प्रपत्ति शास्त्रार्थ மென்று கருத்து. श्रीविष्णुचित्तர், श्रीभाष्यकारருக்கு विशिष्यராய்ப் பெரிய அம்மாளுக்கு आचार्य ரான எங்கலாழ்வான். वादिहंसांबुवाहர், அப்புள்ளார், वरदाचार्यர் பெரியம்மாள் - आदिशब्देन श्रीपराशरादि भट्टार्यादिग्रहणम् । இனி शास्त्रजन्य शेषत्वज्ञान மொழிய विधेयமாயொரு ज्ञानமில்லையென்கிற पक्षத்தை अनुवदिக்கிறார் - இவ்விடத்திலே சிலர் इति - शेषत्वं தெளிவானாலும் स्वोज्जीवनेत्यादिना दासत्व स्वामित्वानुसन्धानातिरिक्तமாக विधेयமில்லையோ? என்னவருளிச் செய்கிறார் - स्वोज्जीवनेति - இந்த वचनத்துக்கு पूर्वपक्षानुगुणமாக अर्थமருளிச்செய்கிறார். परमपुरुषार्थेति । இந்த वचनத்தில் स्वोज्जीवनेच्छापदं परमपुरुषार्थरुचिपर மென்றும் स्वसत्त पदं तदुपायपरமென்றும் கருத்து - चकारத்தை स्वाम्यञ्च என்கிறவிடத்திலே अन्वयिப்பது இத்தை-

सा.प्र- अङ्गपञ्चकेत्यादिना - सङ्ग्रहिத்தார்கள், प्रपन्नपारिजातादिप्रबन्धेष्वित्यर्थः - एवं भरन्यासस्वरूप विषयव्यामोहं निवर्त्य तस्य कर्तव्यत्वविषयव्यामोहं निवर्तयितुमस्यानपेक्षिततत्त्वं वदतां पक्षं सोपपत्तिकमनुवदति இவ்விடத்திலே इत्यादिना - स्वोज्जीवनेति - उज्जीवनम्, उत्कर्षेण जीवनम् - शेषभूतस्य शेष्यतिशयोत्पादनपूर्वकं जीवनम् - कैङ्कर्यरूप

सा.वि- एवं स्वरूपविषयशङ्काः परिहृस कर्तव्यत्वविषयशङ्कां परिहर्तुं केषाञ्चित् पक्षमनुवतति - இவ்விடத்திலே इत्यादिना - தெளிந்தபோதே, ज्ञानसमय एव பண்ணினானன்றோ, कृतवान्न किम् வேண்டியிருந்தாயாகில், अपेक्ष्यैव तिष्ठसि चेत् - तत्त्वத்தில் தெளிவோடே, तत्त्वज्ञानेन वर्तस्व -

सा.सं - न्यायोऽस्मत्पक्षेऽस्तीत्याह । இப்படி इति - अथ शेषत्वज्ञानव्यतिरेकेण समर्पणस्य विधेयत्वमनभ्युपगच्छतां मतं दूषयितुमनुवदति । இவ்விடத்திலே इति - अङ्गिनिर्धारणप्रस्ताव इत्यर्थः। उज्जीवनं, संसारोन्मोचनं - सत्ता, मोक्षोपायज्ञानवत्ता - तस्यां स्पृहा, ज्ञानवान् भूयासमितिरूपा । स्वस्वभाव भूतं दास्यम् - परस्वभावभूतं स्वाम्यं च यावच्छरीरपातं स्मरेत्यर्थः । -

मू- वर्ति யென்றபடியன்றோ? ஆனால் (ஆகையால்) இப்போது आत्मसमर्पणं என்றொரு विधेय முண்டோ வென்று சொல்லுவர்கள் - இ(அ)துவும் वाक्यजन्यज्ञानमात्रத்தாலே मोक्ष மென்கைபோலே अनादरणीयम् । ''जितकौस्तुभचौर्यस्य सम्राजस्सर्वपाप्मनाम् ।

सा.दी - अविधेयज्ञानवादத்தில் उपासनविधिवैयर्थ्यं போலிங்கு प्रपत्तिविधिवैयर्थ्यं வருமென்கை - स्वरक्षाभरन्यासமே आत्मापहारपापத்துக்கு प्रायश्चित्तत्वेन शास्त्रத்தில் विधिக்கபட்டது, शेषत्वज्ञानमात्र மன்று, என்னுமிவ் अर्थद्वयத்தை कारिकाद्वयத்தால் सङ्ग्रहिத்துக்காட்டுகிறார் - जितेत्यादि - जितकौस्तुभचौर्यस्य, कौस्तुभचौर्यத்திலும் आधिकமானவென்கை. सर्वपाप्मनां संम्राजः,

सा.स्वा- निराकरिக்கிறார். जितेति - जितं, कर्तरि कतः - जितकौस्तुभचौर्यं यस्यस्वात्मचौर्यमेव स्वात्माधिष्ठातृश्रीकौस्तुभचौर्यतया निगीर्यकौस्तुभचौर्यंபண்ணி अनुतापமில்லாமல் जितमस्माभिः என்று हृष्टमनस्कताजनकत्वमेव जितत्वं என்றபடி - तस्य पुंसः - अत एव सर्वपाप्मनां संम्राजः, श्रेष्ठस्य - आत्मापहार विशेषणम् - 'किं तेन न कृतं पापं चोरेणात्मापहारिणा'' என்றதிறே यद्वा, जितं कौस्तुभचौर्यं येन । कौस्तुभचौर्याधिकस्वात्मचौर्यस्येत्यर्थः - पुंसः - आत्मापहारस्य निष्कृतिः प्रायश्चित्तत्वेन स्वभरार्पणं-

सा.प्र - पुरुषार्थवैशिष्ट्येन जीवनमित्यर्थः - एवमनूदितव्यामोहनिवर्तन प्रकारमाह அதுவும் इत्यादिना - संबन्धज्ञानमात्रस्य मोक्षहेतुत्वे शास्त्र श्रवणवेलायामेव तस्य सिद्धत्वात् ''बुद्धेः क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धं बुद्धे चेत् क्षेम प्रापणमिहैव दुःखमनोपलभेत'' इत्युक्ततवाक्यजन्यज्ञान मोक्षहेतुत्वबाधवत्संबन्धज्ञानोत्तरक्षण एव मोक्षप्रसङ्गेन प्रत्यक्षादिबाधात्तदनुपपन्नमिति भावः । गर्भदासेन रत्नादापहृते स्वामिना तस्मिन् ज्ञाते तत्पुनः प्रदाय क्षामणाकरणे संबन्धानुसन्धानेऽपि दण्ड एव यथा स्यात्तथा आत्मापहारनिमित्त निग्रहनिवृत्त्यै विहित भरन्यासाननुष्ठाने संसारनिवृत्तिरेव न स्यादित्यभिप्रयन्नाह - जितकौस्तुभचौर्येस्ये त्यादिना -

सा.वि - என்றபடியன்றோ, एतावन्मात्रं न किं - कर्तव्योपायानुष्ठानपरं न भवति खल्वित्यर्थः - गर्भदासेन रत्नादापहृते स्वामिना तस्मिन् ज्ञाते तत्पुनः प्रदाय क्षामणाकरणे संबन्धानुसन्धानेऽपि दण्ड एव यथा स्यात्तथात्रापि भरसमर्पणाकरणे संबन्धमात्रानुसन्धाने दण्ड एव स्यात्यद्यप्यत्रापि संबन्धानुसन्धानं अहमात्मा तवैव नममेत्याकारकं स्वरूप समर्पणं भवति - तथापि साङ्गभरन्यासात्मकं न भवतीति आत्मापहार निमित्तनिग्रहनिवृत्तिहेतुत्वेन चोदितस्य तस्याकरणे निग्रहनिवृत्तिर्न स्यादित्यभिप्रायेणाह - जितेति - जितं कौस्तुभचौर्यं येन स तथोक्तः - तस्य कौस्तुभादपि जीवस्य कैङ्कर्यकारित्वेनानन्दावहत्वात्तदपहारेः कौस्तुभाप हाराधिक इति भावः । आत्मापहारो नाम, अहं ममेति ज्ञानं ''किं तेन न कृतं पापं चोरेणात्मापहारिणा'' इति -

सा.सं - अनादरणीयता बीजं संगृह्णाति - जितेति - निरतिशयभोग्यत्वेन ब्रह्मानुभवितृत्व प्रत्युक्ताभ्यां कौस्तुभादप्युत्कृष्टमात्मानं अहं ममेति यो अपहरति स कौस्तुभचोरादप्यधिक इति जितकौस्तुभचौर्यः । तस्य - सर्वपाप्मनां महापातकिनामपि । सम्राजः, अधिपतेः यो य -

मू - शिष्टं ह्यात्मापहारस्य निष्कृतिस्स्वभरार्पणम् । परशेषत्वधीमात्रमधिकार विशेषकम् ।

सा.दी- सर्वपापங்களுக்கும் अधिराजனான आत्मापहारத்துக்கு - आत्मापहारமாவது, தன்னை स्वतन्त्रனாக நினைக்கை - स्वभरसमर्पणं, स्वरक्षाभरसमर्पणமே निष्कृतिः என்று उपदिष्टम् - परेति भगव -

सा.स्वा - शिष्टम्, विहित மென்றபடி यद्वा, जितं कौस्तुभचौर्यं यस्य कौस्तुभचौर्यादधिकस्य - सर्वपापश्रेष्ठस्यात्मापहारस्येत्यन्वयः । अस्मिन् पक्षे पुंस इति पदमध्याहार्यम् - अन्यथा स्वभरार्पणमित्यन्वयः - मामेकं शरणं व्रज'' என்று - विधिविरोधமிங்கு வருமென்று கருத்து. आत्मदास्यमितिप्रमाणविरोधं வாராதோ? என்னவருளிச்செய்கிறார் - परशेषत्वेति । शास्त्रजन्य परशेषत्व -

स.प्र- भरन्यासात्प्रतिबन्धनिवृत्तिश्चेच्छेषत्वज्ञानवैय्यर्थ्यं स्यादित्यत्राह - परशेषत्वेति काम्यमान भगवदनुभस्य कैङ्कर्यपर्यन्तत्वरूप विशेषणे भविष्यादात्मापहारोत्पत्तिप्रतिबन्धेच -

सा.वि- सर्वपापाधिकत्वात् - सर्वपाप्मनां, सर्वपापानां - संम्राजः, अधिराजस्य - उत्तमस्येति - द्वयमप्यात्मापहारविशेषणम् - आत्मापहारस्य निष्कृतिर्निवर्तकं स्वभरार्पणम् - शिष्टं विहितं जीवस्येति शेषः - यद्वा, ''जिजय'' इत्यस्यात् धातोरकर्मकात्कर्तरिक्तः - जीवः कौस्तुभत्वेनाध्यवसितः - जितं सर्वोत्कृष्टं कौस्तुभचौर्यमात्मापहारचौर्यं यस्य स तथोक्तः - अत एव सर्वपाप्मानं समस्त पापवतां संम्राजो मूर्धाभिषिक्तस्य संबन्धिनः आत्मापहारस्य निष्कृतिः स्वभरार्पणं शिष्टमिति - यथामहाराजधार्यमाणे रत्नेऽपहृतेन तत्प्रत्यर्पणमात्रेणैव निग्रह निवृत्तिः - किंतु तस्य सर्वस्वहरणेन - तद्वदत्र न केवलात्मसमर्पणरूपशेषत्वज्ञानेनैव निग्रह निवृत्तिः - किन्त्वात्मीय भरसमर्पणेनेति ध्वनितम् - भक्तानां तु समर्थत्वादात्म प्रत्यर्पणपूर्वकं निरन्तरभजनमातुरस्य क्षीरसेवनमिव प्रायश्चित्तं विहितम् - इहत्वशक्तत्वात् - राजाभरणमपहृत्यवेश्याधीनं कुर्वतो राजकुमारस्य पुनः प्रत्याहरण पूर्वकं राज्ञा निर्व्यापारं स्वसन्निधौ स्थापनमिव अकिञ्चनस्य आत्मप्रत्यर्पण पूर्वकं स्वयत्ननिवृत्तिपर्यन्तरक्षाभरार्पणं कृपाविष्टतया तदीय दैन्यानुरोधेन प्रायश्चित्तं विहित मिति विवेकः - अतोवश्यं निग्रह निवृत्त्यर्थं भरार्पणं कर्तव्यमिति तात्पर्यम् - ननु कृपाविशिष्टत्वे तदपि किमर्थं विधेयमिति चेन्न - वैषम्यप्रसङ्गात् - व्याजस्यापेक्षणीयत्वादिति न किञ्चिदेतत् - तर्हि शेषत्वज्ञानस्य शास्त्रमूलकस्य किं प्रयोजनमित्यत आह - परशेषत्वेति - अधिकारिविशेषणमिति - शेषत्वज्ञानाभावे उपाय प्रवृत्त्यसम्भवादिति भावः -

सा.सं - मात्मापहारस्तस्य - आत्मापहारोऽत्र स्वपरात्मतत्वान्यथाज्ञानविपरीत ज्ञानरूपः तस्य निष्कृतिरिति, प्रायश्चित्तमिति - स्वभरार्पणंहि शिष्टम्, विहितम् - स्वात्मनो रक्षाभरस्य फलस्य चार्पणं हि ''मामेकं शरणं व्रज'' इत्यादिना शिष्टमित्यर्थः - एवं च शेषत्वज्ञानमात्रस्य निष्कृतित्वे व्रजेति विधानानुपपत्तिरेव तन्मतानादरणीयत्वे बीजमिति भावः - नन्वेवं ''स्वोज्जीवनेच्छा'' इत्यादि शास्त्रव्याकोपस्स्यादित्यत्राह - परेति - मात्रपदेन भरन्यासादिविना कृतत्वं विवक्षितम् - भक्तौ भरन्यासे चाधिकारिणां नित्यकैङ्कर्यकामना स्वर्गादिकामनावद्यागाद्यधिकारिण स्सकाशा -

मू - पश्चादात्मापहारस्य निरोधाय च कल्पते ।। शेषत्वादि विशिष्टமான आत्मतत्त्वத்தை शात्रத்தாலே தெளிந்தவனுக்கு अधिकारविशेषத்தோடும் परिकरविशेषத்தோடும், फलसङ्कल्पविशेषத்தோடும், கூடின शेषत्वप्रति सन्धानगर्भமான स्वरक्षाभरन्यासமிறே अनाद्यपराधमूलनिग्रहनिवृत्तिக்கு उपायமாக विधिக்கப்படுகிற आत्मसमर्पणम् -

सा.दी - च्छेषत्वज्ञानं प्रपत्तिकर्तुः पूर्वं तदधिकारकोटिनिविष्टமாய் पश्चादात्मापहारादिदोषं வாராமைக்கு முறுப்பாம் - आदिकारिकैயினுடைய अर्थத்தை विशदीकरिக்கிறார் - शेषत्वादीति -

सा.स्वा - धीमात्रवधिकारकोटिनिविष्टं सत्पश्चादात्मापहारस्य भरन्यास निष्पत्ति द्वारा निरोधाय च प्रभवति என்றபடி - இப்படி शेषत्वज्ञान मधिकारकोटि निविष्टं सदुपकारक மென்றால் "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्" என்று अङ्गितया आत्मसमर्पणविधि विरोधिயாதோ? என்ன उक्तकारिकैயை विवरिக்கிறார் - शेषत्वादीति - अधिकारेति - आकिञ्चन्याद्यधिकारத்தோடு மென்றபடி - परिकरेति - आनुकूल्यसङ्कल्पादि परिकरத்தோடுமென்றபடி - सङ्कल्पविशेषेति - मोक्षरूपपरमपुरुषार्थसङ्कल्पத் தோடுமென்றபடி. शेषत्वेति । तेन संरक्ष्यमाणस्य फले स्वाम्य वियुक्ता । केशवार्पण-

सा.प्र- शेषत्वज्ञानमुपयुक्तमित्यर्थः - ननु "स्वात्मानं मयि निक्षिपेत् - मयिनिक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति" इत्यात्मसमर्पणस्यैव समस्तप्रतिबन्धकनिवर्तकत्वोक्तेः कथं भरसमर्पणस्य प्रतिबन्धकनिवर्तकत्वोक्तिरित्यत्र "आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यत" इत्यादि प्रमाणान्तरानुगुण्यात्समस्त प्रतिबन्धकनिवर्तकतयोक्तात्मनिक्षेपो भरसमर्पणमेवेत्याह - शेषत्वादि विशिष्ट மான इत्यादिना - अधिकारविशेषத்தோடும் इति - आकिञ्चन्यरूपाधिकारविशेषेणेत्यर्थः - फलसङ्कल्पविशेषத்தோடும் इति - भरन्यासफलं भगवत एवेति सङ्कल्पविशेषेणेत्यर्थः விதிக்கப்படுகிற इति - "मुमुक्षुर्वैशरणमहं प्रपद्ये -

सा.वि - नन्वात्मापहारस्य प्रायश्चित्तमात्मसमर्पणं - तच्च शेषत्वादि ज्ञानमेवेति तथापि कथं विधेयत्वं ज्ञानस्य पुरुषकृत्य साध्यत्वादित्यत आह - शेषत्वादीति - अधिकारविशेषத்தோடு - आकिञ्चन्येन सहेत्यर्थाः - यागस्य ज्ञानरूपत्वेऽपि तस्याङ्गविशिष्टवेषेण कृति साध्यत्वाद्विधेयत्ववदुपासनस्य -

सा.सं- द्विशेषयतीत्यधिकारविशेषकमित्युक्तम् - पश्चात्, भरन्यासानन्तरंनिरोधाय, अनुत्पादाय - कल्पते, समर्थं भवति । तथावशेषत्वज्ञानस्योपायाप्रगधिकारसंपादनं पश्चादात्मापहाराद्यपराधस्य निरोधनं चेतिद्वयं प्रयोजनमिति न तत्परशास्त्रव्याकोप इति भावः - संगृहीतं विवृणोति - शेषत्वादिति - आदिशब्देन परतन्त्रत्व स्वयं प्रकाशत्वनित्यत्वादि मुमुक्षुवेद्याकारवर्गसंग्रहः - शास्त्रத்தாலே தெளிந்தவனுக்கு इत्यनेनाविधेयत्वं शेषत्वज्ञानस्य सूचितम् - प्रपत्तेरपि तद्वदविधेयत्व शङ्कावारणायाह - अधिकारेत्यादिना - अधिकारविशेषः आकिञ्चन्यानन्य गतित्वरूपः - परिकरविशेषः, आनुकूल्यसङ्कल्पादिस्सात्वि कत्यागश्चफलसङ्कल्पविशेषः, स्वाभीष्टकाले मोक्षो मे भूयादित्यादिः । आत्मसमर्पणस्य शेषत्वप्रतिसन्धानरूपत्वाच्छेषत्व प्रतिसन्धानगर्भமான - इत्युक्तिःभरन्यासமிறே - इति - अन्यथैकशब्दानु विद्धशरणशब्दोपश्लिष्ट क्रियाविधान -

मू - तत्त्वज्ञानத்தாலே मोक्षமென்கிறவிதுவும் ஒரு उपायानुष्ठानத்தை முன்னிட்டென்னுமிடம் "भजस्व - मामेकं शरणं व्रज" इत्यादि विधिबल प्राप्तम् - ज्ञानान्मोक्षोपदेशे (शो) हि तत्पूर्वोपासनादिना ।

सा.दी - तत्वज्ञानान्मोक्षமென்கையாலே शास्त्रजन्यशेषत्वस्वरूपज्ञानमात्रेणमोक्षமாக வேண்டாவோ? என்னவருளிச்செய்கிறார் - तत्त्वज्ञानத்தாலே इत्यादि - இது शास्त्रजन्यतत्त्वज्ञानமாகில் उपायविशेषानुष्ठानद्वारा मोक्षकारण மென்றபடியாய் - அல்லவாகில் भक्तिप्रपत्ति शास्त्रवैय्यर्थ வருமென்று கருத்து - ज्ञानान्मोक्षः என்கிற वचनத்தின் तात्पर्यத்தை कारिकैயால் सङ्ग्रहिக்கிறார் - ज्ञानान्मोक्षेति - तत्पूर्वो -

सा.स्व- पर्यन्ता ह्यात्मनिक्षेप उच्यते "इत्यादिप्रमाणबलத்தாலே என்றபடி - तत्त्वज्ञानान्मोक्षः என்று शास्त्रங்களிலே प्रतिपादिக்கையாலே शास्त्रजन्यशेषत्वज्ञानान्मोक्ष மென்ன வேண்டாவோ? என்னவருளிச் செய்கிறார் - तत्त्वज्ञानेति - तत्त्वज्ञानान्मोक्षமென்கிறவிடத்திலே तत्त्वज्ञान शब्दं शास्त्रजन्यज्ञानपरமாகில் विधिविरोधத்தாலே भक्त्यादि द्वारा मोक्ष हेतुत्वपरமென்று கருத்து. परम्परा साधनत्वपरत्वे शब्द स्वारस्यभङ्ग வாராதோ? என்ன योजनान्तर மருளிச்செய்கிறார் - ज्ञानादिति - अत्र उपदेश इति सप्तम्यन्तः पाठः - तत्पूर्वोपासनादिना, भजस्वेत्यादि विध्यनुसारेण मोक्ष इति वा -

सा.प्र- ओमित्यात्मानं युञ्जीत - ब्रह्मणो महिमानमाप्नोति - मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि" इत्यादिषु समस्त प्रतिबन्धक निवर्तकतया च विधीयमानमित्यर्थः । ननु "ज्ञात्वादेवं मुच्यते सर्वपाशैः ब्रह्मवेद ब्रह्मैव भवति" इत्यादिभिर्ज्ञानमात्रान्मोक्षोक्तेः शेषत्वज्ञानव्यतिरेकेण भरन्यासो न पेक्षित इत्यत्र उपासनादि द्वारा हेतुत्वाभिप्रायेण वा, ज्ञानवाचिशब्दस्योपासनादिरूपज्ञानपरत्वाद्वा, तथोक्तिरन्यथोपासन भरन्यासविधिवैय्यर्थ्यमित्यभिप्रयन्नाह । तत्त्वज्ञानेत्यादिना । एवं शेषित्वज्ञानमात्रस्य-

सा.वि - ज्ञानरूपत्वेऽपि स्वाङ्गविशिष्टवेषेणविधेयत्ववदात्मसमर्पणस्यापि विधेयत्वं संभवति - संबन्धज्ञानमात्रस्य तु "दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः" इत्यादिवाक्य श्रवणमात्रसाध्यत्वेन कृत्यसाध्यत्वाद्विधेयत्वं न संभवतीति" आत्मानं युञ्जीत - आत्मानं मयि निक्षिपेत् "इति प्रपत्ति विधिविधेयत्वं नास्तीति वैषम्यमिति भावः - "पृथगात्मानं प्रेरितारं चमत्वाभोक्ता भोग्यं प्रेरितारं च बत्वा, जुष्टस्ततस्तेनामृतत्वमेति" इत्युक्तं तत्त्वज्ञानस्य मोक्षसाधनत्वं भजस्वेत्यादि विहितोपासनादि द्वारैव अन्यथा तद्विधिवैषम्यर्थात् -"अनुविद्यविजानाति - विज्ञाय प्रज्ञां कुर्वीत" इत्यादि विशिष्य विधानाच्च संबन्धज्ञानस्य न साक्षान्मोक्षहेतुत्वमित्यभिप्रयेणाह । तत्त्वज्ञानத்தாலே इति । ज्ञानान्मोक्ष इत्यस्य द्वेधाप्युपपत्तिमाह - ज्ञानान्मोक्षोपदेशोहीति ।

सा.सं - नैरर्थक्यमिति भावः - ननु "ब्रह्मविदाप्नोति परम् - क्षेत्रज्ञस्येश्वरज्ञानात्" इत्यादीनां का गतिरित्यत्राह - तत्त्वज्ञानத்தாலே इति । अन्यथा ज्ञानविशेषविधायकानां निरर्थकता स्यादित्यर्थः - ननु "ज्ञात्वादेवम्" इत्याद्युपदेशसद्भावाच्छेषत्वज्ञानमेवालं मोक्षायेत्यत्राह । ज्ञानादिति द्वाराद्वारिभावेन निर्वहि मोक्षकारणत्वं शास्त्रजन्य ज्ञानस्यैवायतमिति योमनुतेतं -

मू - उपासनादिरूपाद्वाज्ञानान्मोक्षो विवक्षितः ।। शास्त्रजन्यமான शेषत्वज्ञानमात्रं निवृत्ति धर्मங்களான न्यासोपासनादिகளெல்லாத்துக்கும் பொதுவாயிருக்கும் - शेषवृत्तिरूपமான कैङ्कर्यமே मुमुक्षुவுக்கு पुरुषार्थकाष्ठैயாகையாலே शेषत्वமறியாதே मोक्षोपायं अनुष्ठिக்கை घटिயாதிறே -

सा.दी - पासनादिना, ज्ञानपूर्वकोपासनादिயால் मोक्षமென்னுதல் - उपासनादिरूपाद्वाज्ञानात् - ज्ञानशब्दத்தால் उपासनादिरूपज्ञानविशेषं विवक्षितமாதலாம். किञ्च शेषत्वज्ञानमात्रं निवृत्तिधर्मங்களெல்லாத்துக்கும் பொதுவாகையால் साक्षान्मोक्षोपायமாகமாட்டாதென்று भावம் - இத்தையே उपपादिக்கிறார் - शेषवृत्तीत्यादि - शेषत्वज्ञानाभावத்தில் शेषवृत्तिरूपफलज्ञानமில்லை யாகையால் मोक्षोपायानुष्ठानं घटिயாதென்று கருத்து - ननु शेषत्वज्ञान மில்லாமலும் निवृत्ति-

सा.स्वा - तत्त्वज्ञान परस्य सामान्यपदस्य उपासनादिज्ञानपरत्वमङ्गीकृत्य उपासनादि रूप तत्त्वज्ञानान्मोक्ष इति वा विवक्षितोऽर्थ इतिभावः ஆனாலும் "स्वोज्जीवनेच्छायदिते" என்கிற वचनத்திலே शेषत्वज्ञानமே - मोक्षहेतुவென்று தோற்றுகையாலே அது उपासनादिகளிலே शेषत्वज्ञानमनुपयुक्तமாகையாலே तद्वारा मोक्षहेतुत्वपरமென்று சொல்லவொண்ணாமையாலே साक्षान्मोक्षहेतुशेषत्वज्ञानமென்று अङ्गीकरिக்க வேண்டாவோ? என்ன அந்த वचनं शास्त्रजन्यज्ञानपरமோ? विधेयज्ञान परமோ? என்று विकल्पिத்து आद्यपक्षத்தை निरसिக்கிறார் - शास्त्रेति - निवृत्तीतिसात्विकत्याग युक्तधर्मமே - निवृत्तिधर्मமாகையாலே शेषत्वज्ञानमूल सात्विकत्यागं शेषत्वज्ञानसापेक्षமென்று கருத்து- फलाभिसन्धि रहितधर्मत्वं निवृत्तिधर्मत्वமாகில் - शेषत्वज्ञानमुपासनादावुपयुक्तமாகக் கூடுமோ? என்னவருளிச் செய்கிறார் - शेषवृत्तीति - किङ्करवृत्तिरूप पुरुषार्थसिद्ध्यर्थं सङ्कल्पिத்து - तदुपायानुष्ठानं घटिயாதென்று கருத்து - இப்படி शेषत्वज्ञानमुपासनादि द्वारा मोक्षहेतुरित्येतत्परं स्वोज्जीवनेत्यादिवचनமென்னில் शेषत्वज्ञानமன்றிக்கே - "स्वल्पमप्यस्य -

सा.प्र - मोक्षहेतुत्वे प्रत्यक्षबाधं साङ्गमोक्षोपायविधिवैयर्थ्यं चोक्त्वा तस्य निवृत्तिधर्ममात्र साधारण्याच्च न प्रपत्तित्वमित्याह - शास्त्रजन्यமான इत्यादिना - निवृत्तिधर्मे मुमुक्षूणामेव प्रवृत्तेः कैङ्कर्यपर्यन्तमोक्षेच्छायाश्च विशेषणभूत किङ्करत्वज्ञानसापेक्षत्वाच्छेषत्वज्ञानं कर्मयोगादि निवृत्तिधर्ममात्र साधारणमित्यर्थः - ननु शेषत्वज्ञानाभावेऽपि देशवासनामकीर्तनादेरनुष्ठाने क्रमेण भक्तिद्वारा मोक्षस्स्यादिति न शेषत्वज्ञानस्य भक्तिसाधारण्य -

सा.वि - तत्पूर्वोपासनादिना । ज्ञानपूर्वकोपासनादिना । उपासनादीत्यादि शब्देन प्रपत्तिसङ्ग्रहः - उपासनात्मकज्ञानद्वेति द्वेधाप्युपपत्तिरिति भावः - शेषत्वज्ञानस्योभयोरुपकारकत्वमाह - शास्त्रजन्येति - तदुपयोगप्रकारमाह - शेषत्ववृत्तिरूपமான इति ।

सा.सं - प्रति न्यायानुगृहीतं निर्वाहमाह । उपासनादिति । तर्ह्युपासनादिभिरेव परमपुरुषार्थसिद्धौ किमिहशेषत्वज्ञानगर्भत्वोक्तेरित्यत्राह शास्त्रेति । अनेनोपकृतिः का? येन निवृत्तिधर्मित्व प्रयुङ्क्तता स्यादित्यत्राह - शेषवृत्तीति - अस्य व्यतिरेकव्यभिचारं परिहरति ।

मू - शेषत्वज्ञान மன்றிக்கே मोक्षार्थமாக विधित्त धर्मங்களை अनुष्ठित्தானாகிலும் इत् धर्मங்கள் தானே शेषत्वज्ञानத்தையும் உண்டாக்கி पूर्णानुष्ठानमुखத்தாலேயிறே मोक्षहेतु வாவது - ஆகையாலிங்கு विधेयமான समर्पणं शेषत्वज्ञानमात्रமன்று - மற்றேதென்னில் शेषत्वज्ञानादि युक्त மான स्वरक्षाभरन्यासம் - वाक्यमात्रेण सिद्धत्वा त्सिद्धोपाय इहोच्यते ।

सा.दी - धर्मानुष्ठानத்தில் என்றாம் என்னவருளிச் செய்கிறார் शेषत्वज्ञान மென்று துடங்கி - शेषत्वमज्ञानादिमूलமான स्वरक्षाभरसमर्पणமே प्रपत्ति शब्दार्थமென்னுமத்தை निगमिக்கிறார் - ஆகையால் इत्यादि - भगवत्युपायत्व ज्ञानमात्रमेव प्रपत्तिः - அதுவும் शरणशब्दयुक्तवाक्यमात्रத்தால் सिद्धமாகையால் सिद्धोपायமென்னப்படுமென்னும் अर्थத்தை निरसिக்கிறார் वाक्यमात्रेणेति -

सा.स्वा- धर्मस्य त्रायते महतो भयात् ''என்கிறபடியே मोक्षமென்று சொல்லு किंतु विरोधिயாதோ? शेषत्वज्ञानமங்கு परम्परयाप्युपकारकமன்றே? என்னவருளிச் செய்கிறார் - शेषत्वज्ञानமன்றிக்கே इति - இனி ''आत्मानं मयि निक्षिपेत्'' इत्यादि विध्यन्तरानुसारத்தாலே शास्त्रजन्यशेषत्वज्ञानविलक्षण समर्पणरूपशेषत्वज्ञानमात्र परமென்கிற द्वितीयपक्षத்தை निरसिக்கிறார் - ஆகையால் इति - शास्त्रान्तरानुसारத்தாலே யென்றபடி - यद्वा निवृत्तिधर्मங்களான என்றது मोक्षोपायங்களான என்றபடி - அத்தையும் उपपादिக்கிறார் शेषवृत्तिरूपமான इति शेषत्वज्ञानமன்றிக்கே मोक्षार्थமாக विहितधर्मங்களை अनुष्ठित्தால் परम्परयापि शेषत्वज्ञानमुपकारकமன்றே? என்னவருளிச் செய்கிறார் शेषत्वज्ञान மன்றிக்கே इति - मतान्तरத்தை निरसिக்கிறார் - वाक्यमात्रेणेति - शास्त्रेषु प्रपत्तिरिति श्रूयमाणः ज्ञानविशेषः वाक्यमात्रेण सिद्धत्वात् केवलवाक्य जन्यज्ञानरूपत्वात् - इह, प्रपत्तिशास्त्रे - सिद्धोपायः, न तु कृति साध्योपाय इत्युच्यते इति वादः -

सा.प्र - मित्यत्राह - शेषत्वज्ञानमित्यादि - उक्तं संबन्धज्ञानस्य प्रपत्तित्वाभावं निगमयति ஆகையால் इत्यादिना - एवं संबन्धज्ञान मात्रातिरिक्त प्रपत्तेः कर्तव्यत्वं प्रसाध्योपायत्वाध्यवसायातिरेकेणापि भरन्यासस्य कर्तव्यत्वं साधयति - वाक्यमात्रेणेत्यादिना - अनुष्ठानं मात्रनापदव्यावर्त्यम् -

सा.वि - उपसंहरति ஆகையால் इति - एवं शेषत्वज्ञानमात्रं प्रपत्तिरिति पक्षं प्रतिक्षिप्य उपायत्वाध्यवसाय एव प्रपत्तिः - तस्या अपि कर्तव्यता नास्तीति पक्षं प्रतिक्षिपति - वाक्यमात्रेणेति - शरणमिति वाक्यमात्रेण सिद्धत्वादुपायत्वाध्यवसायस्सिद्धोपाय इत्युच्यतां -

सा.सं - शेषत्वज्ञान மன்றிக்கே इति - प्रकृते किमित्यत्राह - ஆகையால் इति - शेषत्वज्ञानस्य अधिकारिविशेषणत्वादाकिञ्चन्यानुगुणोपाय स्यैव विधातुमुचितत्वात् चेत्यर्थः - अथ शेषत्वज्ञानमेव प्रपत्तिरिति पर्यवसानफलकं पक्षान्तरमप्यनूद्य प्रतिक्षिपति - वाक्येति । इह,प्रपत्तिशास्त्रे - प्रपत्तिस्सिद्धोपाय उच्यते - ''न्यास इति ब्रह्म'' इति न्यास ब्रह्मशब्द सामानाधिकरण्यात्तथोक्तिश्च वाक्यमोत्रेण सिद्धत्वस्य द्वयोरप्य विशेषाद् - ज्ञान विषयककृतिमन्तरावाक्य श्रवण मात्रेणैवोत्पन्नत्वम् - प्रकृते ब्रह्मणि तु सिद्धत्वं ज्ञानविषयककृति मन्तरा वाक्य -

मू - प्रपत्तिरिति वादोऽपि विधिनात्र विहन्यते । ''शरणं व्रज'' என்கிறவிது इममर्थं जानीहि என்கிற मात्रமாய் ஒரு कर्तव्योपायविधिपर மன்றிக்கே யொழிந்தாலோ வென்னில் இது शब्दस्वारस्य विरुद्धम्-

सा.दी - अत्र, प्रपत्तौ - व्रजेति विधिना - चरमश्लोकத்தின் विधौ तात्पर्याभावத்தை शङ्किக்கிறார் - शरणं व्रजेत्यादि - शरणं व्रज, शरणमिति जानीहि என்றபடி. परिहरिக்கிறார் - இது शब्दस्वारस्येति - लोट्க்கு विधौ -

सा.स्वा- अत्र, व्रजेत्यादौ - विधिना, स्वरक्षतः प्रतीयमानविधिप्रत्ययेन विहन्यते, विरुद्ध्यत इति कारिकार्थः - व्रज வென்கிறவிது विधिपर மன்றிக்கே मां शरणं जानीहीत्येतदर्थपरமானால் वाक्यजन्यज्ञानमात्रं प्रपत्तिशब्दार्थ மாகையாமே? என்னவருளிச்செய்கிறார். ''शरणं व्रज'' என்கிற इति-यद्वा कारिकैயை विवरिக்கிறார் - शरणं व्रज வென்கிற - इति - शब्दस्वारस्येति । अत्र विरुद्ध्यते, विधिना विरुद्ध्यते என்று अनुषङ्गेणान्वयः - अत्र, व्रजेत्यत्र - शब्दस्वारस्यविरुद्धमित्ययमर्थः अत्रेत्य -

सा.प्र - उपायभूतस्य भगवतोऽनादिसिद्धस्य स्वरूप सत एव निरपेक्षोपायत्वेकिल सर्वेषां नित्यमुक्तिप्रसङ्गः - नतूपायतयाध्यवसीयमानतया निरपेक्षोपायत्वेऽपीति तादृशविशेषण विशिष्टतयापि वाक्यमात्रेण सिद्धत्वमिति तस्योपायत्वं चरमश्लोके बोध्यत इति नतदरिक्त भरन्यासः कार्य इति पूर्वपक्षिणाभाव । नत्वा चार्याणाम् - इदमपि प्रजेति विध्यनुपपत्तेर्निरस्तमित्यर्थः - ननु गत्यर्थानांबुद्ध्यर्थत्वेन विधेरन्यथा सिद्ध्या न तदनुपपत्तिरित्यत्राह शरणं व्रजेत्यादिना - तथात्वे ''तं गच्छ शरणं हरिम् - स्वात्मानं मयि निक्षिपेत् । शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । स्वाङ्गैः पञ्चभिरावृताम् - इयं करणपूर्तिस्स्यादङ्गपूर्तिमिमां श्रृणु'' इत्यादि विधिविरोध इत्यर्थः - सर्वधर्मानित्यत्र प्रकृतोपाया शक्ताधि-

सा.वि - प्रपत्तिरितिवादस्तु विधिना कृतिसाध्यावाभिधायि लिङादिना शरणं व्रजेत्यादि रूपेण विरुद्ध्यते - तस्य विधेयत्वं न सञ्जामटीति विधेयप्रपत्तिरूपत्वं न सिद्ध्यतीति भावः - शरणं व्रज என்கிற इति - इममर्थं जानीहीत्यत्र न ज्ञानस्य कृतिसाध्यत्वमुच्यते - किंतु ज्ञानोत्पत्त्यनुकूल चित्तव्यासङ्गनिवृत्तिर्बोध्यते - तद्वदत्र व्रजधातोर्गत्यर्थस्य ज्ञानार्थकत्वात्कृति साध्योपायविधिपरत्व मन्तरेणोपायत्वाध्यवसायरूप ज्ञानोत्पत्त्यनुकूल सामग्रीसम्पादनं कुर्विंतिबोध्यत इति शङ्कार्थः - कर्तव्योपायविधिपरமன்றிக்கே, मोक्षार्थं कर्तव्योपायविधिपरं यथा न भवेत्तथा ஒழிந்தாலோ, विधिपरत्वं त्यज्यते चेदित्यर्थः - शब्द स्वारस्यविरुद्धमिति - लिङादि प्रत्ययस्य -

सा.सं - श्रवणमात्रेण ज्ञाततत्वम् - सिद्धोपायत्वंच ब्रह्मणःकृत्यसाध्यत्वे सत्युपायत्वम् - एवं सिद्धोपायत्वोक्तियोग्य प्रपत्ति श्शेषत्वज्ञानमेवेति पर्यवसन्न इति वादोऽपि - अत्र, शरणं व्रजेति विधिवाक्ये - विधिना, विधिप्रत्ययेन - विहन्यते, बाध्यते - कृतिसाध्यत्वं हि विध्यर्थः - शेषत्वज्ञानं तु न कृति साध्यमिति न तद्विषयो विधिः किंतु भरन्यास एव कृतिसाध्यत्वादिह विधेयः । स एव प्रपत्तिरित्यर्थः - ननु व्रजेत्येतत्कर्तव्योपायविधिपरमेव न, येनैवं स्यादित्यत्राह । शब्देत्यादिना - भजस्वेतिवच्छरणं व्रजेति कृतिसाध्योपाय परत्वस्य स्वरसप्रतीतस्य बाधकं विनात्यागा -

मू - ''प्रपत्तिं तां प्रयुञ्जीत'' इत्यादिகளான सपरिकरस्फुटतरप्रपत्तिविधिகளோடும் विरोधिக்கும் - ईश्वरன் मोक्षोपायமென்கிறவிவ்வளவேயிங்கு वक्तव्यமாய் मोक्षाधिकारिக்கு विधेयान्तरமன்றிக்கே யொழிந்தால் - இவ்விடம் प्रस्तुतமான भक्तियोगத்துக்கு अपेक्षितமான तत्त्वोपदेशमात्रமாம்-

सा.दी - स्वारस्यத்தால் तद्विरुद्धமென்கை - प्रपत्तिमिति - प्रयुञ्जीत என்றும் அதுக்கு अर्थान्तरं கூடாதென்று கருத்து - இப் पक्षத்தில் चरमश्लोकं प्रस्तुतभक्तियोगத்துக்கு - अपेक्षिततत्त्वोपदेशमात्र परமாமென்கிறார். ईश्वरன் इत्यादि - पक्षान्तरத்தை अनूद्य परिहरिக்கிறார் -

सा.स्व- स्वार्थ इति सूच्यते - विधिना विरुद्ध्यत इत्येतदर्थ: प्रपत्तिं तामित्यादिना सूच्यते என்று கருத்து - युक्त्यन्तरமருளிச் செய்கிறார் - ईश्वरன் इति । तत्त्वोपदेशेति । विध्यभावात्प्रपत्तिरूपोपायोच्छेदं - प्रसङ्गिக்குமென்று கருத்து - ''सर्वधर्मानि''ति चरमश्लोकमूलमन्त्रेणात्यन्तपारतन्त्र्यादि रूपस्वपर यादात्म्यज्ञानसंपन्नस्त्वं सर्वधर्मस्वरूपत्यागपूर्वकं मामेकं शरणमुपायं सिद्धोपायं जानीहि - स्वरक्षणार्थस्य स्वव्यापारान्निवर्तस्व என்று पूर्वार्धार्थ: - परतन्त्रत्वादेव स्वरक्षणार्थ स्वव्यापारनिवृत्तिरर्थसिद्धत्वेन विधानानर्हतया विधिप्रत्ययस्य सर्वधर्मस्वरूपत्यागरूपविशेषण विधावेव तात्पर्य மாகையால் विधि स्वारस्य भङ्गமுமில்லை, भरसमर्पणरूपोपायान्तरविधानமும் கூடாதென்கிற पक्षத்தை अनुवदिக்கிறார்.

सा.प्र - कारिणं प्रत्युपायान्तर विध्यनङ्गीकारे बाधकमाह - ईश्वरன் इत्यादिना । प्रस्तुत भक्तियोग प्रपन्नो भगवान् सिद्धोपायभूत इति ज्ञापनपर्यवसितं स्यादित्यर्थ: - एवं च भक्त्याशक्तेन सिद्धोपायस्य स्वीकार्यत्वमपि न सिद्ध्येदिति भाव: - एवमुपायत्वाध्यवसायातिरेकं भरन्यासस्या -

सा.वि - प्रकृत्यर्थगत कृतिसाध्यत्वाभिधायित्वात्तत्परित्यागे स्वारस्यहानिरिति भाव: - व्रजेत्यत्रोक्तरीत्या अन्यथासिद्धिसम्भावनायामपि ''प्रपत्तिं तां प्रयुञ्जीत'' इत्यादावन्यथासिद्ध्यसंभवात्तद्विरोध इत्याह - प्रपत्तिमिति चरमश्लोकस्योपायान्तरविधिपरत्वाभावे प्रस्तुतभक्तियोग प्रसाध्योहामेवेति जानीहित्येवं परं स्यादिति बाधकान्तरमाह - ईश्वरன் - इति । विधेयान्तरமன்றிக்கே, विधेयान्तरं यथा न स्यात्तथा - ஒழிந்தால், त्यागे एवमुपायत्वाध्यवसायमात्रं प्रपत्तिरिति पक्षं प्रतिक्षिप्य स्वयत्ननिवृत्तिरेव प्रपत्तिरिति पक्षं प्रतिक्षिपति । -

सा.सं - योगात्तद्विरुद्धमित्यर्थ: । ननु शरणमिति जानीहीत्यपि शरणं व्रजेत्यस्य स्वरसार्थ एवेत्यत्राह । प्रपत्तिमिति । विधिகளோடும் इति । एवं च सर्वशाखा प्रत्ययन्यायेनैवं विधायकवाक्यानां भूयसामैकार्थ्ये तेषु च प्रपत्तिं प्रयुञ्जीतेति प्रपत्तिरूपज्ञानस्य कर्तव्यत्वे च सिद्धे शरणं व्रजेत्येतन्न तदन्यार्थकं स्याद्विरोधादित्यर्थ: । एवं विधान् स्वरूपांश एव संभावितान् व्यामोहाननूद्य प्रतिवदति - ईश्वरன் इत्यादिना இப்படி उपायस्वरूपத்திலும் अधिकारस्वरूपத்திலும் வரும் கலக்கங்கள் - शमिப்பித்தோம் इत्यन्तेन - तत्वोपदेशमात्रமாம் इति । ततश्च मोक्षो पायपरतयात्वद्व्याख्यानविरोध इत्यर्थ: -

मू - இங்கு तत्त्वज्ञान முடையவனுக்கு स्वरक्षणार्थ स्वव्यापारनिवृत्तिயே प्रपत्तिயாய் सर्वधर्मस्वरूपत्यागमात्रं साध्योपायமாக विधिக்கப்படுகிறதென்பார்க்கு - निवृत्तिरूपமேயாகிலும் साध्यமாக विधिக்கப்பட்ட सर्वधर्मत्यागंதான் स्वरक्षणार्थस्वव्यापारமாகையாலே स्ववचनविरोधமும் साङ्गप्रपत्तिविधायकமான वाक्यविरोधமும் வரும் -

सा.दी - இங்கு तत्त्वज्ञानमित्यादिயால் निवृत्तिरूपமே என்றது துடங்கி परिहारम् - இங்கு विधीयमानத்துக்கு साध्यत्वनियमात् - असाध्यத்துக்கு विधि கூடாமையால் विधिस्वव्यापारनिवृत्ति யென்ன स्ववचन विरोधं-

सा.स्वा - இங்கு इति - स्ववचनेति - कृत्यसाध्यமாகில் - विधानानर्हतया विधिக்கப்படுகிறது - इति स्ववचनविरोधः - कृतिसाध्यமாகில் அதுவே स्वरक्षणार्थ स्वव्यापारமாகையாலே स्वरक्षणार्थस्वव्यापारनिवृत्तिயே प्रपत्तिயாய் इति स्ववचनविरोध மென்று கருத்து - युक्त्यन्तर மருளிச் செய்கிறார் साङ्गेति - स्वरक्षणार्थ स्वव्यापार निवृत्तिயே प्रपत्तिயாகில் विध्यनर्हतया प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम् ''इति वचनविरोध மென்றபடி - साङ्ग प्रपत्ति विधि என்கிற भवत्पक्षத்தில் प्रपदनं सिद्धोपायवत्साक्षात्साधनமோ? सहकारिसाधनமோ? आद्यपक्षத்தில் ''मामेकं शरणम्'' என்று ईश्वरன் एकனே उपायமென்கிறது विरोधिக்கும் - प्रपदनं साक्षात्साधनமாகில் तत्कर्तुरपि स्वतन्त्रतुल्यतया निस्समाभ्यधिकचेतनत्वरूप परमचेतनत्वமும் विरोधिக்கும். द्वितीयपक्षத்தில் ईश्वरனுக்கு साध्येपायं किञ्चिदति शयावहतया सहकारि என்று கொள்ளவேண்டு -

सा.प्र - प्रसाध्यतत्कार्य स्वयत्ननिवृत्त्यतिरेकं साधयति இங்கு तत्त्वज्ञान मित्यादिना. स्ववचनविरोधமும் इति । किं कृत्स्न स्वयत्न निवृत्तिः प्रपत्तिरित्युच्यते? उतोपायन्तरविषयस्वयत्ननिवृत्तिरिति विकल्प्य प्रथमे निवृत्ति विषय स्वयत्नस्यावर्जनीयतया स्वव्याघातः - द्वितीयेऽप्युपायान्तरानुष्ठानाशक्तिसिद्धा वा? बुद्धिपूर्विका वेति विकलप्य आद्ये अनादिमुक्तिप्रसङ्गः - अन्त्ये तस्या भरन्याससाध्यत्वान्न प्रपत्तित्वमिति ज्ञेयमिति भावः - एवं पक्षान्तरेषु दोषानुक्त्वा -

सा.वि - இங்கு तत्त्वज्ञानमिति - साध्योपाय - इति - अत्रपक्षे विधिविरोधो नास्तीति भावः । धर्मत्यागंதான் धर्मत्यागस्यापि । स्वरक्षणार्थस्वव्यापार निवृत्तेरपि स्वरक्षणार्थ स्वव्यापारत्वाद्विधेयत्वं न संभवतीति - तथावचनमहं मौनीति वदतो वाक्यवद् व्याघातग्रस्तमिति भावः । स्वरक्षणार्थभाव रूपव्यापारनिवृत्तिरेव विधीयत इति न व्याघात इत्यस्वरसादाह । साङ्गेति । बहु प्रमाणवैय्याकुली स्यादिति भावः ''एवं परपक्षान् प्रतिक्षिप्य स्वस्य पक्षे परोत्प्रेक्षितदोषान् परिहरति -

सा.सं - இங்கு इति -अत्र निवृत्तेर्विधेयत्वानुक्तिः तत्त्वज्ञानफलकत्वस्य तद्विरोधित्व निबन्धना । एवं च सर्वधर्मस्वरूपत्यागविशिष्ट स्वरक्षणार्थ स्वव्यापार निवृत्तिरूपे विशिष्टे विधिपर्यवसानं स विशेषणे हीति न्यायाद्विशेषणांश इति स एव साध्योपाय इति भावः - त्यागं தான் इति - न हि तत्त्वज्ञान फलानिवृत्तिनिर्निबन्धनसङ्कोचार्हेति भावः - साङ्गेति - न हि धर्मस्वरूपत्यागस्य उपकारकमङ्गभूतं धर्मान्तरमस्तीत्याशयः । उपायभूतविधेयप्रपत्त्यभ्युपगमे परोत्प्रेक्षित तर्कानपि -

मू- प्रपत्तिक्कु साधनत्वमातल् सिद्धसाधनसहकारित्वमातल् कॊळ्ळिल् सिद्धोपायमान ईश्वरनुडैय एकत्वं, सिद्धत्वं, परमचेतनत्वं, परमकारुणिकत्वं, सर्वशक्तित्वं, निरपेक्षत्वं मुतलान स्वभावविशेषङ्गळुक्कु विरुद्धमामॆन्नुम् प्रसङ्गङ्गळ् श्रुतिस्मृतिविरोधव्याप्ति शून्यत्वादि -

सा.दी - प्रसङ्गिक्कुमॆन्ऱु करुत्तु - श्रुतिस्मृत्यादिकळ् प्रपत्तिवशीकृतनुक्के एकत्वसिद्धत्वादियैच् चॊल्लुकैयाल् अविरोधम् - ऒन्नुक्कु उपायत्वमुम् सहकारित्वमुमुण्डाकिल् मऱ्ऱॊन्ऱुक्कु एकत्वादियिल्लैयामॆन्ऱु व्याप्तियुमिल्लै - साधनादिमानुक्के लोकत्तिले एकत्वादिकळ् काण्कैयाल् - इनि इवैयै सत्तर्क -

सा.स्वा - कैयाले अव् अतिशयविशिष्टत्वेन साध्यतया सिद्धत्वं विरोधिक्कुम् - अन्याधीनातिशयभाक्त्वैनपरिपूर्णत्वविरोधः अन्यसहकारिसापेक्षत्वेन सर्वशक्तित्व निरपेक्षत्वपरमकारुणिकत्वविरोधः आकैयाल् प्रपदनमुपायतया विधेयमाकक् कूडुमो? ऎन्ऱु शङ्कित्तु उत्तरमरुळिच् चॆय्किऱार्. प्रपत्तिक्कु इति - श्रुतीति - ''यमेवैष वृणुते तेन लभ्यः ओमित्यात्मानं युञ्जीत'' इत्यादि साध्योपाय सापेक्षत्वादि श्रुतिविरोधः - ''भक्त्या परमया वापि प्रपत्त्या वा महामते - प्राप्याऽहम्'' इत्यादिस्मृति विरोधश्च ऎन्ऱपडि - व्याप्तीति - यत्र सहकारि सापेक्षत्वं तत्रैकत्वाभावस्सिद्धत्वाभाव - इति व्याप्त्याद्यभावत्ताले ऎन्ऱपडि - व्याप्त्यभाव असिद्धः -

सा.प्र - स्वाभिमतपक्षे परोत्प्रेक्षितदोषान् परिहरति - प्रपत्तिक्कु इत्यादिना - एकत्वमित्यादि - प्रपत्तेरपि मोक्षे साक्षात्साधनत्वाङ्गीकारे साधनैक्य विरोधः - साक्षादुपायभूतस्य भगवत प्रसादवैशिष्ट्येन साध्यत्वाङ्गीकारे सिद्धत्वविरोधः - गोप्तृत्ववरणस्य स्वाभिप्राय निवेदनार्थत्वात्परमचेतनत्व विरोधः - प्रसाद साधनत्वाङ्गीकारे परमकारुणिकत्वविरोधः - अशक्तस्य सहकारित्वे सर्वशक्तित्व विरोधः - शक्तेऽपि सहकारित्वे निरपेक्षत्वविरोधः - आदि शब्दापरपर्याय मुतल् शब्दार्थभूतपूर्णत्वविरोधश्चेत्यर्थः - व्याप्तिशून्यत्वादिति - प्रतितर्कपराहत्यादि -

सा.वि - प्रपत्ति - इत्यादिना । साधनत्वमातल् साधनत्वस्य वा - सिद्धसाधन सहकारित्व मातल् सिद्धोपाय सहकारित्वस्य वा कॊळ्ळिल्, स्वीकारेसाक्षात्साधनत्वाङ्गीकारे उपायैक्यविरोधः - साक्षादुपाय भूतस्य भगवतः प्रसादवैशिष्टचेन साध्यत्वाङ्गीकारे सिद्धत्वविरोधः - गोप्तृत्ववरणस्य स्वाभिप्रायनिवेदनार्थत्वात्परमचेतनत्वविरोधः - प्रसादसाधनत्वाङ्गीकारे परम कारूणिकत्वविरोधः - अशक्तस्य सहकारित्वे सर्वशक्तित्वविरोधः - शक्तस्य सहकारित्वे निरपेक्षत्वविरोधः मुतल् शब्देनाद्यर्थकिन पूर्णत्वविरोधस्सङ्गृहीतः - व्याप्तिशून्यत्यत्वादिति ।

सा.सं - दूषयति । प्रपत्तीत्यादिना । साधनत्वं, करणत्वम् । सहकारित्वं, करणानुग्राहकत्वम् । सिद्धत्वम्, कार्यनिर्वृत्तये साध्यांशविधुरत्वम् - परमचेतनत्वं, स्वेतरसहायासहत्वमिति पराशयः - श्रुतिः ''मुमुक्षुर्वै'' इत्यादिका -स्मृतिः, ''भक्त्या परमया वापि'' इत्यादिका - व्याप्तिशून्यत्वादिति - विभीषण, गजेन्द्र, काक, कालीयादि विषये प्रपत्तिं शास्त्रकारास्साधनत्वादिना स्वीकृतवन्तः - भगवदेकत्वादीनां विरोधश्चनेति व्याप्तिशून्यता - आदिशब्दविवक्षिता -

मू - दोषங்களாலே तर्काभासங்கள் - இவற்றை सत्तर्कங்களாக நினைக்கில் उपासनத்துக்கு இசைந்த साधनभावादिகளிலும் இப் प्रसङ्गங்கள் வரும். उपासनं தானும் साधनமன்றென்னில் सर्वधर्मान्परित्यज्य'' என்கிறவிடத்தில் उपासनத்தையும் धर्मशब्दार्थமாக व्याख्यानं பண்ணுகையாலே स्ववचन विरोधமுண்டாம் -

सा.दी - மென்று अङ्गीकरिக்கில் अनिष्टं காட்டுகிறார் - இவற்றை इत्यादि - उपासनத்தின் असाधनत्वम् इष्ट மென்னிலருளிச் செய்கிறார் - उपासनं தானும் इत्यादि - धर्मशब्दं मोक्षसाधनधर्मपर மென்று தாங்கள் சொல்லுகையால் विरोध மென்றபடி - वस्तुतः अनुपायங்களையே उपायत्वेनोपदेशिக்கையாலிந்த - अन्यपरोक्त्या भ्रमिத்த -

सा.स्वा- तथाच व्याप्तिमूलत्वादुक्तानिष्टप्रसङ्गங்கள் सत्तर्कங்களென்கையில் बाधकமருளிச் செய்கிறார் - இவற்றை इति - इष्टापत्तिயில் बाधकமருளிச்செய்கிறார் - उपासनं தானும் इति - धर्मशब्दार्थ மாக इति - धर्मशब्दं मोक्षसाधनधर्मपर மென்று व्याख्यानं பண்ணுகையாலே என்றபடி वस्तुत अनुपायங்களையே उपायत्वेन उपदेशिக்கையால் இவ் अन्यपरोक्त्या भ्रमिத்த अर्जुनबुद्ध्या धर्मत्वेन ग्रहीतங்களை -

सा.प्र - रादिशब्दार्थः - व्याप्तिप्रदर्शनस्थलस्यासिद्धौ व्याप्तिशून्यत्वमित्यर्थः एषां सत्तर्कत्वे बाधकमाह - இவற்றை इत्यादिना - उपासनस्य साधनत्वेऽप्युक्तप्रसङ्गस्याविशेषादित्यर्थः - एवं तर्ह्युपासनस्यापि साधनत्वं परित्याजाम इत्यत्र बाधकमाह - उपासनं தானும் इत्यादिना - धर्मशब्दस्यालौकिक श्रेयो रूपमोक्षसाधनत्वार्थकत्वादिति भावः - ननु गर्वितबलीवर्दगर्वपरिहारपूर्वकं व्रीह्यादि भारवहनार्थं वोढव्यसिकतादि भारारोपण वदलौकिक श्रेयस् -

सा.वि - व्याप्तेस्तर्काङ्गत्वात् । प्रपत्तिर्यदि भगवत्सहकारिणी स्यात्तर्हि सिद्धवभङ्गः - इत्यादि तर्काः व्याप्तिस्थलाभावादाभासाः । लोकदृष्ट्या विरोधापादने ''अरसमरूपं गन्धर्वजितम् - सर्वगन्धस्सर्वरसः - सगुणं निर्गुणम्'' इत्यादावपि विरोधप्रसङ्गात् - तत्र केनचित्प्रकारभेदेन विरोधपरिहारे इहापि स्वाधीन सहकारि सापेक्षत्वेऽपि स्वाधीन सहकार्य - नपेक्षत्वं निरपेक्षत्वम् - स्वाधीन सर्वसहकारित्वात्सर्वशक्तित्वं, स्वसंपादितप्रसाद साधनवत्वात्परमकारुणिकत्वम्, स्वस्य तदभिप्रायवेदित्वेऽपि फले पुरुषार्थत्वापादनाय गोमृत्ववरणस्य कार्यत्वान्न परमचेतनत्वविरोधश्चत्येवं सर्वप्रमाणैकार्थ्यायाङ्गीकार्यत्वान्न लोकदृष्ट्यापादनसंभव इति भावः - आदि शब्देन यदि स्वाधीन सहकारिसापेक्षत्वं न स्यात्तर्हि वैषम्यनैर्घृण्यप्रसङ्गः - स्वाधीन शक्त्यनपेक्षणे सर्वशक्तित्व भङ्गः - इत्यादि प्रतिकूलतर्क पराहतिर्विवक्षिता - एतेषां सत्तर्कत्वाङ्गीकारे बाधकमाह । இவற்றை इति - उपासनमपि सहकारि न स्यादिति भावः - इष्टापत्तिमाशङ्क्याह । उपासनं தானும் इति - उपासनं தான், उपासनं, धर्मशब्दार्थமாக इति । अलौकिक श्रेयस्साधनत्वं धर्मत्वम् - साधनत्वेन स्वयमेवोक्तत्वात्साधनं -

सा.सं - निष्टप्रसङ्गमेव दर्शयति । இவற்றை इति । நினைக்கில், भ्रमिக்கில் - வரும், समानयोगक्षेमेति भावः। उपासनेऽपि साधनतेत्युक्ते उपासनमपि त्याज्यतया धर्मशब्दार्थ स्ववचनविरोध इत्याह । उपासनं தானும் इति । செருக்கு, दुश्शकमपि निर्वहामीति गर्वः ।

मू - செருக்கடைக்காக வேண்டாச் சுமைகளை யெடுப்பிக்கையாலே अन्यपरमான उपदेशத்தாலே பிறந்த अर्जुनबुद्धियாலே धर्मமென்று தோற்றின வற்றை ''सर्वधर्मान्'' என்று अनुवदिக்கிறதென்னில் इज्याचार दमाहिंसादान स्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् । सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः । न विष्णवाराधनात्पुण्यं विद्यते कर्म वैदिकम्''

---

सा.दी - अर्जुनबुद्धियாலே धर्मत्वेन ग्रहिக்கப்பட்டவைகளை सर्वधर्मानित्यनुवदिக்கிறது என்று शङ्किக்கிறார். செருக்கடைக்குகைக்காக इत्यादि செருக்கு, गर्वम् - गर्वपरिहारार्थமென்கை. இது अनुपायங்களான कर्मयोगादिகளை उपायत्वेन उपदेशத்தில் हेतुவென்றபடி - परिहरिக்கிறார் - इज्याचारेत्यादिயால் - परमधर्मत्वेन प्रसिद्धங்களான निवृत्तिधर्मங்களினுடைய उपदेशத்தை अन्यपरமாக்கி अधर्मत्वेनाङ्गीकरिக்கில் कैमुतिकन्यायத்தால் प्रवृत्तिधर्मங்களான ज्योतिष्ठोमादिகளுடைய उपदेशத்துக்கும் अन्यपरतै வருமென்றபடி - इज्या, यागः - आचारः, सदाचारः - शमादिகள், प्रसिद्धங்கள் - धर्मங்களின் நடுவே இது परमधर्मமும், யாதொன்று योगத்தாலே आत्मदर्शनं பண்ணுவதுண்டு - योगशब्दத்தால் ज्ञानयोगமாதல் भक्तियोगமாதல் சொல்லப்படும் वैष्णवो विधि, विष्णुसंबन्धित्वेन विहितமான धर्मம் - विष्णवाराधनादधिकं वैदिकं कर्म न विद्यते என்கை.

---

सा.स्वा - धर्मत्वेन अगुवदिக்கிறதென்று शङ्किக்கிறார் - செருக்கு इति -செருக்கு, गर्वम् - அடக்குகைக்கு, निरोधिக்கைக்கென்றபடி - வேண்டாச்சுமைகளை, असाधनங்களையென்றபடி - विधिरिति - विधीयत इति विधिः धर्मः - वैष्णवः, विष्णुदैवत्यः विष्णवाराधनरूपो धर्म इत्यर्थः - पुण्यं, श्रेष्ठமென்றபடி - यद्वा स्वाध्यायकर्मण मित्यत्र स्वाध्यायरूपकर्मणामिति नार्थः - किन्तु स्वाध्यायश्च कर्माणि चेति द्वन्द्वः - कर्मपदं गोबलीवर्दन्यायेनोपात्तातिरिक्तवैदिकधर्मपरम् - योगपदं च -

---

सा.प्र - स्यानत्वरहितानामेव धर्मतयोपदेशेऽपि तात्पर्याज्ञानाद्वास्तविकधर्मत्वेनाव गच्छतोऽर्जुनस्य बुद्ध्या धर्मत्वानुवाद इति न स्ववचनविरोध इति शङ्कामनूद्य परिहरति - செருக்கடக்குகைக்காக इत्यादिना - प्रमाणेषु परमधर्मत्वेन प्रसिद्धानां ब्रह्मोपासनादीनां धर्मत्वाभावे -

---

सा.वि - नेत्युक्तिस्स्ववचनविरुद्धेति भावः - ननु गर्वितबलीवर्दमद परिहाराय व्रीह्यादिभारवहनार्थं प्रथमं सिकताभाररोपणवदर्जुनगर्वपरिहाराय अनुपायेष्वेव कर्मयोगादिषु उपायत्वारोपेण धर्मत्वव्यपदेशेऽपि तात्पर्याज्ञाना द्वास्तविकतया धर्मत्वेनावगच्छतोऽर्जुनस्य बुद्ध्यनुसारेण धर्मानित्यनुवाद इति न स्ववचनविरोध इत्याशङ्कामनूद्य परिहरति । செருக்கடக்குகைக்காக इत्यादिना - செருக்கு गर्वस्य । அடக்குகைக்காக, परिहारार्थम् - வேண்டாத சுமைகளை, अनपेक्षितसिकतादि भाराणाम् - எடுப்பிக்கையாலே, उद्धृत्य स्थापनेन - तद् दृष्टान्तेनेति भावः ।

---

सा.सं - अन्यपरமான - इति । अशक्यभारारोपणरूपेत्यर्थः । एवं च वस्तुतस्तेषां धर्मत्वं नास्ति चेदप्युपच्छन्दनार्थधर्मपदानुरोधेन धर्मशब्दार्थत्वेन व्याख्यानं मम न विरुद्ध्यत इति भावः । इज्या, यागः । आचारः, शौचादिः । दमः, इन्द्रियनिग्रहः । कर्मशब्देन सत्यवचनोपसनादि सङ्ग्रहः । कर्मणामिति निर्धारणे षष्ठी । योगेन, आसनादि परिकरवन्मनोवृत्तिविशेषेण -

मू - इत्यादिகளாலே परमधर्मங்களாக प्रसिद्धங்களான निवृत्तिधर्मங்களை धर्मங்களன்றென்றால் कैमुतिकन्यायத்தாலே प्रवृत्तिधर्मங்களும் धर्मங்களன்றிக்கே सर्वशास्त्रங்களுக்கும் प्रामाण्यமில்லாதபடியாய் परबाह्य कुदृष्टिपक्षங்களிலே प्रवेशமாம் - ஆனாலும் उपासनादिகள் போலே शरणवरणं धर्मशब्दवाच्यமாகையாலே இங்கு सर्वशब्द सङ्कोचं வாராமைக்காக இதுவும் साधनत्व वेषத்தாலே त्याज्यமன்றோ? ஆகையால் प्रपत्तिக்கும் साधनत्वமாதல் सिद्धसाधन सहकारित्व மாதல் கொள்ளுகை, இவ்वचनं தனக்கு विरुद्धமன்றோ வென்னில் -

सा.दी - ननु सर्वशब्दा सङ्कोचार्थं धर्मशब्दवाच्यமான प्रपत्तिயும் प्रपत्त्यधिकारिக்கு - साधनत्ववेषेण त्याज्यम् । ஆதலால் प्रपत्तिக்கு साधनत्वத்திலும் सिद्धोपाय सहकारित्वத்திலும் चरमश्लोकத்தோடு विरोधं प्रसङ्गिக்கு மென்று शङ्किக்கிறார் - ஆனாலும் इत्यादिயால் - இங்கு प्रपत्तिயில் साक्षात्साधनत्वबुद्धित्यागமோ? परम्परया साधनत्वबुद्धियுமோ? என்று विकल्पित्तு प्रथमकल्पத்தில்-

सा.स्वा - ज्ञानकर्मभक्तियोगपरम् - शेषं पूर्ववत् - प्रवृत्तीति - परमधर्मत्वेन प्रसिद्धनिवृत्तिधर्मोपदेशमन्यपर மாகில் कैमुत्यन्यायத்தாலே प्रवृत्ति धर्मोपदेशமும் अन्यपरமாக प्रसङ्गिமென்று கருத்து - प्रपत्तेस्साधनत्वे सहकारित्वे वा चरमश्लोकविरोधं வருமென்று शङ्किக்கிறார்- ஆனாலும் इति -

सा.प्र - अतस्मिंस्तद्बुद्धिजनकतया कृत्स्नवेदान्तप्रामाण्यप्रसङ्गात् । तत्स्वीकारे च वेदान्तिनां विपक्षभूतनिरीश्वर मीमांसकपक्षप्रसङ्गः - तथैव प्रवृत्ति धर्माणामपि धर्मत्वा भावस्य कैमुतिकन्यायसिद्धत्वात्तत्राप्य तस्मिंस्तद्बुद्धि जनकत्व प्रसङ्गात्तदङ्गीकारे बाह्यपक्षप्रसङ्गः - सर्वत्र व्यावहारिक प्रामाण्याङ्गीकारे कुदृष्टि पक्षप्रसङ्ग इत्यर्थः । नन्वस्तु सर्वेषां धर्मत्वम् - तथा च प्रपत्तेरपि धर्मत्वात्सर्व शब्दा सङ्कोचात्प्रपत्तावपि साधनत्वबुद्धिस्त्याज्येति प्रपत्तेस्साधनत्वं नोपपद्यत इत्यत्र त्याज्यतयाभिमत साधनत्व बुद्धिं द्वेधा विकल्प्य प्रथमे विवक्षिता सिद्धिं द्वितीये स्वव्याघातं चाह - ஆனாலும் इत्यादिना । एवं च सर्वशब्दा सङ्कोचायैव भगवत्युपायत्वाध्यवसायोऽपि त्याज्यस्स्यादिति भावः । ननु सहश्रुत निखिल पदानां संभूयैकार्थपरत्वस्य -

सा.वि - निवृत्तिधर्मங்களை धर्मங்களன்றென்றால், परमधर्माणामेव धर्मत्वनिषेध इत्यर्थः । ननूपासनादीनां धर्मत्वावश्यकत्वे प्रपत्तेरपि धर्मत्वेन सर्वशब्दा सङ्कोचाय प्रपत्तेरपि त्याज्यता स्यात्तथा च प्रपत्तेस्साधनत्वस्य वा सिद्धसाधन सहकारित्वस्य वा स्वीकारस्सर्वधर्मानिति वचनविरुद्ध इति शङ्कते -ஆனால் इति । ஆனால், तर्हि । उपासनादीनां धर्मत्वाङ्गीकार इत्यर्थः । एवं चेद्ब्रह्मणापि धर्मशब्दार्थत्वेन त्याज्यत्व प्रसङ्गः । मामितीतरत्याग पूर्वकप्राप्तिक्रिया कर्मभूतस्यापि -

सा.सं- अतोऽस्य वस्तुतो धर्मत्वमवर्जनीयमित्युक्ततर्काणां तत्रापि प्रसङ्गात् - प्रपत्तेस्साधनत्वादिकमपलपि तुमशक्यमिति फलितम् । ஆனாலும், तर्काणामाभासत्वेऽपि । साधनत्ववेष - इति । अत्रैव विहितस्यत्यागयोगाद्धर्मशब्दा सङ्कोचेन च सविशेषेणेहीति न्यायेन साधनत्वांशे त्यागः पर्यवस्यतीति भावः । இவ் वचनं தனக்கு इति । सर्वधर्मानिति वचनस्यैव ।

मू - இங்குसाक्षात्साधनत्वबुद्धिயை விடவேணுமென்னும் போது भक्तियोगादिகளிலும் तुल्यम् - प्रसादनत्ववेषத்தாலும் धर्मत्वமிதுக்கு விடவேணுமென்னில் सर्वशब्दसङ्कोचं வாராமைக்காக "कृष्णं धर्मं सनातनं" इत्यादि களிற்படியே धर्मமான सिद्धोपायத்திலும் साधनत्वबुद्धिயைவிட प्रसङ्गिக்கும் - இவ் वाक्यத்தில் प्रतिपाद्यமான धर्मத்தையொழிந்த धर्मங்களன்றோ त्याज्यங்களாவன வென்னில் இங்கு विहितैயான शरणागतिயிலும் तुल्यम् -

सा.दी - दूषण மருளிச் செய்கிறார். भक्तियोगादिகளுக்கும் तुल्य மென்று. द्वितीयशिरस्ஸில் प्रतिबन्ध्यभिप्रायத்தாலே निराकरिக்கிறார். सर्वशब्द सङ्कोचमित्यादिயால். सिद्धोपायத்துக்கு भक्तिप्रपत्ति களெவ் आकारத்தால் -

सा.स्वा - परिहरिக்கிறார் - இங்கு इति - सर्वधर्मत्यागशब्देन साक्षात्साधनत्व बुद्धित्यागं विवक्षितமோ? - सद्वारकसाधनत्व बुद्धित्यागं विवक्षितமோ? என்று विकल्पिத்து आद्यपक्षத்திலருளிச் செய்கிறார் - साक्षादिति - साक्षात्साधनबुद्धित्याग पूर्वकानुष्ठानं भक्तियोगसाधारणமாகையாலே सर्वधर्मत्यागத்துக்கு भवदभिमतं सिद्धिயாதென்று கருத்து - द्वितीयपक्षத்திலருளிச் செய்கிறார் - प्रसादनत्वेति - द्वारभूतप्रसादसाधनत्ववेषத்தாலு மென்றபடி - प्रतिबन्धिக்கு परमुखेन समाधानं वचिப்பிக்கிறார். இவ் वाक्यத்தில் इति - இனி भक्तिप्रपत्तिகள் अचेतनतया साक्षात्साधनங்களாக மாட்டாது -

सा.प्र - न्याय्यत्वान्मामेकमुपायतया स्वीकुर्विति पदानुगुण्येन सर्वपदस्य भगवद्व्यतिरिक्तविषयत्वं वक्तव्यमिति चेदुक्तस्यायेनैव व्रजेति पदानुगुण्याय प्रपत्ति व्यतिरिक्त सर्वधर्मपरत्वमपि सिद्धमित्यभिप्रयन्नाह। இவ் वाक्यத்தில் - इत्यादिन ननु भक्तेरुत्पत्त्यर्थं कर्मयोगाद्यपेक्षावदभिवृद्ध्यर्थ -

सा.वि - सर्वशब्द सङ्कोचभीत्यात्याज्यत्वे कर्मालाभाद्वाक्यार्थस्यैव व्याघातः - तदर्थं सर्वशब्दसङ्कोचे तद्वदेव विधीयमानशरणवरणव्यतिरिक्तविषयतयापि सङ्कोचः कार्य इत्यभिप्रायेण परिहारमाह । இங்கு साक्षात्साधनत्वबुद्धिயை इत्यादिना । இங்கு, प्रपत्तौ । प्रपत्तेर्धर्मत्वे तस्या अपि त्यागो भवेदित्या पादयतः किं साक्षात्साधनत्वबुद्धित्याग इति विवक्षितः - आहोस्वित्प्रसादनत्व वेषेणापि त्याज्यत्वं विवक्षितम् - इति विकल्प्य प्रथमकल्पे दूषणमाह - இங்கு साक्षादिति - भक्तियोगादिகளுக்கும் तुल्यमिति - तेष्वति साक्षात्साधनत्वबुद्धित्यागः प्रसजेत् । प्रसादननत्वेनानुष्ठेया स्स्युरिति भावः - द्वितीयकल्ये दूषणमाह - प्रसादनत्ववेषத்தாலும் इति - यद्यपि प्रथमकल्पे सिद्धोपायस्य सर्वशब्दा सङ्कोचाय साक्षात्साधनत्वबुद्धित्याग आपादयितुं शक्यस्तथापि तत्र दूषणान्तर सत्वात्तन्नोक्तम् - प्रसादनत्ववेषத்தாலும் इति समुच्चयेन साक्षात्साधनत्वेन प्रसादनत्ववेषेण च भक्तियोगादेस्त्यागस्य च विवक्षितत्वात्सिद्धोपायத்திலும் -

सा.सं - बुद्धिயை इति - अन्यनिष्ठसाधनत्वस्यान्येन त्यागायोगात्साधनत्व त्यागस्तद्बुद्धित्याग एवेति भावः - तुल्यामिति - ततश्च भक्तियोगवत् प्रसादन द्वारा उपायत्वमस्याश्च दुर्वारमिति भावः - सिद्धोपायத்திலும் इति - साधनत्वबुद्धित्यागस्य धर्मैकदेशे सङ्कोचाभावादित्याशयः - एतद्वाक्यप्रति पाद्यामानत्वात्सिद्धोपायस्य न तदंशेत्यागविधिरिति यदि तदा तुल्यमित्याह இவ்வாக்யத்தில் इति -

मू - उपासनादिகளைப் போலே தனக்கு उत्पादकமாகவாதல், वर्धकமாகவாதல், सहकारियாகவாதல், द्वारமாகவாதல், ஒன்றால் अपेक्षैயறும்படி नित्यமாய், उपचयापचयरहितமாய் सर्वदापरिपूर्णமான सहजकारुण्यादिகளையுடைத்தாய் सङ्कल्पமுண்டானபோது द्वारनिरपेक्षமாக कार्यं பிறக்கும்படி सत्यसङ्कल्पமாயிருக்கிற सिद्धोपायத்துக்கு भक्तिप्रपत्तिகள் எவ் आकारத்தால் उपकारकங்களாகின்றனவென்னில், இவை अनादिயான अपचार परम्परैயாலே उत्पन्नமாய் संसारहेतु வாய்க் கிடக்கிற निग्रहத்தை शमिப்பித்துக் கொண்டு उपकरिக்கின்றன -

सा.दी - उपकरिக்கின்றனவென்று கேட்கிறார். उपासनादिகளைப் போலே इत्यादिயால் - இது व्यतिरेकदृष्टान्तम् - नित्यत्वादुत्पादकापेक्षैயில்லை - उपचयापचयरहितமாகையால் वर्धकापेक्षैயில்லை - सर्वदा परिपूर्णत्वादिகளால் सहकार्यपेक्षैயில்லை - सङ्कल्पमित्यादि वाक्यத்தால் - द्वारतयापेक्षैயுமில்லை सङ्कल्पार्थமே तदपेक्षैயில்லை என்கிறது सहजकारुण्येत्यादिயால் उत्तरமருளிச் செய்கிறார் - இவை अनादीत्यादि - भक्तिप्रपत्तिகளுடைய - फलान्तरोपायत्वத்தில்-

सा.स्वा. सिद्धोपायोपकारकद्वारा साधनங்களுமாகமாட்டாதென்று शङ्किக்கிறார் उपासनादिகளைப் போலே इति - व्यतिरेकदृष्टान्तम् - नित्यतयोत्पादकापेक्षैயில்லை - उपचयापचयरहिततयावर्धकापेक्षै யில்லை - परिपूर्णतया सहकार्यपेक्षैயில்லை - द्वारनैरपेक्ष्येण कार्यसिद्ध्युपयुक्तसत्यसङ्कल्प युक्ततया द्वारापेक्षैயில்லை - सङ्कल्पसिद्ध्यर्थमपि साध्यापायापेक्षैயில்லை என்கையில் - हेतुसहजकारुण्ये त्यादि என்றபடி - परिहरिக்கிறார். இவை - अनादीति - प्रतिबन्धकनिग्रह शमनमुपयोग மென்று-

सा.प्र - महरह रनुष्ठीयमान नित्यनैमित्तिकापेक्षावत्फलोत्पादनार्थं भगवदपेक्षावत् सिद्धोपायभूतस्य भगवतो नित्यस्योपचयापचयरहितस्य सर्वदापरिपूर्णस्य सहजदयावतस्सत्य सङ्कल्पस्यापेक्षणीयाभावाद्भक्तिप्रपत्त्योरन पेक्षैव न स्यादित्याशङ्क्य परिहरति - उपासनादीत्यादिना -

सा.वि - साधनत्वबुद्धिயைவிட प्रसङ्गिக்கும் इत्यत्रसाक्षात्साधनत्वबुद्धिயை விட प्रसङ्गिக்கும் इति विवक्षितार्थस्य - नानुपपत्तिरिति द्रष्टव्यम् ननु भक्त्यादिना कर्मयोगादिक मुत्पादकतया अहरहरभ्यासोवर्धकतया अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मसहकारितया फलप्रद ईश्वरोद्वारतया यथापेक्ष्यते तद्वदीश्वरस्य नित्यतया उत्पत्तिविरहिण: उपचयापचय रहिततया वृद्धिविरहिण: परिपूर्णत्वात्सहकार्यन्तरनिरपेक्षस्य स्वसङ्कल्पितसमये कार्योत्पत्ति प्रतिबन्धकराहित्यरूप सत्यसङ्कल्पतया द्वारनिरपेक्षस्य सहजकारुण्यतया सङ्कल्पोत्पत्त्यर्थहेतुनिरपेक्षस्यभगवत: क्वचिदंशेऽप्यपेक्षाभावात्केनाकारेण भक्तिप्रपत्त्योरुपकारकत्वमित्याशङ्कामनूद्य निग्रहरूप प्रतिबन्ध विघटकतयोपयोग इति परिहरति - उपासनादिகளைப் போலே इति - भक्तिप्रपत्त्यो:-

सा.सं - ननु भक्तेरुत्पादकाद्यपेक्षास्ति - उत्पत्त्यादिमत्वात् - सिद्धोपायस्य तु नित्यत्वादि मत्वान्नोत्पादकाद्यपेक्षा - अतो भक्त्यादेस्सिद्धोपायोपकारकत्वं न संभवति - साक्षात्साधनत्वं च तवाप्यनभिमतम् - अतो न कथञ्चिदपि उपायत्वाभ्युप गमो युक्त इति उपासनादिகளை - इत्यादिना आशङ्क्य परिहरति இவை -

मू- இவை फलान्तरத்துக்கு उपायமாம்போது ज्योतिष्टोमादिகளைப் போலே तत्तदनुगुण प्रीतिविशेषங்களை उत्पादिத்துக்கொண்டு அம்முகத்தாலே उपकारकங்களாம் मुमुक्षुவுக்கு साध्योपायங்களாகிற व्याजमात्रத்தாலே शान्तनिग्रहமான सिद्धोपायं निग्रह फलமான ज्ञान सङ्कोचादिகளைக்கழித்து परिपूर्णकैङ्कर्यपर्यन्तफलத்தைக் கொடுத்து यावदात्मभाविயாக उपकरिக்கும்.

सा.दी - उपकारप्रकारத்தை காட்டுகிறார். இவை फलान्तरத்துக்கு इत्यादि फलान्तराप्रदानं निग्रहकृत மாகையாலென்று भावம் - प्रसङ्गात्सिद्धोपायத்தினுடைய कृत्यத்தையருளிச் செய்கிறார். मुमुक्षु வுக்கு इत्यादिயால் - ज्ञानसङ्कोचादीत्यादि शब्दத்தால் अविद्याकर्मादिग्रहणम् ।

सा.स्वा - சொன்னது கூடுமோ? स्वर्गाद्यर्थभजनप्रपदनं प्रतिबन्धकशमनजनक மன்றே? என்ன வருளிச் செய்கிறார் - இவை इति । இப்படி साध्योपायं निग्रह रूपानिष्टनिवर्तकமாகில் सिद्धोपाय वैय्यर्थं प्रसङ्गि யாதோ? साध्योपायवशीकृत னாய்க் கொண்டு फलप्रदानं பண்ணுகையே सिद्धोपायो पयोग மன்னிலது त्रैवर्गिकाधिकारि साधारण மன்றோ? अनिष्टनिवर्तकत्वं मुमुक्षुவைப் பற்ற अधिकं सिद्धोपायத்துக் கென்னிலப்போது साध्योपायத்துக்கு प्रतिबन्धकनिग्रहशमनमुपकारமென்கிறது विरोधि யாதோ? என்னவருளிச் செய்கிறார் - सिद्धोपायத்துக்கு ज्ञानसङ्कोचाद्यनिष्ट निवर्तकत्वமும் - यावदात्मभाविपुरुषार्थ प्रापकत्वமும் - अधिकोपकारமென்று கருத்து - இப்படி प्रमेय -

सा.प्र - प्रतिबन्धविघटकतयोपयोग इति भावः - एवं भक्तिप्रपत्त्योर्मोक्षोपयोग प्रकारमुक्त्वातयोस्सर्वफलसाधनत्वात्फलान्तरेऽप्युपयोग प्रकारमाह । இவை फलान्तरेत्यादिना - बन्धनिवृत्तिं प्रतिब्रह्मणोऽप्युपायत्वात्तस्याप्युपयोगप्रकारमाह - मुमुक्षुவுக்கு इत्यादिना । एवंच "अमृतस्य परं सेतुम् - अमृतस्यैव सेतुः -सकलफलप्रदो हि विष्णुः । अपवर्ग प्रदोहरिः - तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" इत्यादि भगवदुपायत्वबोधक प्रमाणस्य निचाय्य तं

सा.वि - फलान्तरोपयोग प्रकारमाह । இவை फलान्तरத்துக்கு इति - फलान्तराप्रदानस्य निग्रहकृतत्वाभावान्नतत्र तन्निवर्तकतयोपयोगः - किन्तु प्रीति हेतुत्वे नेति भावः - भगवत उपयोग प्रकारमाह । मुमुक्षुவுக்கு इति - கழித்து, निरस्य । नन्वसमर्थस्समर्थं रक्षणार्थमाश्रयतीति लोकसिद्धम्-

सा.सं - इत्यादिना - मुमुक्षुं प्रति भक्त्यादेरेवं सिद्धोपायोपकारकता चेत्फलन्तरार्थिसंप्रति सा कीदृग्भूतेत्यत्राह - இவை फलान्तरेति - அம் मुखத்தாலே - इति - फलविशेषोपभोग प्रतिबन्धकदुरितापूर्व निरसनमुखेनेत्यर्थः - ननु प्रतिबन्धकस्य भक्त्यादि विर्तर्यत्वे भक्त्यादिः नियोगमुखेन फलाय भवतीति मुखैरपि स्वर्गादिवदनित्यता सिद्धोपाय प्राधान्यभङ्गश्च स्यादित्यत्राह - मुमुक्षुவுக்கு इति - भगवन्निग्रहातिरिक्त दुरिता पूर्वाभावात्तदनुग्रहीतिरिक्त नियोगाभावाच्च भक्त्यादिकं व्याजीकृत्य भगवानेव शान्तिनिग्रहः फलं प्रयच्छतीति नोक्त दोषद्वयमिति भावः - एवं च -

मू - ஆகையால் मुमुक्षु வினுடைய सर्वानिष्टनिवृत्तिपूर्वकமாய் परिपूर्ण कैङ्कर्य पर्यन्तமான फलपरंपरै யெல்லாம் सिद्धोपाय कार्य மென்றும் प्रसादनமான साध्योपायமடியாக வருகிறதென்றும் செல்லுகிற प्रमाणங்களிரண்டும் सुसङ्गतங்கள் - ஆனாலும் இப் प्रपत्तिயாகிற उपायविशेषத்தை शास्त्र विधिக்கவேணுமோ? लोकத்தில் தன்னை रक्षिத்துக்கொள்ள விரகில்லாதே அழுந்துவானொருவன் அப்போது सन्निहितனான रक्षण समर्थனைப் பற்றுமாப்போலே தன்னையும் ईश्वरனையும் सिद्धपरமான शास्त्रத்தாலே தெளிந்தால் தானேயவனை शरणமாகப் பற்றானோ? ஆகையால் अकिञ्चनனுக்கு शक्तिस्थानத்திலே प्रपत्तिயை विधिக்கிற தென்கை கூடாதே என்று சிலர் சொல்லுவார்கள்.

सा.दी - आनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिसिद्धोपाय कार्य மாகையால் साध्योपाय कार्यं இவையென்று சொல்லும் वचनங்கள் असङ्गतங்களன்றோ? என்னவருளிச் செய்கிறார். ஆகையால் इत्यादिயால். साध्योपायवशीकृत सिद्धोपायकार्यं अनिष्टनिवृत्त्यादिயாகையால் साध्योपायलभ्यत्व प्रतिपादक वचनங்களும் सङ्गतங்களென்றபடி. ஆகிலும் लोकसिद्धरीत्या शरणागत्यनुष्ठान मुपपन्न மாகையால் विधिக்கக் கூடாது - अत "स्सर्वधर्मान् परित्यज्य" इत्यादि वचनमनुवादமென்னும் शङ्कैயை अनुवदिக்கிறார். ஆனாலும் இப் प्रपत्तीत्यादि ।

सा.स्वा - शिक्षै பண்ணி இப்படி अङ्गीकरिயாவிட்டால் प्रमाणद्वया साङ्गत्य மென்று व्यञ्जिப்பியா நின்றுகொண்டு स्वपक्षத்தில் प्रमाणद्वयसाङ्गत्यத்தை उपसंहरिக்கிறார். ஆகையால் इति - प्रमाणங்களிரண்டு इति - "भक्त्या परमया वापि प्रपत्त्या महामते । प्राप्योऽहं नान्यथा प्राप्यः - अमृतस्यैष सतुः । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि" इत्यादि प्रमाणद्वय மென்றபடி - ஆனாலும் लोकरीत्यैव प्रपदनानुष्ठान मर्थसिद्ध மாகையாலே भक्तिस्थानத்தில் प्रपत्तिயை विधिக்கக்கூடுமோ? ஆகையால் चरमश्लोकमनुवादमात्र மன்றோ? என்கிற पक्षத்தை अनुवदिக்கிறார் - ஆனாலும் इति - அழுந்துவான்-

सा.प्र - मृत्युमुखात्प्रमुच्यते - ज्ञात्वा देनं मुच्यते सर्वपाशैः - तमेवं विद्वानमृत इह भवति । मुमुक्षुर्वैशरणमहं प्रपद्ये - तं गच्छ शरणं हरिम् - मामेकं शरणंव्रज मां प्रपन्नो विमुच्यते" इत्यादि भक्तिप्रपत्तिमोक्षसाधनत्वबोधकप्रमाणस्य च साक्षात्साधनबोधनात्परम्परा साधनबोधनाच्च मुख्यार्थत्वमेवेत्याह ஆகையால் इत्यादिना - एवं प्रतिबन्धकनिवृत्तये अवश्यकर्तव्यत्वेन समर्थितायाः प्रपत्तेर्लोकसिद्धत्वाद्विधिनैरर्थक्यमाशङ्क्य परिहरति ஆனாலும் இப் प्रपत्तीत्यादिना -

सा.वि - अतो न विधेयत्वं प्रपत्तेरिति मामाशङ्कामनूद्य परिहरति - ஆனாலும் इति - ஆனாலும், तथापि - अवश्यकर्तव्यत्वेऽपि தன்னை, आत्मानं रक्षिத்துக்கொள்ள, रक्षणं कर्तुम् - விரகு, उपायस्य - இல்லாத, अभावेनैव - அழுந்துவான், खिद्यमानः - ஒருவன், एकः - समर्थனை, समर्थं பற்றுமாப்போலே यथा आश्रयति तद्वत् - பற்றானோ, नाश्रयति किम् । विधिக்கிறதென்கை, विधीयत इत्युक्तिः - கூடாது, न घटते ।

सा.सं - मत्पक्षेऽपि सिद्धसाध्योपायपरयोश्शास्त्रयोरन्यतरानर्थक्या प्रसक्ति रपीत्याह - ஆகையால் इति - उक्तरीत्या भक्त्यादेरपि मोक्षांपयोगित्वादित्यर्थः - इत्थं प्रपत्तेरनुपायत्ववादिनः प्रतिक्षिप्ताः - अथ प्रपत्तेरविधेयत्वादि निरासाय तन्मतमपन्यस्यति - ஆனாலும் इत्यादिना - प्रपत्तेर्व्याजत्वेऽपीत्यर्थः - लोकத்தில் इत्यादिना । பற்றானோ इत्यन्तेनौचित्योक्ते -

मू - இதுவும் औचित्यमूलமான अतिवादம், எங்ஙனேயென்னில் लोकத்தில் ஒருவனையொருவன் आश्रयिக்கும் போது இன்னபடியே आश्रयित्தால் இவனிரங்குமென்னுமிடத்தை ஒரு प्रमाणத்தாலேயறிந்து आश्रयिக்குமாப்போலே இங்கு ईश्वरனை இன்ன प्रकारத்தாலே இன்ன अधिकारि பற்றினால் இவனை ईश्वरன் रक्षिக்குமிடம் அறியும்போது कर्तव्यமான शास्त्रமொழிய வேறு प्रमाणமில்லை - நாம் आश्रयिக்க रक्षिக்குமென்று अनुमानத்தாலேயறுதியிட்டு आश्रयिக்கில் ईश्वरतत्त्वज्ञानமுடையாரெல்லார்க்கும் இப்படி अनुष्ठिக்கவத்தாலாகையாலே उपासनविधायकமாக शास्त्रங்கள் निरर्थकங்களாம் -

सा.दी - परिहरिக்கிறார். இதுவும் औचित्य मूलेत्यादि । स्वरक्षणासमर्थனுக்கு संनिहित-समर्थपुरुषावलंबनத்தில் औचित्यமுண்டென்றிவ்வளவைக் கொண்டு अतिवाद பண்ணினபடி - अनुमानात्सिद्धिக்கு மென்றத்தைப் प्रतिबन्ध्या परिहरिக்கிறார் - நாம் आश्रयिக்க इत्यादिயால் -

सा.स्वा - अनुतप्तன் - இந்த मतத்தை निरसिக்கிறார். இதுவும் इति औचित्येति - स्वरक्षणासमर्थன் सन्निहितसमर्थனை आश्रयिக்கை उचितமன்றோவென்று एतावत्मात्रத்தாலே विधिக்க வேண்டா வென்று - अतिवाद பண்ணினார்கள் - विध्यभावத்திலே तात्पर्यமில்லை யென்று கருத்து - प्रपत्तिविधानावश्यकतैயை उपपादिக்கிறார். எங்ஙனேயென்னில் इत्यादिना - இன்ன प्रकारத்தாலே इति, आनुकूल्याद्यङ्गपञ्चक प्रकारத்தாலேயென்றபடி - இன்ன अधिकारीति - देवतान्तररहिताकिञ्चनाधिकारि என்றபடி - शास्त्रமொழிய வேறொரு प्रमाणமில்லை யென்று சொன்னது கூடுமோ? अनुमानத்தாலே யறியலாமே? என்னவருளிச்செய்கிறார். நாம் इति । அறுதியிட்டு, निश्चयित्தென்றபடி - समर्थன் - उपासनத்தை - अनुष्ठिக்க வேண்டும்.

सा.प्र - औचित्यमूलेति । लोकशक्तेनाशक्तरक्षणदर्शनात्कारुण्यकेन दु:खित रक्षणदर्शनाच्च सर्वशक्तिना परमकारुणिकेन भगवता सर्वेषां रक्षणमुचितमित्येवं रूपबुद्धिविशेषमूल: प्रपत्तेस्सुकरत्वज्ञापनार्थोऽतिवाद इत्यर्थ: - ननु लोके आश्रितस्य आश्रयण प्रतिसंबन्धिना रक्ष्यमाणत्वदर्शनात्सर्वेश्वरोऽप्याश्रितानस्मान् रक्षेदित्यनुमायाश्रयणमुपपद्यत इति न तद्विध्यपेक्षेत्यत्र तथा सत्युपासनविधि वैय्यर्थ्यं स्यादित्याह நாம் आश्रयिக்க इत्यादिना -

सा.वि - ''सर्वधर्मान्परित्यज्य'' इति वचन मनुवादकमिति भाव: । औचित्यमूल अतिवादमिति । लोके शक्तेनाशक्त रक्षणदर्शनात्कारुणिकेन दु:खितरक्षणदर्शनाच्च सर्वशक्तिना परमकारुणिकेन भगवता सर्वेषां रक्षणमुचितमित्येवं रूपबुद्धिविशेषमूल: प्रपत्तेस्सुकरत्वज्ञापनार्थोऽतिवाद इत्यर्थ: - लोकेऽपि केनचित्प्रमाणेन आश्रयण प्रकारं ज्ञात्वा श्रयति - तद्वदिह किञ्चित्प्रमाणमन्वेषणीयम् - तत्प्रत्यक्षमनुमानं वा न संभवतीति शास्त्रमेवापेक्षणीय मितिविधेयत्वमभ्युपगन्तव्यमित्याकाङ्क्षोद्भवनपूर्वकमुपपादयति எங்ஙனே யென்னில் इति । இரங்கும், रक्षेत् - ஒரு प्रमाणமில்லை - एतादृशाधिकारिण: एतादृशं फलं प्रति एतादृशं साधनमिति प्रत्यक्षानुमानाभ्यां न सिद्ध्यतीति भाव: । अनुमानादेव सिद्धिश्चेदुपासन विधिवैय्यर्थ्यमव्यवस्था च स्यादित्याह - நாம் आश्रयिக்க इति ।

सा.सं - रौचित्यमूल மான इत्युक्तम् - இன்ன प्रकारத்தாலே इति कथंप्रकारத்தாலே इति कथं भाव उच्यते । सतु भावनयैव काङ्क्षत इति तद्विधिपरमेव वाक्यमिह प्रमाणत्वेन वाच्यमिति भाव: उपासनविधायकेति - अनुमानतस्सुकरस्यै वा -

**मू** - எட்டுக்கண்ணான கரும்பிலே வேர்பற்றும் தலையாடையும் கழிந்தால் நடுவுள்ள **अंशं सर्वोपजीव्य**மாகிறாப்போலே **प्रपत्तिनिष्ठ**ரெல்லார்க்கும் **सर्वकाल**த்திலும் **भगव-दनुस्मरणरस**த்துக்கு **विरोध**மில்லை. **सपरिकर**மான **विलक्षणभक्तियोग**மாகிலிறே சிலர்க்கு **विरोध**முள்ளது - **क्षणमात्रसाध्य**மான **प्रपदनं सिद्ध**மானவளவிலும் **"द्वयमर्थानुसन्धानेन सह सदैवं वक्ता"** என்று **शरण्य**னருளிச்செய்தானிறே - ஆகையால் **"ध्येयो नारायणस्सदा"** என்றதுவும் **यथाधिकारं** சிலர்க்கு **उपाय**மாகவும் சிலர்க்கு **फल**மாகவும் கொள்ளுகையாலிது **स्वतन्त्र-प्रपत्ति**க்கு **विरुद्ध**மன்று -

---

(सा.दी) கண், கணு, पर्वम् । வேர்பற்று, मूलभागः - தலையாடை, अग्रभागः - प्रणवराहित्ये प्रमाणं महाभारतवचनम् । स्वरराहित्ये नारदीयादिகள் सर्वविषयत्ववेवाराहवचनम् - வாயினால் इत्यादि सर्वत्रप्रमाणम्। இந்த अनुस्मरणरूपयोगं साधनभक्ति योगाद्विलक्षणமென்கிறார் - सपरिकरமான इत्यादिயால் இந்த अनुस्मरणमुपायமன்றென்னுமிடத்துக்கு शरण्योक्तिயும் प्रमाणமென்கிறார் - क्षणमात्रसाध्येत्ति - उक्तமான परमप्रकृतार्थத்தை निगमिக்கிறார் - ஆகையால் इत्यादि - अभिगमनादिகள் போலே -

---

(सा.स्वा) கண், கணு, வேர்பற்று, मूलभागம் தலையாடை, अग्रभागம் இப்படியாகில் शूद्रादिகளுக்கு अधिकारமில்லையென்கிற अधिकरणं विरोधिயாதோ? என்னவருளிச் செய்கிறார் - सपरिकरेति । प्रणवरहितमूलमन्त्रத்தில் போலே परिकररहित भगवदनुसन्धानத்திலும் अधिकारமுண்டென்று கருத்து இப்படி विरोधமில்லையென்று சொன்னது கூடுமோ? कृतोपायனான விவனுக்கும் भगवदनुस्मरणं कर्तव्यமோ? அதுக்கு प्रमाणமுண்டோ? என்னவருளிச் செய்கிறார் - क्षणेति - उपसंहरिக்கிறார் - ஆகையால் इति -

---

(सा.प्र) भगवदनु भवस्मरणத்துக்கும் विरोधமில்லை इति - प्रणवचतुर्थीरहितमूलमन्त्ररूपवाक्येन भगवदनुभवस्य तदनुसन्धानरूपनिरन्तरस्मरणस्य चोपपन्नत्वात् स्त्रीशूद्रादीनां तादृशानुभवस्य न काप्यनुपपत्तिरित्यर्थः - विरोधस्तर्हि कुत्रेत्यत्राह - सपरिकरेति । द्वयप्रतिपाद्यतयापि भगवतोनिरन्तरध्यानस्य भगवतैवोक्तत्वात्तद्द्वयस्य च सर्वाधिकारत्वात्सर्वेषां भगवद्ध्यानं सम्भवत्येवेति प्रदर्शयन् सर्वेषां सर्वदा सामान्यतो भगवद्ध्यान कर्तव्यताबोधकस्य भक्तप्रपन्नयोस्साधनत्वफलत्वविशेषे उपसंहारान्नकोऽपि विरोध इत्याह - क्षणमात्रसाध्यமான इत्यादिना - नन्वेवं प्रपन्नैरप्यवश्यं भक्तेरनुष्ठेयत्वे भक्ते प्रपन्ने च भक्तेः प्रपत्तिसाध्यत्वाविशेषादुभयोरधिकारिणोः प्रपत्तिरेव स्वतन्त्रेण मोक्षसाधनमित्यङ्गीकार्यम् -

---

(सा.वि) எட்டுக்கண்ணான கரும்பின், अष्टग्रन्थिकेक्षुदण्डस्य - வேர்பற்றையும், मूलभागம் - தலையாடையும், अग्रभागம் - पत्राणि च கழிந்தால், छिनेत्ति चेत् - ध्यानस्य सर्वसाधारण्यरूपपरम प्रकृतार्थमुपसंहरति - ஆகையால் इति - ननु गीताभाष्ये "सर्वधर्मान्" इत्यस्य अङ्गप्रपत्तिविधिपरतया-

---

(सा.सं) सिद्धिमतां किमनेन ध्यानाभिधानस्मरणेनेति शङ्कामपि गद्यस्थ भगवदुक्त्यैव परिहरति - सपरिकरेत्यादिना - "ध्येयो नारायणस्सदा" इत्यादेरकिञ्चने फलभक्तिमादाय पर्यवसानान्न कथञ्चिदपि स्वरूपविरुद्धाभक्तिरित्युपसंहरति -ஆகையால் इति । भाष्यकृद्भिश्च फलभक्त्यावश्यकत्वोक्तेः -

**मू - इப் प्रपत्ति अङ्गமான वेषத்தை भाष्यादिகளிலே उदाहरिத்தருளினார் स्वतन्त्रமான वेषத்தை गद्यத்திலே அருளிச் செய்தார் - ''क्लेशानां च क्षयकरं योगादन्यं न विद्यते । न कर्मणां क्षयो भूपजन्मनामयुतैरपि । ऋते योगात् कर्मकक्षं योगाग्निः क्षपयेत्परम्'' इत्यादिகளும் स्वतन्त्र -**

(सा.दी) फलरूपமாகையாலென்கை. प्रपत्तिக்கு भक्त्यङ्गत्वமே गीताभाष्यத்திலும் उदाहरिக்கப்பட்டது. स्वातन्त्र्यमुदाहरिக்கப்படவில்லையோ? என்னவருளிச்செய்கிறார். इப் प्रपत्तिயென்று - ननु ''क्लेशानां च क्षमकरं योगादन्यं न विद्यते'' इत्यादिवचनங்களுக்கு இத்தோ டெங்ஙனே ऐकेकण्ठ्यम् ? என்னவருளிச் செய்கிறார். क्लेशानां चेत्यादि - भक्तियोगादन्यन्मोक्षप्रदं नास्ति யென்று वचनத்துக்கு अर्थम् । न कर्मणां क्षयो भूपइत्यादि - योगादृते जन्मनामयुतैरपि कर्मणां क्षयो नास्ति - अतो योगाग्निरेवकर्मकक्षं क्षपयेत् - என்று श्लोकार्थम् - स्वतन्त्रप्रपत्तिविधिबलத்தாலே.

(सा.स्वा) இப்படி स्वतन्त्रप्रपत्तिயுண்டாகில் श्रीमद्गीताभाष्यத்திலே अङ्गप्रपत्तिயையேயருளிச் செய்தது विरोधिயாதோ? என்னவருளிச் செய்கிறார். இப் प्रपत्ति इति - இப்படி स्वतन्त्रप्रपत्तिயுண்டாகில் ''क्लेशानां च क्षमकरं योगादन्यं न विद्यते'' इत्यादिना योगव्यतिरिक्तोपाय निषेधं विरोधि யாதோ? என்னவருளிச் செய்கிறார் - क्लेशानां चेति - ஆனாலும் स्वतन्त्रप्रपत्ति சொன்னது -

(सा.प्र) भक्तेर्मोक्षहेतुत्वोक्तिस्तु भाष्यकारोक्तमुक्त्यनन्तर भाविपरभक्तिपरज्ञान परमभक्तीनां कैङ्कर्यार्थोत्तरानुभवहेतुत्वात्फलत्वेऽप्युपपत्तेः - अथवोभयेषामपि प्रपत्तिरङ्गमेव वा स्यात् - भरन्यासे फलश्रुतिरङ्गेअङ्गिफलकीर्तनत्वेन निर्वाह्येत्यत्र सकलश्रुतिस्मृतीतिहासपुराण हृदयाभिज्ञैर्भाष्यकारैर्भाष्यगीताभाष्ययोः ''तस्य च वशीकरणं तच्छरणागतिरेकैव ''इत्यादिवाक्यैः ''साधनान्तरयुक्ता वा प्रपत्तिस्स्वयमेववा । साधयेन्मुक्तिकामानां विमुक्तिं प्रणवो यथा'' इत्यादि प्रमाण पर्यालोचनपूर्वकमङ्गत्वस्य स्थापनात् ''शरणं त्वां प्रपन्ना ये ध्यानयोग विवर्जिताः । परमात्मा च तेनैव साध्यते पुरुषोत्तम'' इत्यादिप्रमाण पर्यालोचनपूर्वकं गद्येषु स्वातन्त्र्यस्य स्थापनाच्च तथैव स्वीकर्तुमुचितमित्यभिप्रत्याह - இப்प्रपत्तीत्यादि - एवं तर्हि ध्यानव्यतिरिक्तस्य बन्धनिवर्तकत्वनिषेधकानां का गतिरित्यत्राह- क्लेशानामित्यादि । न कर्मणामित्यादि - योगादृते जन्मनामयुतैरपि कर्मणां क्षयो नास्ति योगाग्निः परं कर्मकक्षं क्षपयेदित्यन्वयः । ननु प्रपत्ति -

(सा.वि) व्याख्यानान्न स्वतन्त्रविधितात्पर्यक मित्याशङ्क्य'' तस्य च वशीकरणं तच्छरणागतिरेव - यद्येन कामकामेन'' इति - ''साधनान्तरयुक्ता वा प्रपत्तिस्स्वयमेव वा । साधयेन्मुक्तिकामानां विमुक्तिं प्रणवो यथा'' इत्यादि प्रमाणैः प्रपत्तेस्सर्वफलसाधनत्वात् - प्रस्तुतभक्तिमपि साधयेदिति प्रकृताभिप्रायेण गीताभाष्ये तथा व्याख्यानेऽपि गद्ये स्वतन्त्रप्रपत्त्यङ्गीकारान्न विरोध इत्याह - இப்படி प्रपत्ति अङ्गமான इति - क्लेशानां च क्षमकरमिति वचन विरोध माशङ्क्याहक्लेशानां चेति -

(सा.सं) यथा भक्तेः फलभावः - साधनभावश्च - एवं प्रपत्तेस्स्वतन्त्रभावोऽङ्गभावश्चेत्ययमप्यर्थो भाष्यकृद्भिरेव निर्णीत इत्याहइப் प्रपत्तीति -

**मू - प्रपत्तिविधिबल**த்தாலே **अधिकार्यन्तरविषय**ங்களாகக்கடவன - இப்படி **साध्योपाय विषय**மாக மற்றும் பிறக்கும் கலக்கங்களுக்குப் **परिहारं निक्षेपरक्षै**யிலே கண்டுகொள்வது. இஸ் **साध्योपायनुस** இங்கு **शोधित**மான கட்டளையிலே **रहस्यत्रय**த்தில் **यथा स्थानमनुसन्धेयम्।-**

(सा.दी) இவ் अर्थं विहितव्यतिरिक्त विषयமாகக் கடவது என்று கருத்து - இவ் उपायंशोधितமான கட்டளையிலே नमःपदादिகளிலே अनुसन्धेयமென்கிறார். இஸ் साध्योपायமென்று.

(सा.स्वा) கூடுமோ? भक्तिயும் प्रपत्तिயும் एकமன்றோ? भक्तिव्यतिरिक्तोपायमनुष्ठानपराहतமன்றோ? पूर्वसंप्रदायविरुद्धமன்றோ? इत्यादिशङ्कैயிலருளிச்செய்கிறார். இப்படி इति - அப்போது निक्षेपरक्षैயிலே தானே அறியலாயிருக்கையாலே இங்கு साध्योपायशोधनं व्यर्थமன்றோ? என்னவிங்கு रहस्यत्रयमुखेन வரிகைக்காக शोधनं सार्थकமென்றருளிச் செய்கிறார். இஸ் साध्येति । प्रकरणान्तरத்தில் शोधनं विप्रकीर्णतया मन्त्रத்தில் उपसंहर्तुमशक्यமானபடியாலுமிங்கு प्रधानार्थशोधनं பண்ணவேணுமென்று கருத்து. -

(सा.प्र) रूपं ज्ञानं किं स्मृतिरूपम्? उतानुभवरूपं? स्मृतिरूपत्वेऽपि सकृत्स्मृतिमात्ररूपं वा? सात्स्वत स्रोतोवच्छिदुरस्मृतिसन्ततिरूपं वा? तैलधारावदविच्छिन्नस्मृति संततिरूपं वा? न प्रथमद्वितीया - सावधान श्रवणमननजनितसंस्कारोन्मेषादेव संभावितत्वेच विधेयत्वानुपपत्तेः - नापि तृतीयः - भक्त्यव्यतिरेकात् - नाप्यनु भवरूपम् - अलौकिकार्थविषयतेनास्मदादि करणफलत्वायोगात् । शास्त्रफलत्वे तु प्रमाणतन्त्रत्वाद्विधेयत्वानुपपत्तिः - योगपरिकर्मितस्वान्तफलत्वे तु भक्तिकुक्षिनिक्षेपस्स्यात् । स्वरूपातिरिक्तविषयस्य करणनिरपेक्षस्य प्रकाशस्य संसारदशायामसिद्धेः । अतः प्रपत्तिरूपं ज्ञानं न सेत्स्यतीत्येवमाद्याशङ्काः लोक अशक्तेन शक्तविषये रक्षणप्रार्थनभरत्तसयोर्दर्शनात्तद्वदेव भगवद्विषयेऽपि तयोरनुष्ठातुं शक्तत्वात्तावता मोक्षसिद्ध्युपपत्तेः द्रव्यत्वगुणत्वादिनिरूपणवत् स्मृतित्वानुभवत्वनिरूपणस्यानुपयुक्तत्वाद्वस्तुतस्तु भगवद्विग्रहविशेषसन्निधौ द्वयोच्चारणपूर्वकमानुकूल्यसङ्कल्पाद्यङ्गविशिष्टस्य स्वरूपभरफलानां भगवच्छेषत्वानु सन्धानात्मकस्य स्मृति रूपस्य भरन्यासस्य ''वायव्यग् श्वेतमालभेत'' इत्यादिवाक्यैर्द्रव्य विशेषाणां देवताविशेष शेषत्वानुसन्धान विधानवत् ''तं गच्छ शरणं हरिम्'' इत्यादिभिर्विध्युपपत्ते भक्तिव्यतिरेकेण ज्ञानरूपोपायसिद्धिरित्येवमादि परिहाराश्च निक्षेपरक्षायां विस्तरेणानुसन्धेया इत्याह - இப்படி साध्यो पायेत्यादिना - एतत्प्रबन्धप्रतिपाद्यस्य कृत्स्नस्यरहस्यत्रयार्थत्वाद्रहस्यत्रये साध्योपाय प्रतिपादकांश एवं शोधनवैशिष्ट्येन सोऽनुसन्धेय इत्याह - இஸ் साध्योपायमित्यादिना -

(सा.वि) மற்றும் பிறக்கும் கலக்கங்களுக்கு, इतोऽप्यधिकमुत्पन्नानां शङ्कानाम् । -

(सा.सं) अधिकार्यन्तरशब्दस्सकिश्चनार्थकः तेन नतद्विरोधोऽमीत्यर्थः यथास्थानमिति - नमशब्दशरणशब्दमामहं शब्देष्वित्यर्थः -

(सा.दी) त्रैवर्णिकाधिकारत्वं भक्तेर्यद्यपि यागवत् । सत्यादिवत् सर्वयोग्या प्रपत्तिरपि वैदिकी ॥ १ ॥
विश्वासप्रार्थनायां स्यात्स्वात्मत्क्षाभरार्पणे । पर्यवस्यत्यतश्शास्त्रे न्यासोऽङ्गश्चेव विधीयते ॥ २ ॥
अङ्गपञ्चकसंपन्नमात्मरक्षाभरार्पनम् । प्रपत्तिशास्त्रविहितं स्वदेशिकसंमतम् ॥ ३ ॥
न स्वरूपविरुद्धत्वं भक्त्यादेविहितत्वतः । नाहंकारादिगर्भत्वादस्यशास्त्रेषु कथ्यते ॥ ४ ॥
न शेषता विरुद्धत्वं पारतन्त्र्यविरोधिता । शेषत्वं पारतन्त्र्यं च मुक्तावपिच विश्रुते ॥ ५ ॥
न चैकान्त्यविरुद्धत्वं श्रीशसंराधनत्वतः । प्राप्यानुरूपताभावो नान्येषां युक्तिगोचरः ॥ ६ ॥
शास्त्रादेवावसेयातो भक्तिः प्राप्योचितामता । परमषिगृहीतत्वान्नैवाचार्यबहिष्कृता ॥ ७ ॥
कलौ निषेधो नैवास्यास्तदशक्तेर्विरुद्धयते । संभावितस्वभावत्वं नाङ्गानां विहितत्वतः ॥ ८ ॥
संभावितत्वे चाङ्गवनां विश्वासेऽप्येतदापतेत् । विश्वासतारतम्यस्य संभवाल्लोकशास्त्रयोः ॥ ९ ॥
महानेव हि विश्वासः प्रपत्तेरङ्गमिष्यते । तत्काले मन्दविश्वासानपि श्रीशोऽधिकारिणः ॥ १० ॥
क्रमेणपूणविश्वासान्कृत्वा पाति दयानिधिः । उपायान्तरशक्त्यादिविलंबक्षमताफले ॥ ११ ॥
व्यासादेर्भजने हेतुर्नविश्वासादिशून्यता । क्वचित्प्रपन्ने भगवत्साक्षात्कारादि हरयते ॥ १२ ॥
न्यासे सङ्कल्पवैषम्यात्प्रारब्धसुकृतात्तुवा । केचिद्दृष्टफलासिद्ध्या न्यासेसन्दिहतेफले ॥ १३ ॥
कर्मकर्त्रादिवैगुण्यात्फलसिद्धिहि सर्वतः । विरुद्धफलहेतुत्वमभिसन्धिवाशाद्भवेत् ॥ १४ ॥
एकस्य राज्ञिदातव्यजंबीरफलनीतितः ॥ प्रवृत्ति धर्मौस्तोभक्तिप्रपात्तीकामकामिनाम् ॥ १५ ॥
निवृत्तिधर्मौ तावेव भगवच्छरणार्थिनाम् । आवृत्त्यनावृत्तिवशाद्विषमावपितावुभौ ॥ १६ ॥
मोक्षैकफलदौ स्यातामधिकारिविशेषतः । उपायफलयोरेकरूपत्वेऽपि प्रपन्न्यो : ॥ १७ ॥
फले विलम्बाविलंबौ त्वराया स्तारतम्यतः । साध्यो पाय प्रपन्नोयत्सिद्धोपायः फलप्रदः ॥ १८ ॥
तत्सिद्धसाध्ययोः कार्यं फलंशास्त्रेषुवर्ण्यते । हरिरेकस्सदाध्येय इत्याद्युक्त्यनुसरतः ॥ १९ ॥
अङ्गप्रपत्तिपरतां श्लोकस्याहुर्नतन्मतम् । हरिरेकस्सदा ध्येय इत्यादौ हि विधीयते ॥ २० ॥
स्वतन्त्रन्यासनिष्ठस्य फलरूपमुपासनम् । कैङ्कर्येक्रियमाणेतु ख्यातिलाभादिवर्जितः ॥ २१ ॥
प्रयोजनान्तरानिच्छुर्मोक्षं चापिफलंत्यजन् । स्वयं प्रयोजनत्वेन मुक्तवत्सर्वमाचरेत् ॥ २२ ॥
अन्यभिगमनं त्याज्य तथान्यार्थप्रवृत्तयः । अन्यपूजान्यकीतिंश्चत्याज्यमन्यविचिन्तनम् ॥ २३ ॥
एतेषां विनिवृत्त्यर्थं हरावभिगमादिकम् । विधीपतेऽस्य शास्त्रेषु कालेषूक्तेषु पञ्चसु ॥ २४ ॥
अनर्हाणामपि नृणां देवाभिगमनादिषु । स्वयोग्यनित्यकृत्यैर्वाः स्थितिश्शिश्रूषयापिवा ॥ २५ ॥
विलक्षणो भक्तियोगः स्त्रीशूद्राणां निर्षिद्ध्यते । सर्वेषां सर्वदा कार्यो देवानुस्मृतिलक्षणः ॥ २६ ॥
क्लेशानां च क्षमकरं योगादन्यं न विद्यते । इत्यादि तु प्रपन्नेभ्य इतरत्र नियम्यते ॥ २७ ॥

---

இப்படி இவ் अधिकारத்தில் प्रपत्तिயின் सर्वाधिकारत्वமும், विश्वासादिகள் अङ्गियன்று निक्षेपமே अङ्गि யென்னுமிடமும், மற்றுமுண்டான शङ्काविशेषपरिहारங்களும், भक्त्यादिகளுக்கு स्वरूपविरुद्धत्वा दिशङ्कापरिहारமும் स्वरक्षणार्थव्यापारं विहितமென்னுமிடமும், विहितत्वाद्भक्तिप्रपत्ति களிரண்டும் यथाधिकारं परिग्राह्यங்களென்றும், भक्तिயும் आचार्यरुचिपरिग्रहीतமென்றும், कलियुगத்திலும் -

**मू - வரிக்கின்றனன்பரன் யாவரையென்று மறையதனில் விரிக்கின்றதும் குறியொன்றால்-**

(सा.दी) भक्तिக்கு अधिकारिகள் संभावितரென்றும், अशक्ताधिकारिக்கு भक्तिस्वाधिकारविरुद्धமென்றும், न्यासविद्यैயே सर्वविद्यैகளிலும் श्रेष्ठமென்றும், परिकरविषयशङ्कापरिहारங்களும், भक्तिप्रपत्तिகளிரண்டும் अभिसन्धिभेदத்தாலே विरुद्धफलसाधनமாகக் கூடுமென்றும், प्रयोजनान्तरपरர்க்கு இவை प्रवृत्तिधर्मकोटिயிலே நிற்குமென்றும், अन्याभिगमनातिகளாகாதென்றும், प्रपन्नர்க்கு सर्वकालத்திலும் भगवदनुस्मरणरूपफलभक्त्यनुवर्तनத்துக்கு विरोधமில்லை யென்றும் சொல்லித் தலைக் கட்டினார்.

இனி सिद्धोपायवशीकरणार्थமாக साध्योपायमवश्यमपेक्षितமென்னும் अर्थத்தைப் பாட்டால் सङ्ग्रहिக்கிறார் - வரிக்கின்றனன் इत्यादि - பரன், परमात्मा । யாவரையும் வரிக்கின்றனன்., எல்லோரையும் मोक्षத்துக்கு वरिக்குமென்றும். மறையதனில் ''यमेवैष वृणुते तेन लभ्य:'' என்னும் श्रुतिயில். விரிக்கின்றதுவும், विस्तरिத்துச் சொல்லப்படுகிற स्वयंवरणமும் - குறியொன்றால் குறி, व्याजम्, ஒரு व्याजத்தை முன்னிட்டென்றபடி -

(सा.स्वा) இப்படி पूर्वोक्तप्रकारेण साध्योपायशोधनं பண்ணினது கூடுமோ? ''यमेवैष वृणुते तेनलभ्य:'' என்று वेदान्तங்களிலே परमपुरुषवरणीयतैயே मोक्षसाधनமென்று தோற்றுகையாலே भक्तिप्रपत्तिகளுக்கு साधनत्वंகூடுமோ? என்கிற शङ्कैயைப் परिहरिயா நின்று கொண்டு अधिकारार्थத்தைப்பாட்டால் सङ्ग्रहिக்கிறார். வரிக்கின்றனன் பரன் इति । परன், सर्वोत्तमனான श्रिय: पति: । - யாவரை, ''यमेवैष वृणुते तेन लभ्य:'' என்கிறபடியே யாதொரு पुरुषனை - வரிக்கின்றனன், வரிக்குமென்று - மறையதனில் वेदத்திலே ''यमेवैष'' என்கிற वेदத்திலே - விரிக்கின்றதும், विस्तरिத்ததும். विस्तरिத்துச் சொல்லப்படும் वरणமுமென்றபடி - வினையரை, अनादिकर्मप्रवाहத்தாலே निग्रहविषयीभूतரானவரை. குறியொன்றால் குறி, व्याजम् । ஒரு व्याजத்தாலே निर्व्याजமாக-

(सा.प्र) उक्ताधिकारार्थं स्त्रीशूद्रादीनामनुसन्धानार्थं द्रमिडगाधयासङ्गृह्याह - வரிக்கின்றனன் इत्यादिना । यद्वा, ननु भगवान्निर्हेतुकस्वकृपयायं वृणुते तेन लभ्यो न तु श्रवणमनन साध्य ध्यानादिनेत्यमुमर्थं बोधयन्त्या ''नायमात्मा प्रवचनेन लभ्यो न मेधयान बहुना श्रुतेन यमेवैष वृणुते तेन लभ्य:'' इति श्रुत्या भक्तिप्रपत्त्योर्निषेधात्तद्विरोध: स्यादित्यत्राह - வரிக்கின்றனன் इत्यादिना । வரிக்கின்றனன் பரன் யாவரையென்றும், परमपुरुषो यान् वृणुते इति बोधयन्त्याम् । மறையதனில் श्रुतौ । விரிக்கின்றதும் प्रकाश्यमानमपि குறியொன்றால், केनचिद्भक्तिप्रपत्त्याख्यचिह्नेन - निर्हेतुकस्वीकारस्य शब्ददवगयेऽपि कथं केनचिद्व्याजेनैव -

(सा.वि) गाधयानुसन्धत्ते । வரிக்கின்றனன் इति । परன், परमात्मा । யாவரை, यमेव । வரிக்கின்றனன், वृणुते । என்று, ''यमेवैष वृणुते तेन लभ्य:'' एवं रूपायाम् - மறையதனில், श्रुतौ । விரிக்கின்றதும், विस्तीर्योक्तं स्वयं वरणमपि । குறியொன்றால், व्याजेन । भक्तिप्रपत्ति रूपव्याजेन - कस्य वरणं व्याज -

(सा.सं) வரிக்கின்ற इति - யாவரையென்று மறையதனில், ''यमेवैष'' इति श्रुतौ । வரிக்கின்றனன் பரன், ''प्रियतम एवहि'' इति भाष्योक्तविधया मोक्षयिष्यामीति वरणं कर्तुमुद्युक्त: अस्मत्स्वामी पुरुष: । விரிக்கின்றதும் इति ।

**मू** - வினையரையாதலினாம், உரைக்கின்ற நன்னெறியோரும் படிகளிலோர்ந்துலகம், தரிக்கின்ற -

(सा.दी) வினையரை, हेतुगर्भमिदंविशेषणम् । வினையர், अपराधिகள் अपराधित्वात् என்றபடி - ஆதலில் நாமுறைக்கின்ற நன்னெறி, शास्त्रங்களில் சொல்லப்படுகின்ற भकितप्रपत्तिरूपसन्मार्गங்களை - ஒரும்படிகளிலோர்ந்து, शास्त्रं சொன்னபடியே सिद्धोपायप्राधान्यात्तद्वशीकरणरूपोपायமாகவேண்டி - உலகம் தரிக்கின்ற -

(सा.स्वा) வரிக்குமாகில் सर्वमुक्तिप्रसङ्गं வருமென்று கருத்து - ஆதலில், ஆகையால் - நாம், वयम् - உரைக்கின்ற, शास्त्रங்களிலே சொல்லப்படுகிற நன்னெறி, நல்ல मार्गं - भतिप्रपत्तिरूपोपायங்களென்றபடி. ஒரும்படிகளில் शास्त्रங்களிலே சொல்லும் प्रकारங்களிலே तत्प्रकारेणவென்றபடி - ஓர்ந்து, अनुसन्धिத்து - भक्तिप्रपत्तिகள் वशीकरणமென்றும் तद्वशीकृतனான श्रिय:पतिயே साक्षात्प्रधानोपायமென்றும் தெளிந்து - உலகம் தரிக்கின்ற, अन्तर्यामितयाजगद्धारकனான-

(सा.प्र) स्वीकरोतीति विवक्षितमित्युच्यत इत्यत्राह । வினையரை इति । अनाद्यनन्त कर्मपाशप्रग्रथितत्वात्केनचिद्व्याजेनैव मोचयतीति वक्तव्यम् - अन्यथा वैषम्यनैर्धृव्यप्रसङ्ग इति भाव: - குறி, चिह्नम् - भक्तिप्रपत्त्यो र्भगवति वैषम्यनैर्घृण्याभावज्ञापकतया चिह्नत्वमिति भाव: । ஆதலில், अत: - நாம், वयम् - உரைக்கின்ற நன்னெறி, वेदान्तोदित भक्तिप्रपत्तिरूपमार्गम् - ஒரும்படிகளிலோர்ந்து, येन प्रकारेण ज्ञातव्यं तथा ज्ञात्वा एतदधिकारोक्त प्रकारेण ज्ञात्वेति भाव: உலகம் தரிக்கின்ற ",तस्य वाक्षरस्य प्रशासने गार्गिद्यावापृथिव्यौविधृते तिष्ठत: - एष सेतुर्वितरण: - एषां लोकानामसम्भेदाय आधारभूतं सर्वस्य" इत्यादिभि:

(सा.वि) सापेक्षं तात्रोक्तम् - வினையரை, पापिन: । वरणमिति संबन्ध: । पापिन इति हेतुगर्भविशेषणम् - यतोऽनादिसन्तन्यमानपापवत्वं ततस्तद्वरणं व्याजसापेक्षम्-अन्यथा वैषम्यनैर्घृव्यप्रसङ्गात् - सर्वमुक्तिप्रसङ्गाच्च । तस्मान्ननिर्हेतुकं वरणम् - किन्तु व्याजसापेक्षमिति भाव: -भाष्यकारैरपि !"प्रियतम एव हि वरणीयो भवति। यस्यायं निरतिशय प्रियस्स एवास्य प्रियतमो भवति । प्रीतिरूपतापन्न भक्तिरेव वरणहेतुतया श्रुत्यभिप्रेता - नतु निर्हेतुकं वरणम्" इति विवृतत्वात् - न श्रुतौ निर्हेतुकवरणप्रसक्तिगन्ध: - ஆதலில், अत: कारणात् - நாம், वयम् । உரைக்கின்ற, वेदान्तोदितं भक्तिप्रपत्तिरूपं -நன்னெறி, समीचीनमार्गम् - ஒரும்படிகளில் विचार्यनिर्णेतव्यप्रकारेषु - ஓர்ந்து, विचार्य - येन केनचित्प्रकारेण ज्ञातव्यं ज्ञात्वेत्यर्थ: -உலகம் தரிக்கின்ற,-

(सा.सं) வினையரை, पुण्यपापप्रग्रथितेषु मध्ये यं कंचित्पुरुषम् । விரிக்கின்றதும் குறியொன்றால் इत्यन्वय: - नहि भक्त्यादि पर शास्त्र प्रपञ्चित भक्त्यादि रूप प्रियतमत्वा पादकज्ञानेन विना पापिषु मध्ये कश्चित्पुरुषं सिद्धोपायो वरयतीति भाव: - ஆதலில் நாம், अतो वयम् - "यतो नायमात्मा" इति श्रुतिर्व्याजविशेषस्य वरणीयत्व परतया भाष्यकृद्भिर्व्याख्याता - श्रुत्यक्षरपर्यालोचनापि यतस्सएवार्थ: अर्थसामर्थ्याच्च यत एव तथा वक्तव्यम् । वेदमार्गनिष्ठामत एवमाचरन्ति अत इत्यर्थ: । உரைக்கின்ற इति - वेदान्तभागविशदीकृत साध्योपायतत्प्रसन्न -

मू - தாரகனார் தகவாற்றரிக்கின்றனமே ॥ 31 ॥

तत्तद्वैतुक हेतुके -

(सा.दी) தாரகனார் தகவால், सर्वान्तर्यामिயாய் संसारतारकனான श्रिय:पतिயினுடைய தகவால் - मुख्योपायतया அறுதியிட்ட कृपैயை अवलम्ब्य - இதுவே प्रधानமான उज्जीवनोपायமென்று अनुसन्धिத்து - தரிக்கின்றனமே, विश्वसिத்து निर्भरராயிரா நின்றோமென்கை ॥31॥

இவ்अर्थं நமக்கு आचार्यसार्वभौमரால் उपदेशिக்கப்பட்டதென்கிறார் - तत्तद्वैतुकेति - तत्तद्वैतुकहेतुके, அவ்வோ शुष्कतार्किकரான वैतण्डिकரால் प्रवर्तिக்கப்பட்ட -

(सा.स्वा) தாரகனார், संसारतारकனான शरण्यனுடைய தகவால், कृपैயினாலே. தரிக்கின்றனம், उज्जीवताளானோமென்றபடி - परमपुरुष वरणीयतैயும் प्रीतिरूपापन्न भक्तिप्रपत्तिरूपव्याजविशेषाधीनैயாகையாலே सिद्धोपायवशीकरणद्वारा भक्तिप्रपत्तिகளே मोक्षोपायங்களென்று கருத்து ॥ 31 ॥

இப்படி पूर्वपक्षोक्तयुक्तिகளைப் परिहरिத்து भक्तिप्रपत्तिகள் मोक्षसाधनங்களென்று साधिத்தது கூடுமோ? तोऽप्यधिकयुक्तिमान्கள் संभावितராய் उक्तार्थத்தை निराकरिயார்களோ? ஆகையால் उक्तव्यवस्थै கூடுமோ? என்கிற शङ्कैயைப் परिहरिத்துக்கொண்டு अधिकारार्थத்தை श्लोकத்தாலே सङ्ग्रहिக்கிறார். तत्तदिति - हेतुभिर्वादकर्तारः हैतुकाः - तेते हैतुकाः तत्तद्वैतुकाः । त एव हेतवोयस्मिन् तत्तद्वैतुक हेतुके, तत्तद्वादि प्रवर्तित इत्यर्थः ।

(सा.प्र) स्मर्वाधारतयावगतस्य भगवतः । தாரகனார். संसारतारकस्य - தகவால், कृपया - यादृच्छिकसुकृतजायमानकटाक्षप्रभृतिसाधनानुष्ठापन कैङ्कर्यप्रापणपर्यन्तस्य भगवत्कृपामूलमिति भावः தரிக்கின்றனமே, धृता भवेय - कैङ्कर्ये प्रतिष्ठिता भवेयेत्यर्थः ।। ३१ ।।

उक्तप्रकारेण साध्योपायशोधकत्वं स्वस्याचार्यकृपालब्धमित्याह - तत्तदित्यादिन । -

(सा.वि) लोकान् धारायतः - தாரகனார், तारकस्य - தகவால், कृपया - தரிக்கின்றனமே, स्थिरप्रतिष्ठिता अभूम - शास्त्रोक्त स्वाधिकारानुगुण प्रपत्तिमार्गामवलम्ब्य मगवत्कृपाविषयभूता निर्भरा अभूमेत्यर्थः ।। ३१ ।।

साध्योपायशोधनसामर्थ्यमस्माकमाचार्यकृपालब्धमित्याह - तत्तद्वैतुकेति - केवलहेतुभिर्व्यवहरन्तीति हैतुकाः ते ते तत्तद्वैतुकाः - शुष्कतार्किकाः हेतुः कल्पनाकारणं -

(सा.सं) सिद्धोपायौ येन केन प्रकारेण निर्णीया - लोकान् धारयतस्संसारार्णव तारकस्य व्याजविशेषप्रभवया कृपयैव फलसंशयं विना प्राप्तधैर्या अभूमसाध्योपोरद्भवया कृपयैव सिद्धोयाये प्रतिष्ठिता अभूमेत्यर्थः ।। ३१ ।।

ननु सिद्धोपायस्सर्वज्ञत्वात्सर्व शक्तित्वात्सहज सुहृत्त्वाच्छेषित्वाच्च शेषभूतान् स्वयमन्यनिरपेक्ष एव रक्षति - सापेक्षत्वे सहजसौहार्दाद्युच्छित्तेः - सिद्धोपाय प्राधान्यस्वातन्त्र्ययोर्भङ्गश्चेत्यादि युक्तिजाल निराकरणाक्षमश्रद्धाजडै स्सिद्धोपाय विषयक विशुद्धाशयविधुरैरादृतया किं साध्योपायाख्यया प्रपत्त्येत्यत्राह तत्तदिति । तत्तद्वैतुकाः, -

**मू - कृतधियस्तर्केन्द्रजालक्रमे बिभ्राणाकथकप्रधानगणने निष्ठांकनिष्ठाश्रयाम् ।**

(सा.दी) तर्केन्द्रजालक्रमे, तर्का एव इन्द्रजालक्रमः - तस्मिन्निन्द्रजालीयविद्यायाமென்றபடி - कृतधियः, शिक्षितबुद्धयः - अनेन परमर्मज्ञत्वा तत्परैरक्षोभ्यत्वं सूच्यते - अत एव कथकप्रधानगणने, तार्किकाग्रेसरगणनायां - कनिष्ठा श्रयां निष्ठां बिभ्राणाः, कनिष्ठिका श्रयां नियमेन स्थितिं धारयन्तः - कनिष्ठिकया प्रथमगणिततयाश्रयन्तः என்றபடி - இத்தால் परव्यामोहनिवर्तनसामर्थ्यं சொல்லிற்று -

(सा.स्वा) तर्केन्द्रजालक्रमे, कुतर्केन्द्रजालविद्यायाम् । कृतधियः, शिक्षितधियः । परमर्मज्ञा इत्यर्थः कथकप्रधानगणने, एते कथकाः प्रधाना इयन्त इत्यङ्गुल्यागणनायां कनिष्ठाङ्गुल्याश्रयां निष्ठां बिभ्राणाः - अङ्गुल्यागणनायाः कनिष्ठाङ्गुल्युपक्रमत्वादिति भावः - इतोऽप्याधिकास्तार्किकाः न संभाव्यन्त इति भावः - न केवलं तर्कमात्रेण सर्वार्थसाधनक्षमाः । अपि तु ततोऽपि -

(सा.प्र) प्रपत्तेरपि साधनत्वाङ्गीकारे साधनैक्यविरोधप्रसङ्गः - भगवतः प्रपत्ति साध्यप्रसादवत्त्वाङ्गीकारे सिद्धत्वविरोधः - स्वाभिप्रायज्ञापनफलक गोप्तृत्ववरणाङ्कक प्रपत्तिसापेक्षत्वे उपायस्य सर्वज्ञत्वविरोधः - प्रपत्तिरूपो पाधिसापेक्षत्वे निरूपाधिकपरदुःखनिराचिकीर्षारूपनिरवधिक कारुण्यवैशिष्ट्यविरोधः - सहकारित्वाङ्गीकोर तदभावे कार्योत्पादना शक्तेस्सर्वशक्तित्वविरोधः - पूर्णत्वविरोधः - नैरपेक्ष्यविरोध श्चेत्यादि तत्तद्धेत्ववलम्बनेन व्यवहारात् - तेते वादिनस्तत्तद्धैतुकाः, ते हेतुः कारणं यस्य क्रमस्य तस्मिन्तर्का एवेन्द्रजालानि । इन्द्रजालवद्विपरीत ज्ञानजनकास्तर्काः - तेषां क्रमः, स्वरूपस्वभाव भेदः - तस्मिन् कृतधियः, शिक्षितबुद्धयः - परव्यामोहजनक कुतर्कप्रयोगे तन्निवर्तकतर्क प्रयोगे च प्रवीणा इत्यर्थः - अत एव कनिष्ठा ङ्गुलिनिष्ठां कथकेषु प्रधानानां परिगणनायां निष्ठां, निर्णयाग्रगव्यतामित्यर्थः - बिभ्राणाः, येषु प्रधानतया परिगणितेष्वन्यस्य प्राधान्येन परिगणनमयोग्यं तादृशा इत्यर्थः कथकाग्रगण्या इति भावः - एवमप्रतिष्ठितकुतर्क निकर करम्बितमनस्कत्वे -

(सा.वि) यस्मिंस्तस्मिंस्तथोक्ते - तर्का एवेन्द्रजालं तस्य क्रमे रीतौ प्रत्यक्षादि प्रमाणसिद्धार्थान्यथाकरणापूर्वकत्वादि सादृश्यादिन्द्रजालत्वरूपणम् । कृतधियः , शिक्षितबुद्धयः - अत एव कनिष्ठां कनिष्ठाङ्गुलि राश्रयो गणन साधनं यस्यास्तां तथोक्ताम् - कथक प्रधानानां, कथकाग्रे सराणाङ्गणनेनिष्ठां स्थितिम्, बिभ्राणाः, कथकाग्रेसराणां गणनाप्रसङ्गे प्रथमं गव्यमाना इत्यर्थः - हैतुककल्पिततर्केन्द्रजाल -

(सा.सं) तत्तत्केवलतार्किकाः । तद्धेतुके, तैः कल्पिते - तर्करूपव्यामोहक विद्याविशेषे - इन्द्रजालाख्यव्यामोहकस्य क्रम इव क्रमो यस्य तर्कस्य - तादृशतर्केन्द्रजालक्रमे । कृतधियः, शिक्षितबुद्धयः - निग्रहस्थानादिना जल्प वितण्डादिनिरसनकुशला इति यावत् - अथ ''नवयं कवयस्तु'' इत्युक्तवैभवमाह । बिभ्राणा इति - वावदूक प्रधानविषयिण्यां गणनायां प्रसक्तायां कनिष्ठाश्रयां निष्ठाम् - नियमेन अग्रगव्यतावैभवं बिभ्राणास्तद्वन्तः - अथ शास्त्रान्तरपरिश्रमाय तद्बुद्धिचलनापादक मनः कालुष्यविधुराश्चेत्याह । -

**मू- अध्यात्म श्रुतिसंप्रदायकतकैरद्धाविशुद्धाशयास्सिद्धोपायवशि(शी) क्रियामिति हि नस्साध्यां -**

(सा.दी) किञ्च, अध्यात्मेत्वादि - अध्यात्मश्रुतयः, उपनिषदः - तत्संप्रदाया, तासामविच्छिन्नोपदेशाः - त एव कतकबीजानि । तैरद्धा, निश्चयेन - विशुद्धाशयाः, अपार्थरूप पङ्करहितचित्ताः । वेदान्तसाम्राज्य सार्वभौमाः । இத்தால் सत्संप्रदाय सिद्धि सूचितै । सिद्धोपायस्य, श्रियः पत्युः - वशीकरणरूपां - साध्यां, साध्योपाय भूताम् - प्रपत्तिम् । इति, இவ் अधिकारத்திற் சொன்ன -

(सा.स्वा) प्रबलप्रमाणभूत श्रुत्यन्तसंप्रदायतोपीत्याह - अध्यात्मेति - अध्यात्म श्रुतयः, उपनिषदः - तासां संप्रदायाः अविच्छिन्नोपदेशाः - तएव कतकबीजानि । तैरद्धा, संयग्विशुद्धः - आशयः- येषां ते समीचीनतर्कानुगृहीतोपनिषत्सत्संप्रदाय रूपदृढतर प्रमाणनिर्मलीकृतान्तः करणा इति यावत् - साध्यां, साध्यरूपां - सिद्धोपाय वशीक्रियां, भक्तिप्रपत्तिरूपाम् - इति, उक्तप्रकारेण - अस्मिन्नधिकारे उपपादित प्रकारेण - नः, अस्मान् -

(सा.प्र) कस्याप्यर्थस्य तत्त्वव्यवस्थान स्यादित्यत्राह - अध्यात्मेति - पूर्वोक्तानां सत्तर्कत्वे भक्तेरपि साधनत्वाभाव प्रसङ्गः । भक्तिप्रपत्तिप्रसाद्यत्वप्रापक प्रमाण विरोधः - ''अप्रार्थितो न गोपायेत्'' इत्यादि विरोधः, भक्तिप्रपत्तिविधिवैयर्थ्य प्रसङ्गः । पूर्वोक्तयुक्तीनां स्वव्याप्तिप्रदर्शनस्थलाभावेन व्याप्तिशून्यत्वम्-भक्ति प्रपत्त्यनङ्गीकारे वैषम्यनैर्घृव्यप्रसङ्ग इत्यादि तर्कानुगृहीताध्यात्मश्रुत्यर्थानां संप्रदायतथ्श्रवणमेव जलस्य कल्मषच्चेदक कतकवन्मतीनां कल्मषच्चेदक मिति भावः । एवं भूतवादिहंसाम्बुदाचार्या वेदान्ताचार्याणामाचार्याः उक्तप्रकारेण शोधितं सिद्धोपाय वशीकरणसाधनं साध्योपायं -

(सा.वि) शिक्षितबुद्धीनां कथं तत्त्वोपदेशयोग्यत्वमित्यत्राह - अध्यात्मेति - अध्यात्मश्रुतयः, उपनिषदः - संप्रदायाः, अविच्छिन्नोपदेशपरम्पराः - त एव कतकबीजानि - तैरद्धा, याथार्थ्येन । विशुद्धाशयाः, परिशुद्धचित्ताः - परिकल्पितकुतर्क पङ्कजनितकालुष्ये सत्यपि श्रुतिसंप्रदायै स्तत्कालुष्यनिवर्तन समर्था इति भावः । परकुतर्काणां प्रति तर्ककल्पनेन निवारणसामर्थ्यद्योत नाय कथकप्रधानेत्यादि विशेषणम् । एतादृशा अस्मदाचार्याः- साध्याम्, अनुष्ठेयस्वरूपां - सिद्धोपायवशीक्रियां, सिद्धोपायवशीकरणसाधन- शरणागतिम् । समध्यापयन्, संयगध्यापितवन्तः - ''इङध्ययने'' इत्यस्मादधिपूर्वाण्णिचि क्रिञ्जनाणा- वित्याकारादेशे आतिर्ह्रीत्यादिना पुगागमे लङि प्रथमपुरुष बहुवचनं क्रियाफलिक्रियाफलस्य कर्तृ गामित्व विवक्षायामपि बुधयुधनशजनेति परस्मैपदम् -

बुद्धिसौकर्याय सारदीपिकायामुक्ताधिकारार्थसङ्ग्रहकारिका लिख्यन्ते - प्रपत्तेर्वैदिकत्वेऽपि -

(सा.सं) अध्यात्मेति - आत्मानमधिकृत्य प्रवृत्ता श्रुतयः तत्तद्गुरूपदेशरूपसंप्रदायाश्च ता एव कतकबीजानि निजावस्थानिमनः प्रपन्नतापादकानि - तैः अद्धा - नितरां, विशुद्धाशयाः - निरस्तमनो मालिन्यादि महाचार्याः - साध्यां, कृतिसाध्यां प्रपत्ति रूपाम् । सिद्धोपायभूतपरमपुरुषवशीक्रियात्वे न हि एतदधिकार निर्धारितक्रमेण -

(सा.वि)

सर्ववणाधिकारता । विश्वासप्रार्थना चात्मरक्षाभरसमर्पणे ।। १ ।।

पर्यवस्यत्यतश्शास्त्रे न्यासोऽङ्ग्येव विधीयते । अङ्गपञ्चकसंपन्नं रक्षाभरसमर्पणम् ।। २ ।।

प्रपत्तिशास्त्रविहितं सर्वदेशिकसंमतम् । न स्वरूपविरुद्धत्वं भक्त्यादेर्विहितत्वतः ।। ३ ।।

नाहङ्कारादिगर्भत्वमस्य शास्त्रेषु कथ्यते । न शेषता विरुद्धत्व पारतन्त्र्यविरोधिते ।। ४ ।।

शेषत्वं पारतन्त्र्यं च मुक्तावपिच विश्रुतम् । न चैकान्त्यविरुद्धत्वं श्रीशसंराधनतत्वतः ।। ५ ।।

प्राप्यानुरूपताभावो नान्येषां युक्तिगोचरः । शास्त्रादेवावसेयातो भक्तिः प्राप्योचिता मता ।। ६ ।।

परमर्षिगृहीतत्वान्नैवाचार्यबहिष्कृता । कलौ निषेधो नैवास्यास्तदशक्तेर्विरुध्यते ।। ७ ।।

संभावितस्वभावत्वं नाङ्गानां विहितत्वतः । संभावितत्वे चाङ्गवनां विश्वासेऽप्येतदापतेत् ।। ८ ।।

विश्वासतारतम्यस्य संभवाल्लोकशास्त्रयोः । महानेवहि विश्वासः प्रपत्तेरङ्गमिष्यते ।। ९ ।।

तत्काले मन्दविश्वासानपि श्रीशोऽधिकारिणः । क्रमेण पूर्णविश्वासान्कृत्वापाति दयानिधिः ।। १० ।।

उपायान्तरभक्त्यादि विलम्बक्षमता फले । व्यासादेर्भजनेहेतुर्न विश्वासादिशून्यता ।। ११ ।।

क्वचित्प्रपन्ने भगवत्साक्षात्कारादि दृश्यते । न्यासे सङ्कल्पवैषम्यात्प्रारब्ध सुकृतात्पुरा ।।१२।।

केचिद् दृष्टफलासिद्ध्या न्यासेसुविहिते फले । कर्म कर्त्रादि वैगुण्यात्फलासिद्धिर्हि सर्वतः ।। १३ ।।

विरुद्धफलहेतुत्व मभिसन्धिवशाद्भवेत् । एकस्य राज्ञि तादव्यजम्बीरफलनीतितः ।। १४ ।।

प्रवृत्तिधर्मौ स्तोभक्ति प्रपत्तीकामकामिनाम् । निवृत्तिधर्मौ तावेव भगच्चरणार्थिनाम् ।। १५ ।।

आवृत्त्यनावृत्तिवशाद्विषमावपि तावुभौ । मोक्षैकफलदौ स्यातामधिकारि विशेषतः ।। १६ ।।

उपायफलयोरेक रूपत्वेऽपि प्रपन्नयोः । फले विलंबाविलम्बौ त्वरायास्तारतम्यतः ।। १७ ।।

साध्योपाय प्रपन्नो यस्सिद्धोपायः फलप्रदः । तत्सिद्धसाध्ययोः कार्यं फलं शास्त्रेषु वर्ण्यते ।। १८ ।।

हरिरेकस्सदा ध्येय इत्याद्युक्त्यनुसारतः । अङ्गप्रपत्तिपरतां श्लोकस्याहुर्न तन्मतम् ।। १९ ।।

हरिरेकस्सदा ध्येय इत्यादिर्हि विधीयते । स्वतन्त्रन्यासनिष्ठस्य फलरूपमुपासनम् ।। २० ।।

कैङ्कर्ये क्रियमाणेतु ख्यातिलाभविवर्जितः । प्रयोजनान्तरानिच्छुर्मोक्षं चापि फलं त्यजेत् ।। २१ ।।

स्वयं प्रयोजनत्वेन मुक्तवत्सर्वमाचरेत् । अन्याभिगमनं त्याज्यं तयान्यार्थप्रवृत्तयः ।। २२ ।।

अन्यपूजान्यकीर्तिश्च त्याज्यमन्यविचिन्तनम् । एतेषां विनिवृत्त्यर्थं हरावभिगमादिकम् ।। २३ ।।

विधीयतेऽस्य शास्त्रेषु कालेषूक्तेषु पञ्चसु । अनर्हाणामपि नृणां देवाभिगमनादिषु ।। २४ ।।

स्वयोग्य नित्यकृत्यैर्वा स्थितिश्शुश्रूषयापि वा । विलक्षणो भक्तियोगस्त्री शूद्राणां निषिध्यते ।।२५।।

सर्वेषां सर्वदा कार्यो देहानुस्मृतिलक्षणः । क्लेशानां च क्षयकरं योगादन्यं न विद्यते ।। २६ ।।

**मू - समध्यायापयन् ।। ५४ ।।**

।। इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे साध्योपायशोधनाधिकारश्चतुर्विंशः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

---

(सा.दी) प्रकारத்திலே - நம்மை **समध्यापयन्,** ஓதிவித்தார்களென்கை ॥ 54 ॥

।। इति श्रीसारदीपिकायां साध्योपायशोधनाधिकारश्चतुर्विंशः ।।

---

(सा.स्वा) समध्यापयन्, संयगध्यापयन् - सत्तर्कानुगृहीतदृढतरप्रमाणनिर्मलीकृत निस्समाभ्यधिक सदाचार्योपदेशपरम्परा गततया उक्तप्रकार एव प्रामाणिकः । नतु संप्रदायां तरस्थोन्नीतप्रकार इति भावः ।। ५४ ।।

।। इति श्रीमदुत्तरसारास्वादिन्यां साध्योपाय शोधनाधिकारश्चतुर्विंशः ।।

---

(सा.प्र) वेदान्ताचार्याणामध्यापयन्नित्यर्थः - अध्यापयन्नित्यनेन तदुक्तप्रकार एवात्र न्यूनाधिकभावाभाविनोक्त इति ज्ञाप्यते - पूजायां बहुवचनम् ।। ५५ ।।

।। इति श्रीसारप्रकाशिकायां साध्योपायशोधनाधिकारश्चतुर्विंशः ।।

---

(सा.वि) इत्यादिषु प्रपन्नेभ्य इतरत्रनियम्यत इति ।। ५४ ।।

।। इति श्रीसारविवरिण्यां साध्योपायशोधनाधिकारश्चतुर्विंशः ।।

---

(सा.सं) समध्यापयन्, समीचीनोपदेशैरस्मानशिक्षयन् ।। ५४ ।।

।। इति श्रीसारप्रकाशिका सङ्ग्रहे साध्योपायशोधनाधिकारश्चतुर्विंशः ।।

॥ श्रियै नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

# ॥ प्रभावव्यवस्थाधिकारः ॥

**मू - स्वरूपं -**

(सा.दी) अथोपाय प्रभावव्यवस्थाधिकारः - उपायप्रभावव्यवस्थैயாவது शास्त्रमर्यादैயை अतिक्रमित्तु वर्णिக்கப்பட்ட उपायप्रभावத்தை शास्त्र मर्यादया व्यवस्थापिக்கை - எங்ஙனேயென்னில் சில प्रपन्नர்க்கு उपायप्रभावத்தால் जाति போமென்று संस्कारहेतुव्रतातिशयं சொல்லுவர்கள் - அத்தை यथाशास्त्रமாக श्थापिக்கை - श्लाघ्यतापर्यन्तமே उपायप्रभावजनितातिशयम् - वर्णसङ्करपर्यन्तமன்று என்று व्यवस्थै சொல்லுகிறது. அதில் முந்த प्रभावव्यवस्थैயை श्लोकेन दर्शिப்பிக்கிறார் - स्वरूपमिति -

(सा.स्वा) சிலர் भगवत्समाश्रयणத்தாலே शूद्रत्वजाति கழிந்து ब्राह्मण्यமுண்டாமென்று शास्त्रத்தை अतिक्रमित्तु भागवतप्रभावं சொல்லுகிறார்கள் - சிலர் भागवतप्रभाववचनं सर्वमतिवादமென்று भागवतप्रभावத்தைக்குறைய நினைப்பார்கள் - இப்படியிருக்க अर्थानुशासनभागத்திலே जातिव्यवस्थादिகள் சொன்னது கூடுமோ? என்று स्थिरीकरण भागारम्भத்தில் சொன்ன शङ्कैகளை परिहरिக்கக்கோலி शास्त्रத்தை अतिक्रमित्துச் சொல்லாமல் பண்ணுகை प्रभावव्यवस्थै என்றும், प्रभावத்தைக்குறைய நினையாமல் शास्त्रं சொல்லுகிற மட்டிலே நிறுத்துகை प्रभावरक्षैயென்று विभजित्तु प्रथमं இந்த अधिकारத்தாலே प्रभावव्यवस्थैயை निरूपिக்கக் கடவராய் अधिकारार्थத்தை श्लोकத்தாலே सङ्ग्रहिக்கிறார் - स्वरूपमिति -

(सा.प्र) एवं सिद्धसाध्यभेद भिन्नोपाय विषयव्यामोह निवर्तनपूर्वकमुपायं प्रतिष्ठाप्य तत्साध्यप्रभाव-प्रतिष्ठापनाय प्रभावविषयव्यामोहं निवर्तयितुं भगवत्स्वरूपादाविवोपाय साध्यप्रभावेऽपि श्रुतिस्मृत्यादिषु यावत्प्रतिपन्नं तावदेवाङ्गीकार्यमित्यभिप्रयन्नाह । स्वरूपं यदित्यादिना -

(सा.वि) एवं सिद्धोपायसाध्योपायव्यामोह निवर्तनपूर्वकमुपायं प्रतिष्ठाप्य तत्साध्यप्रभावविषयव्या-मोहनिवर्तनेन अतिप्रसङ्गं निराकृत्य श्रुत्याद्यनुरोधेन प्रभावं व्यवस्थापयितुं प्रभावव्यवस्थाधिकारमारिप्सुः प्रथमं श्लोकेन सङ्गृह्णाति - स्वरूपं यद्यादृगिति -

(सा.सं) इत्थं विशोधित सिद्धसाध्योपायद्वयनिष्ठस्य उत्कर्षं यथा प्रमाणमेव स्थापयितुमधिकारान्तर मारभमाणस्तत्प्रतिपाद्यार्थं सांप्रदायिकत्वेन वदन् सङ्गृह्णाति - स्वरूपमिति -

**मू - यद्यादृग्गुणविभवलीलादि च विभोस्तदाज्ञासेतुश्च श्रुतिभिरवसेयंतदखिलम् । -**

(सा.दी) विभोः, ईश्वरस्य - स्वरूपं यदस्ति । तच्च, यादृक् - यत्स्वभावकं - गुणविभव लीलादि च, गुणाः । सत्यत्वज्ञानत्वादिகள் - ज्ञानबलैश्वर्यादिகளும். विभवाः, विभूतिகள் लीलाः, सृष्ट्यादिகள் आदिशब्दத்தால் दिव्यविग्रहादिग्रहणम्-तदाज्ञासेतुश्च, आज्ञारूपस्सेतुः । वैदिकधर्मங்கள் - இவையெல்லாம் श्रुतिभिरवसेयम्, அறியப்படுமது. दृष्टान्तार्थम् இவ் उपन्यासम् - இப்படி யேயிவையெல்லா -

(सा.स्वा) विभोः, स्वरूपम्-यत्, अनृतजडपरिच्छिन्नस्वरूपंवा निर्विकारा जडापरिच्छिन्नस्वरूपं वेति विशये निर्विकारा जडापरिच्छिन्नस्वरूपम् । यादृक्, सविशेषं निर्विशेषं वेति विशये सार्वज्ञाद्यनन्तकल्याणगुणयुक्तम् । यत्, यादृक्, इति सर्वत्रान्वेति - गुणाः, ज्ञानबलैश्वर्यादयः । विभवाः, लीलाभोगविभूतय; । लीलाः, जगत्सृष्ट्यादयः - आदिशब्देन दिव्यमङ्गलविग्रहग्रहणम् । एतत्सर्वं यत्प्रमाणसिद्धं यत्स्वरूपम् अमिथ्यास्वरूपम् - यादृक्, धर्मिस्वरूपविलक्षणं धर्मिणोव्यावर्तक माश्रयणोपयुक्तम् - जडस्वरूपं त्रैगुव्यविशिष्टम् । शुद्धसत्वविशिष्टमजडस्वरूपम्-तदाज्ञासेतुश्च, भगवदाज्ञारूपवर्णाश्रमधर्मव्यवस्थाच यत् - ज्योतिष्टोमादि स्वरूपम् । यादृक्, यदङ्गयुक्तं तदखिलं, भगवत्तत्कल्याणगुणविभूतिलीला विग्रह तदाज्ञासिद्धधर्माणां स्वरूप स्वभावादिकं श्रुतिभिर्यसावसेयं -

(सा.प्र) विभवः, रामकृष्णाद्यवतारः - लीलादीति भोगादिरादिशब्दार्थः-

(सा.वि) विभोः, भगवतः - स्वरूपं यत् - ''सत्यं ज्ञानमनन्तं ब्रह्म'' इत्यादि स्वरूपम् । यादृक्, यत्प्रकारकम् - सत्यत्वादि प्रकारकम् - नतु निर्विकल्पं गुणाः, ''स्वभाविकी ज्ञानबल क्रियाच'' इत्युक्त स्वाभाविकी ज्ञानबलादयः - विभवा;, ''पतिं विश्वस्य'' इत्याद्युक्त सर्वेश्वरत्वादयः- लीलाः, ''यतो वा इमानि भूतानि जायन्ते'' इत्याद्युक्ताः सृष्ट्यादयः - आदिशब्देन ''विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु दिवीव चक्षुराततम् । क्षर्य तमस्य रजसः परा के । आदित्यवर्णं तमसः परस्तात्'' इत्यादि श्रुतिसिद्धभोगविभूतग्रहणम् । गुणविभवलीला आदिर्यस्य तथोक्तम् - समुदायापेक्षया एकवचनम् । समानविवक्षया सामान्येनपुंसकमिति नपुंसकत्वम् च - गुणविभव लीलादि च यत्स्वरूपं यादृशस्वभावंमिति याद्यादृक्च वानुषञ्जनेनान्वेतव्यम् - तदाज्ञासेतुः, आज्ञारूप श्रुतिस्मृतिमर्यादाः । ''श्रुतिस्मृतिर्ममैवाज्ञा'' इत्युक्ता यत्स्वरूपा यादृक्प्राकारा च - तदखिलं, तत्सर्वम् । श्रुतिभिरवसेयम् , श्रुत्युक्त प्रकारेणैव निश्चेतव्यम् - नान्यथानिश्चेतुं शक्यमिति भावः -

(सा.सं) विभोः, स्वाधीनस्वरूपादि स्वेतरस्य श्रियःपतेः । श्रुतिभिरवसेयं यत्स्वरूपं, धर्मिस्वरूपम् - ''सत्यं ज्ञानम्'' इत्याद्युक्तम् - यादृक्, येन धर्मेणनिरूपितम् । गुणाः निरूपितस्वरूपविशेषकाः - विभवः, उभयविभूतिरूपः - लीला, जगद्व्यापारः - आदिशब्दात्परव्यूहादि सङ्ग्रहः - गुणादिषु च यद्यादृगित्यनयोरन्वयः - यत्, येन शब्देन अभिधेयम् । यादृक्, यत्प्रकारम् । तस्य, विभोः । आज्ञा, श्रुतिस्मृती - तद्रूपस्सेतुः, मर्यादाचतदखिलं, स्वरूपादिकं सर्वम् - श्रुत्यादिभिरेव अवसेयम् । न केवलं युक्तिभिरिति भावः - अस्तु तथा प्रकृते -

**मू - तथा तद्भक्तानां तदुपसदनादेश्च महिमा यथाधीतं सद्भिर्यतिपतिमुखैरध्य वसितः ।। ५५ ।।**

(सा.दी) मन्यूनातिरिक्तமாக श्रुतिகளால் निश्चयिக்கப்படும். அப்படியே तद्भक्तानां तधाश्रितர் களுடைய महिमाவும் श्रुतिप्रमाणங்களாலே அறியப்படுமது तदुपसदनादेः, भागवतसमाश्रय-णादियினுடைய. तत्प्रसादादिरादिशब्दार्थः - महिमाவும் - सद्भिर्यतिपतिमुखैः यथा धीतम् अध्यवसिக்கப்பட்டது - शास्त्रத்தை अतिक्रमिத்து निश्चयिத்தார்களில்லை. ஆகையால் भागवतருடைய प्रभावं यथाशास्त्रமாகவே அறியப்பட்டதென்கை ॥ 55 ॥

இனி वक्ष्यमामाणा र्थोपयोगितया अनन्तरपूर्वोक्ताधिकारद्वयार्थத்தை अनुवदिக்கிறார்.

(सा.स्वा) तथैव तद्भक्तानां, भागवतानाम् । तदुपसदनादेश्च, भक्ति प्रपत्ति कर्मयोगज्ञानयोगादिलक्षणस्य महिमापि - यथाधीतम्, अधीताननतिक्रमेण - सद्भिः, ब्रह्मविद्भिः - निर्दुष्टैरिति वा - यतिपतिमुखै रध्यवसितः, न्यूनाथिकभावराहित्येन श्रुत्युक्तक्रमेणैवाध्यवसितः என்றபடி ॥ 55 ॥

இவ் उपायप्रभावव्यवस्थै निरूप्यैயாகில் पूर्वाधिकारद्वयात् पूर्वं தானே निरूपिக்கலாகாதோ? என்ன अनन्तरनिरूपणத்துக்கு निदानं சொல்லாநின்று கொண்டு वृत्तानुवादपुरस्सरं -

(सा.प्र) तदुपसदनादेरिति, भक्तोपसदनादेरित्यर्थः - परिप्रश्नादिरादिशब्दार्थः - यथाधीतमिति - ''यस्त्वैवं ब्राह्मणो विद्यात् - तस्यदेवा असन्वशे - सवेद ब्रह्म - सर्वेस्मै देवा बलिमावहन्ति - नास्यावरपुरुषाः क्षीयन्ते । नास्या ब्रह्मवित्कुले भवति'' इत्यादिषु देवपूज्यत्वस्वसंबन्धिमोक्षहेतुत्वादि रूपप्रभाववत्वेनाधीतप्रकारेणेत्यर्थः ।। ५६ ।।

एवं श्लोके संगृहीतं विस्तरेण प्रतिपादयितुं वृत्तकीर्तन पुरस्सरं वक्ष्यमाणप्रतिज्ञा -

(सा.वि) तथा, तेनैव प्रकारेण, तद्भक्तानां, भागवतानां - महिमा, तदुपसदनादेः भागवताश्रयणादेश्च - आदिशब्देन तत्प्रसादादिग्रहणम् । भागवताश्रयण तत्प्रसादादि महिमा च - यथाधीतं, श्रुत्युक्तमार्गमनतिक्रम्यैव । यति पतिमुखैस्सद्भिरध्यव सितः, निश्चितः । ''यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे - सर्वेस्मै देवा बलिमावहन्ति - एवं विधिपापं कर्मनश्लिष्यते - एवं हास्य सर्वे पाप्मानः प्रदूयन्ते - नास्या ब्रह्मवित्कुले भवति'' इत्यादि श्रुत्युक्तप्रकारेण सर्वदिव पूज्यत्वतदनुबन्धिमोक्षपर्यन्तत्वादिरूपेणैव रामानुजाचार्यप्रभृतिभिः प्रभावो व्यवस्थापितः । नतु जाति निवृत्त्यादि रूपेणवर्णसङ्करपर्यन्तोऽङ्गीकृत इति भावः ।। ५५ ।।

(सा.सं) किमित्यत्राह - तथेति । तथा भगवत्स्वरूपादिवत् - तद्भक्तानां महिमा - ''योह्येनम्'' इत्यादिनोक्तः प्रभावः - तदुपसदनं, तदाराधनम् । आदिशब्दात् तच्छिश्रूषणादि संग्रहः - एतेषां प्रकारश्च - यथाधीतम्, यथाश्रुतम् - वेदे तथा यतिपतिमुखैस्सद्भिः - आहारविशेषहैतुकसंसर्गयुगस्वभावादि प्रत्यनीकाकारैः - अध्यवसितः, अन्यूनाधिकमवधृतः ।। ५५ ।।

अत्र भागवतप्रभावोत्कर्षविषय प्रामाणजातं शोधयितुंवृत्त - वर्तिष्यमाणयोस्सङ्गतिलाभाय वृत्ताधिकारद्वयार्थमनुवदन् वर्तिष्यमाणं - निदिशति । -

**मू** - இப்படி **द्वय**த்தில் **द्वितीयान्तपद**ங்களாலே **प्रकाशित**மான **सिद्धोपायविषय**மாகவும், **आख्यातपद**த்தாலே சொல்லப்பட்ட **साध्योपायविषय**மாகவும் பிறக்கும் **व्याकुल**ங்கள் **शमि**ப்பிக்கும் வழிகாட்டினோம். இவ் **उपाय (निष्ठன்) प्रभावविषय**மாக **प्रमाण**ங்கள் காட்டினவளவுக்கு ஏற நினைத்தும் குறைய நினைத்தும் வரும் கலக்கங்களை **शमि**ப்பிக்(க்கவேணும்)கிறோம் -

(सा.दी) இப்படி द्वयத்தில் इत्यादिயால் आख्यातपदं, क्रियापदम् - प्रपद्ये व्रज என்னும் அது - இத்தால் द्वितीयान्ताख्यातपदங்களினுடைய क्रमத்தாலே तत्प्रतिपाद्योपायद्वयशोधनமென்று पूर्वाधिकारद्वयसङ्गतिसूचितम् । இவ் उपायेत्यादि कृतांशमुक्तम् । - இனிமேல் ஏறநினைத்து வரும் கலக்கங்களை இவ் अधिकारத்தில் शमिப்பிக்கிறார் - குறைய நினைத்துவரும் கலக்கங்களை மேல் अधिकारத்தாலே शमिப்பிக்கிறார். प्रभावமுண்டாய் एतद्व्यवस्थै பண்ண வேணுமென்றெண்ணி उपाय प्रभावातिशय -

(सा.स्वा) वर्तिष्यमाणத்தை उपक्षेपिக்கிறார். இப்படி इति - இப்படி, पूर्वोक्तप्रकारेणவென்றபடி द्वयத்தில் इति - विशेषणभूत श्रीवैशिष्ट्यமும் उपायत्वமும் स्पष्टமாகத் தோற்றுகையாலே திருमन्त्रத்தில் என்று சொல்லாதே द्वयத்திலென்று சொல்லிற்று. இவ் उपायेति । उपायं प्रतिष्ठितமான பின்பு उपायप्रभावं निरूप्यமென்றபடி - இந்த अधिकारத்தில் प्रभावं व्यवस्थितமான பின்பு இது கூடாதென்று आक्षेपम् उदिக்கையாலே अनन्तरं प्रभावरक्षैயென்று கருத்து - भागवतप्रभावத்தை ஏற நினைத்தாலத்தை व्यवस्थापिக்கக்கூடுமோ? ''योह्येनं पुरुषं वेद देवा अपि नतं विदुः'' என்கிறபடியே भागवत -

(सा.प्र) व्याजेन सङ्गतिमाह - இப்படி द्वयத்தில் इत्यादिना - द्वयशब्दश्चरम श्लोकस्याप्युपलक्षणम् - तथा च द्वितीयान्तपदानेकत्वसिद्धिः - श्रीमन्नारायणेत्यादि द्वयान्तर विवक्षयावानेकत्वसिद्धिः- यद्वा, शरणमित्यनेनापि सिद्धोपायस्य बोधनात् द्वितीयान्तपदानेकत्वसिद्धिः- नन्वधीतमिति सूचित श्रुतीनामविशदार्थत्वेन प्रभावप्रापकत्वानुपपत्तेस्तद्विषयव्यामोह निवर्तनमनुचितमित्याशङ्क्य तादृशश्रुत्यर्थं विशदं प्रतिपादयदुपब्रह्मणं दर्शयन् प्रभावस्य -

(सा.वि) वृत्तकथनपूर्वकं वर्तिष्यमाणं प्रतिजानीते-द्वयத்தில் इति-द्वयपदं चरमश्लोकस्याप्युपलक्षणम् - आख्यातपदम प्रपद्ये व्रज इति तिडन्तपदम् - शमिப்பிக்கும், शमयितुं - வழி मार्गम् - காட்டினோம், प्रदर्शितवन्तो भूम - காட்டினவளவுக்கு, प्रमाण प्रदर्शितरीतिः - ஏற நினைத்தும், प्रभावस्याधिक्यं बुध्वापि - குறையநினைத்தும், न्यूनतां बुध्वापि - வரும் கலக்கங்கள், प्राप्तशङ्काः - शमिப்பிக்க வேணும், शमयितव्याः - प्रभावाधिक्य बुद्ध्या प्राप्तशङ्का अस्मिन्नधिकारे परिहरिष्यन्ति - न्यूनताबुद्ध्या प्राप्तशङ्का उत्तराधिकारे परिहरिष्यन्त इति भावः -

(सा.सं) இப்படி इति । द्वितीयान्तेति - चरणाविति शरणपदेनचेत्यर्थः - आख्यातपदத்தாலே, शरणशब्दोपश्लिष्टक्रियापदेन - வேணும் इति - यदि प्रमाणप्रदर्शितादधिकोऽपि प्रभाव अनुमन्यते तदा आहारग्रहादि सर्वव्यवस्था भङ्गः - यदि न्यूनस्तदा एतद्देहावसान एव फललाभय सङ्कल्पपूर्वक प्रपदनानुष्ठानपूर्तिर्न सिद्ध्येदिति भावः - वस्तुतोऽधिक प्रभावपरान् परभ्रमगजनकान् दर्शयति -

मू - ''आस्फोटयन्ति पितरः प्रणृत्यन्ति पितामहाः ।
वैष्णवो नः कुले जातस्स नस्सन्तारयिष्यति ।। '' என்றும்
''கேசவந்தமர் கீழ் மேலெமரே ழெழு பிறப்பும் மாசதிரிது பெற்று''
என்றும் சொல்லுகிறபடியே अनुबन्धिகளுக்கும் उत्तारकமான
प्रभावத்தையுடையனாயிறே இவ் उपायनिष्ठன் இருப்பது -

(सा.दी) प्रतिपादकங்களான प्रमाणங்களை स्थालीपुलाकन्यायத்தால் காட்டுகிறார் आस्फोटयन्तीत्यादिயால் - आस्फोटनं, भुजास्फालनम् - கேசவந்தமர் इत्यादि - எமர், अस्मद्वंश्यர் - கீழ்மேலே ழெழுபிறப்பும், पूर्वत्र परत्र मध्ये च सप्तसप्तपुरुषपर्यन्तम् - கேசவந்தமரானார்கள், केशवனுக்கு दासரானார்களென்கை - மாசதிரிது பெற்று, महासामर्थ्यरूपமான இப்भगवत्संबन्धத்தைப் பெற்று - நம்முடைய வாழ்வு, நம்முடைய संपत् தும் - வாய்க்கின்றவா - प्राप्तமான प्रकारத்தைப் பாரீரென்கை. –

(सा.स्वा) प्रभावमपरिच्छिन्नமாகையாலே व्यवस्थै கூடாதே? ஆகையால் व्यवस्थानिरूपणं व्यर्थமன்றோ? என்று शङ्कित्து उत्तरமருளிச்செய்கிறார் - आस्फोटयन्तीत्यादिना - आस्फोटनं, भुजास्फालनम् - கேசவந்தமர் इत्यादि । எமர், अस्मद्वंश्यர். கீழ், पूर्वत्र - மேல், परत्र - मध्ये च என்று अर्थसिद्धம் - पूर्वत्र परत्र मध्येच எழுபிறப்பும், सप्तपुरुषपर्यन्तम् - கேசவந்தமர், केशवனுக்கு दासரானார்கள் - மாசதிரிது பெற்று, இந்த भगवद्दास्यமாகிற महाचातुर्यத்தை - महासामर्थ्यத்தைப் பெற்று. நம்முடைய வாழ்வு, நம்முடைய संपत्து - வாய்க்கின்றவா, प्राप्तமான प्रकारத்தைப் பாரீரென்கை –

(सा.प्र) संप्रदायतस्सिद्धिमप्याह - आस्फोटयन्तीत्यादिना । கேசவந்தமர் इत्यादि - ''दशपूर्वान् दशापरानात्मानं च'' इत्याद्युक्तप्रकारेण स्वस्य स्वकीयानां चैकविंशति पुरुषाणां भगवद्दास्यहेतुभूत-भगवत्कृपारूपोत्कृष्टसामर्थ्यं लब्ध्वेत्यर्थः । ननु प्रामाणिके प्रभावे न्यूनाधिकभावावगाहि भ्रमो निवर्त्यत इत्युक्तं तन्नोपपद्यते - दिव्यज्ञानवद्भिरपि अपरिच्छेद्यप्रभाववत्वस्य प्रामाणिकत्वात्प्रभावाधिक्यावगाहिज्ञानस्य भ्रमत्वानुपपत्तेरित्याशङ्क्य स्वाश्रितैस्सह मोक्ष्यमाणत्व भगवन्तिरतिशय प्रीतिहेतुत्वाराधनविषयत्वादि रूपप्रभावानांतभात्वेऽपि भागवतशूद्रेषु शूद्रत्वावगमपूर्वकं ब्राह्मण्योत्पत्त्यादिरूप -

(सा.वि) आस्फोटयन्ति, भुजास्फालनं कुर्वन्ति - கேசவந்தமர் கீழ்மேலே மரேழெழுபிறப்பும் மாசதிரிது பெற்று. எமர், मद्वंश्याः - கீழ், पूर्वम् - ஏழ்பிறப்பும், जन्मवन्तस्सप्तपुरुषाः- மேல், अग्रे - கேசவந்தமர், भगवद्दासास्सन्तः - மாசதிரிது, महासामर्थ्यम् - பெற்று, प्राप्य- நம்முடைய வாழ்வு, मत्संपदम् - வாய்க்கின்ற, प्राप्ता इति प्रकारं पश्यत इति तद्भावार्थः - मद्भाग्यं, मदीयानां पूर्वेषां सप्तानां चोपभोग्यमासीत् - तेऽपि मुक्ता अभूवन्निति भावः । இவ் उपायनिष्ठன் இருப்பது, एतदुपायनिष्ठस्य स्थितिः । अनुबन्धिகளுக்குத் तारकமான प्रभावத்தையுடையவனாயிறே, अनुबन्धिनामप्युत्तारक -

(सा.सं) आस्फोटयन्तीत्यादिना - निर्वृतात्महविस्समर्पणो वैष्णवः - विष्णुर्देवता अस्येति हि तदर्थः - ''कुलं तारयते तेषां सप्त सप्त च सप्त च'' इति वचनसमानार्थः - கேசவந்தமர் इति -

**मू - "यो ह्येनं पुरुषं वेददेवा अपि न तं विदुः"** என்று **भगवद्ज्ञान**முடையவனுடைய **प्रभावं देव**ர்களாலும் **परिच्छेदिक्क**வொண்ணாதென்றார்களிறே - ஆனாலும் இதுக்கு **विरुद्ध**மல்லாத **प्रमाणबल**த்தாலே முற்பட **जातिव्यवस्थै** சொல்லுகிறோம் - **"न शूद्रा भगवद्भक्ता विप्राभागवता स्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने"** என்று **भगवद्भक्ति**யாகிற **गुणविशेषसदसद्भाव**ங்களாலே **अपकृष्टजातीय**ரை **उत्कृष्टजातिय वाचकशब्द**த்தாலே சொல்லியும், **उत्कृष्टजातीय**ரை **अपकृष्टजातियवाचक शब्द**த்தாலே சொல்லியும் இருந்தது. இதடியாக **भगवद्भक्त**ரெல்லாரும் **एकजातीय**ரன்றோவென்று சில **मृदुप्रज्ञ**ர் நினைப்பார்கள் -

---

(सा.दी) यो ह्येनमिति । एवं पुरुषं, कृष्णं - यस्तत्वतो वेद । तं, तस्य प्रभावम् என்றபடி - देवा अपि न विदुः, नित्यसूरिகளும் परिच्छेदित्तறியமாட்டார்கள். पुरुषवेदनप्रयुक्तமாகையாலிது उपायप्रभावम् । இப்படிப்பட்ட उपायप्रभावமுண்டாகில் व्यवस्थै எங்ஙனே? என்ன व्यवस्थैயை प्रभावाविरुद्धமாகச் சொல்லுகிறோமென்கிறார் - ஆனாலும் इत्यादिना - भागवतர்க்கு जतिव्यवस्थैயில்லையென்று प्रभावाविरुद्धமாகச் சொல்லுகிறோமென்கிறார் - ஆனாலும் इत्यादिना - भागवतர்க்கு जातिव्यवस्थैயில்லையென்னுமவர்களுக்கு मूलवचनத்தைக் காட்டுகிறார் न शूद्रा इति - இதின் अर्थம் - भगवद्भक्ताश्शूद्रा न भवन्ति - किन्तु विप्रा एव स्मृता; - सर्वेष्वपि वर्णेषु त एव शूद्राः - ये हि जनार्दने भक्तिमन्तो न भवन्ति என்று -

---

(सा.स्वा) ये ह्येनमिति - एनं, श्रीकृष्णम् - यस्तत्वतो वेद - तं देवा अपि, नित्यसूरयोऽपि-न विदुः, परिच्छेदित्तறியமாட்டார்களென்றபடி - वेदितृ पुरुषप्रभावं वेदनप्रयुक्तமாகையாலே இது उपायप्रभावமென்று கருத்து. முந்த प्रज्ञताद्योतनार्थமாக अशूद्रा भगवद्भक्ता इत्यादि पूर्वपक्षमूलभूत वचनतात्पर्यர்த்தைக் காட்டுகிறார். न शूद्रेत्यादिना - இனி पूर्वपक्षத்தை उपक्षोपिக்கிறார். இதடியாக इति - இது आपातप्रतिपन्नार्थமான இந்த वचनமடியாகவென்றபடி - आपातप्रतीतार्थ स्वीकारத்தில் -

---

(सा.प्र) प्रभावस्यै कैश्चिदुक्तेस्तदवगाहि ज्ञानस्य तदभाववति तत्प्रकारकत्व रूपभ्रमत्वसिद्धेराधिक्याव-गाहित्व सिद्धेश्च तन्निवर्तनमुचितमेवेति गुरुत्वेन वरणीयत्वतीर्थपादत्वसुपावनोच्छिष्टत्वादिरूपप्रभावानां प्रमाणेषु जातितो व्यवस्थापितत्वात्प्रथमं जातिविषयव्यामोहं निवर्तयति - यो ह्येनमित्यादिना -

---

(सा.वि) प्रभाववती खलु - भगवद्ज्ञानமுடையவனுடைய, भगवद्ज्ञानवतः- ननु तर्ह्यपरिच्छेद्य प्रभाववत्वे कृत्याकृत्यादिव्यवस्थायाः कर्तुमशक्यत्वाद्व्यवस्थाकरणे प्रभावसङ्कोचापत्तेः प्रभावप्रतिपादक प्रमाण विशेध इत्याशङ्क्य तेषां प्रमाणानामनुबन्ध्युत्तारकत्वपर्यन्ततया भगवन्निरतिशय प्रीतिविषयत्वेन देवादिपूज्यतापर्यन्ततया च प्रतिपादने तात्पर्यम्-नतु निकृष्टजातीनाम् उत्कृष्टजातिविषये गुरुत्वेन वरणीयत्वतीर्थपादत्वसर्वोप जीव्य पावनोच्छिष्टत्वादि प्रतिपादनेऽपि बहुप्रमाणसंप्रदायाचार विप्लवापत्तेरित्यभिप्रेत्य धर्माणां जातितो व्यवस्थाप्यत्वात्प्रथमं जातिव्यवस्थां भ्रूम इत्याह- ஆனாலுமிதுக்கு इति- ஆனாலும், अपरिच्छेद्यप्रभाववत्वेऽपि- சொல்லியுமிருந்தது, अभिधानमप्यस्ति। இதடியாக, एतन्मूलकत्वेन - एवं प्रमाणस्य विद्यमानत्वादित्यर्थः - एकजातीय ரன்றோ एकजातीया न भवन्ति किम् -

---

(सा.सं) ஆனாலும், एवं प्रपन्नप्रभावस्यापरिच्छिन्नत्वेऽपि ।

**मू** - இங்ஙனேயாகில் **भागवतब्राह्मण**ன் இன்னபடியே **वर्ति**ப்பான் - **भागवतशूद्र**ன் இன்னபடியே **वर्ति**ப்பானென்று **आचारनियम**ங்கள் சொல்லும் **सर्वशास्त्र**ங்களும் **विरोधि**க்கும் –

(सा.दी) मृदुप्रज्ञர், विचारविमर्दासह बुद्धिகள் एकजातीयत्वத்தில் शास्त्र विरोधं காட்டுகிறார். இங்ஙனேயாகில் इत्यादिயால், "मासार्थं वैष्णवे शूद्रे" इत्याद्याशौचादिनियमवचनங்களுண்டிறே-

(सा.स्वा) बाधकமருளிச்செய்கிறார் - இங்ஙனே इति- आचारेति- "मासार्थं वैष्णवे शूद्रे- नस्वरः प्रणवोऽङ्गानिनाप्यन्यविधयस्तथा । स्त्रीनां तु शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते" इत्यादि शास्त्रங்களென்றபடி-

(सा.प्र) आचारनियमங்கள் சொல்லும் इति - शेषसंहितायां "ब्राह्मे मुहर्ते चोत्थाय भगवन्नामकीर्तनम्। आचार्यकीर्तनं कुर्या द्गच्छेच्छाथनदीं प्रति (द्विजः) । स्नात्वा विधिवदाचम्य शौचाचमनपूर्वकम् । कौपीनं कटिसूत्रं च वस्त्रयुग्मं च धारयेत् । सच्छिद्राण्यूर्ध्वपुण्ड्राणि पवित्रंच द्विजोत्तम" इत्यारभ्य "पाङ्मुखोदङ्मुखोवापि गायत्रीं मूलविद्यया । अष्टोत्तरसहस्रंवा शातमष्टोत्तरं तु वा । अष्टाविंशतिमेवाथजपेन्यासादिकं द्विजः । मन्त्ररत्नं जपेच्छक्त्या यावज्जीवं द्विजोत्तमः । सर्वदासर्वकालेषु मोक्षार्थी स्वाश्रमोचितैः । जपोपस्थानकं कृत्वा ब्रह्मयज्ञमनन्तरम् । उपादानं ततस्स्नानं कुर्यान्याध्याह्निकं क्रमात् । होमार्चन विधानं च वैश्वदेवमतः परम् । पञ्चसंकारसंयुक्तै भुञ्जीयाद्विधिवद्विजः । स्वाध्यायं च पुराणं वा हरिसंकीर्तनादिकम् । मुमुक्षुर्नित्ययुक्तश्च मन्त्ररत्नं सदा जपेत्" इत्यादि द्विजातिभागवतस्याचार विशेषज्ञापकं शास्त्रम् - "स्त्रीशूद्राणां विधिं वक्ष्यै सम्यक्प्रणववर्जितम् । ब्राह्मे मुहूर्त" इत्यारभ्य "गच्छेच्छाथनदीं तथा" इत्युक्त्वा "ब्राह्मणस्य विधानेन भक्तानां हि विधिर्भवेत् । -

(सा.वि) இங்ஙனேயாகில், एवं चेत् - இன்னபடியே, एवं प्रकारेणैव - वर्तिப்பான், वर्तेत - नियमங்கள் சொல்லும் शास्त्रमिति - शेषसंहितायां "ब्राह्मे मुहूर्त उत्थाय भगवन्नामकीर्तनम् । आचार्यकीर्तनं कुर्यात् गच्छेच्छाथनदीं द्विजः । स्नात्वाविधिवदाचम्यशौचाचमनपूर्वकम् । कौपीनं कटिसूत्रं च वस्त्रयुग्मं च धारयेत् । सच्छिद्रमूर्ध्वपुण्ड्राणि पवित्रं च द्विजोत्तमः । सर्वदा सर्वकालेषु मोक्षार्थी स्वासश्रमोचितैः । जपोपस्थापनं कृत्वा ब्रह्मयज्ञ मनन्तरम् । उपादानं ततस्स्नानं कुर्यान्माध्याह्निकं क्रमात् । होमार्चनविधानं च वैश्वदेवमतः परम् । पञ्चसंस्कार संयुक्तै भुञ्जीयाद्विधिवद् द्विजः । स्वाध्यायं चपुराणं वा हरि सङ्कीर्तनादिकम् । मुमुक्षुर्नित्ययज्ञं च मन्त्ररत्नंसदा जपेत्"इत्यादि भागवतस्याचारविशेषज्ञापकं शास्त्रम् - "स्त्रीशूद्राणां विधि वक्ष्ये संयक्प्रणववर्जितम् । ब्राह्मे मुहूर्ते" इत्यारभ्य "गच्छेच्छाथ नदीं तदा" इत्युक्त्वा "ब्राह्मणस्य विधानेन भक्तानां हि विधिर्भवेत् । प्रणवं वर्जयेत्संयग्विधिस्स्यात्सर्वकर्मसु । स ब्राह्मणविधानेन कृतशौचादिकस्ततः । केशवायेति मन्त्राद्यैर्जलं पीत्वा त्रयस्त्रयः" इत्यारभ्य "मूलमन्त्रेण विरजां स्मृत्वा स्नानं -

(सा.स्वा) शास्त्रविरोधமும் சொல்லி संप्रदायविरोधமும் சொல்லுகிறார். केवलेति- இப்படியாகில் भागवतரை समரென்கிற शास्त्रं विरोधियாதோ? என்னவருளிச்செய்கிறார். இவர்களை इति - यद्वा, இப்படி जातिकृतமாக भागवतब्राह्मणशूद्रादिகளுக்கு उत्कर्षापकर्षं சொன்னது கூடுமோ? शूद्रत्वकृतापकर्षं पूर्ववत् உண்டாகில் भागवतत्वकृतोत्कर्षமில்லாமையாலே அது अकिञ्चित्करமாக प्रसङ्गिயாதோ? ஆகையால் पूर्वजाति निवृत्तैயாய் उत्कर्षமுண்டாகிற-

---

(सा.प्र) प्रणवं वर्जयित्संयग्विधिस्स्यात्सर्वकर्मसु । तद्ब्राह्मणविधानेन कृत्वा शौचा दिकं ततः । केशवायेति मन्त्राद्यैर्जलं पीत्वा त्रयस्त्रयः'' इत्यारभ्य ''मूलमन्त्रेण विरजां स्मृत्वा स्नानं विधीयते । गुरु तद्भक्तशिश्रूषां मच्छिश्रूषाम च कारयेत् । एवं नियमयुक्तानां स्त्रीशूद्राणां तथैवच । तेभ्यो मुक्तिं प्रदास्यामि किं पुनर्भोगसंपद; एवमेव विधिस्तेषां मुक्तिरन्यत्र नान्यथा । भगवद्भक्तिमुक्तानां स्त्रीशूद्राणां चतुर्मुख'' इत्यादि भागवतशूद्राणामाचारविशेषज्ञापकं शास्त्रमित्यर्थः - नन्वेवं सति - ''ये यजन्ति हरिं सर्वे ब्राह्मणा एव ते स्मृताः । न शूद्राभगवद्भक्ता विप्रा भागवता स्मृताः । येषां चक्राङ्कितं गात्रम् शूद्रेष्वपिच दृश्यते । ते वै स्वर्गस्य नेतारो ब्राह्मणो भुवि देवताः । न शूद्रा भगवद्भक्तास्ते हि विप्रा इति स्मृताः । शुचिसद्भक्तिदीप्ताग्निदग्धदुर्जातिकिल्बिषः । श्वपचोऽपि बुद्धेः श्लाघ्यो नवेदाध्योपि नास्तिकः'' इत्यादिभिस्सर्वेषां भागवतानां साम्योक्तिर्न्याकृन्येते त्यत्र ''वर्णाश्रमाचारवता पुरुषेण पर। पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणातमभ्यर्च्य सिद्धिं विन्दति मानवः । श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् । तस्मात्सप्रणवं सूद्रो मन्नामानि न कीर्तयेत्'' इत्यादि प्रमाणैर्यावच्छरीरपातं भागवतानामपि स्वस्ववर्णाश्रमाचारानुष्ठानेनैव भगवत्प्रीत्या पुरुत्रार्थसिद्धि र्नान्यथेत्यवगमादाचारविशेषाणामवर्जनीयत्वात् सत्वोद्रेकादि धर्मवत्तयापि साम्यसिद्धेर्वचनानामन्यथा सिद्धेस्सन्ध्यावन्दन वेदाध्ययनाद्युपयुक्तब्राह्मण्यसिद्धिर्नास्तीति सांप्र -

---

(सा.वि) विधीयते । गुरुतद्भक्तिशिश्रूषां मच्छिश्रूषां च कारयेत् । एवं नियममयुक्तानां स्त्रीशूद्राणां तथैवच । तेभ्यो मुक्तिं प्रदास्यामि किंपुनर्भोगसंपदः'' इत्यादि भागवतशूद्राणामाचार विशेषज्ञापकं शास्त्रम् - तथा अशोचप्रकरणे ''ब्राह्मणानां दशरात्रमाशौचं शूद्राणां त्रिम्शद्रात्रम्'' इत्युक्त्वा ''मासार्थं वैष्णवे शूद्रे दासदास्योश्च शार्ङ्गिणः'' इत्यादिकमुक्तम् - एतत्सर्वं विरुद्धं स्यादिति भावः- एवं च सति केवलब्राह्मशूद्रयोर्वर्णधर्माननुष्ठानविषये तावत्तारतम्य मिति च तथा ''यजन्ति ये हरिं सर्वे ब्राह्मणा एव ते स्मृताः । न शूद्रा भगवद्भक्ताः । येषां चक्राङ्कितं गात्रं शूद्रेष्वपि च दृश्यते । ते वैस्वर्गस्य नेतारो ब्राह्मणा भुवि देवता'' इत्यादि साम्यप्रतिपादकानि प्रमाणानि परमपुरुषार्थ प्राप्तौ साम्यप्रतिपादकनीति च वादि -

(सा.दी) ननु ''भक्तिरष्टविधा'' என்னும் वचनத்தில் ''तस्मै देयं ततो ग्राह्यम्'' என்று म्लेच्छभक्तனோடே கொள்கொடை சொல்லிற்றில்லையோ? ''स च पूज्यो यथा ह्यहम्'' என்று पूजिக்கவும் சொல்லிற்றில்லையோ?

(सा.स्वा) ''भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छोऽपि वर्तते । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्'' என்று भगवद्भक्तम्लेच्छादिविषयத்திலும் ब्राह्मणकृत्यமானதான प्रतिग्रहं சொல்லிற்றில்லையோ?

(सा.प्र) अहं व्यादस्तु भद्रं ते किं करोमि प्रशाधि माम् । एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति ।। जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः । श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशहर्षितः ।। द्वितीयमिदमाश्चर्यमित्यचिन्तयत् स द्विजः । पाद्यमाचमनीयं च प्रतिगृह्य द्विजोत्तमः ।। सुखोपविष्टस्तं व्याधं वचनं चेदमब्रवीत् । कर्मैतद्वै न सदृशं भक्तः प्रतिभाति मे ।। अनुतप्ये भृशं तात तव घोरेण कर्मणा । कुलोचितमिदं कर्म पितृपैतामहम्महत् ।। वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज ।धात्रा विहितं पूर्वं कर्मस्वं पालयाम्यहम् ।'' इति धर्मव्याधेन स्वजात्यानुगुण धर्माणामपरित्याज्यात्वस्य मातापितृशिश्रूषायाश्चावश्य कर्तव्यत्वाद्युपदेशादेषां चाचार्यत्व प्रयोजकत्वाभावादित्यर्थ - सूतादिवृत्तान्त आदिशब्दार्थः । ननु ''मद्भक्तजनवात्सल्यं पूजायां नुमोदनम् । मत्कथाश्रवणे भक्तिस्स्वरसत्राङ्ग विक्रिया । स्वयमाराधने यत्नो ममार्थे डम्भवर्जनम् । ममानुस्मरणं नित्यं यच्च हंसोपजीवति ।भक्तिरष्टविधा'' इत्यत्र देयप्रतिग्राह्य विशेषानुक्तेश्श्रीमन्नारायणवत्पूज्यत्वोक्तेश्च पक्वान्नकन्यकादीनामपि देयत्वपतिग्राह्यत्वयोस्सिद्धेश्शूद्रत्वे च तदनुपपत्तैर्जातिरपेयादेवेत्यत्र பெரியவாச்சான்பிள்ளை इत्याख्यातैः पूर्वाचार्यैरस्य प्रामाण्य ज्ञानमेव देयं प्रतिग्राह्यं च - नतुकन्यकादिरिति व्याख्यातत्वात् - पूज्यत्वस्य च सामान्यविशेषन्यायात् - ''न परीक्ष्य वयो वन्द्या नारायणपरायणाः । अपि स्युर्हीनजन्मानो मान्या निम्नेन चेतसा'' इत्याद्यानुगुण्येन मानसपूजापर्यवसानसिद्धेर्यथा शक्तिपूजाकरणपूर्वकं ''यश्शूद्रं भगवद्भक्तं निषाधं स्वपचं तथा ।

(सा.वि) भद्रं ते किं करोमि प्रशाधि माम् । एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति ।। जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः । श्रुत्वा तु तस्य तद्वाक्यं न विप्रो भृशहर्षितः ।। द्वितीयाचार्य इति तमचिन्तयत स द्विजः । पाद्यमाचमनीयं स प्रतिगृह्य द्विजोत्तमः ।। ततस्सुखोपविष्टं तं व्याधं वचनमब्रवीत् । कर्मैतद्येन सदृशं भवतः प्रतिभाति मे ।। अनुतप्ये भृशं तात तव घोरेण कर्मणा ।'' इति विप्रेण पृष्टो व्याध आह - ''कुलोचितमिदं कर्म पितृपैतामहं मम । वर्तमानस्य मे धर्मे नावज्ञां मा कृथा द्विज । धात्रा तु विहितं पूर्वं कर्म स्वं पालयाम्यहम् ।।'' इति धर्मव्याधवृत्तान्तेऽपि स्वजात्याचारा परित्याज्यत्वमेवोपदिष्टम् - न त्वाचार्यवरणसाध्यविरोध्यपदेश इति भावः - வழிதிகைத்தாரை, मार्गभ्रष्टान् । வழியிலே சேர்க்கிற मात्रम्, मार्गोपदेशेन मार्गे प्रवेशनमात्रं तत्सदृशं यथा तथा। தெளிவித்து, प्रकाश्य । விட்டாராமித்தனை, परित्यागमात्रम् - आचार्यकम् , आचार्यत्वम् । आचार्य शब्दात्तस्य भाव इत्यर्थे यो पथाद्गुरूपोत्तमाद्वयुङिति -

**मू - ''भक्तिरष्टविधा ह्येषा यस्मिन्म्लेच्छेऽपि वर्तते। तस्मै देयं ततोग्राह्यं स च पूज्यो यथा ह्यहम्''** என்றதுவும் **कन्याप्रदानपर**மன்று - **ज्ञाब प्रदानपर**மென்று **व्याख्यानं** பண்ணினார்கள். **''पूज्य:''** என்கிற **शब्द**மும் **साधारण**மாகையாலே **भागवतत्व**முண்டானால் **सर्व**ரும் **शास्त्रं** சொன்ன மட்டுக்களிலே **आदरणीय**ர் । இவர்களை **सजातीय**ரோடொக்க நினைத்து **अवज्ञै** பண்ணினபோது **नरक**மாமென்றிவ்வளவிலே **(तत्परम्) तात्पर्यम्** - இவ் **अर्थ**த்தை **''यश्शूद्रं भगवद्भक्तम्''** என்று தொடங்கி **महर्षिसङ्ग्रहि**த்தான். ஆகையால் **जातिव्यवस्थै** குலையாதே நிற்க **भागवतप्रभावं** கண்டுகொள்வது.

---

(सा.दी) என்னவருளிச்செய்கிறார் - भक्तिरष्टविधेत्यादिயால் - இவ்விடத்தில் पूज्यशब्दத்துக்கு अर्थமருளிச்செய்கிறார். पूज्य: என்கிற शब्दमित्यादि - सजातीयரோடொக்க நினைக்கலாகா தென்னுமிடத்துக்கு प्रमाणं காட்டுகிறார். இவ் अर्थத்தை इत्यादि । ''वीक्षते जातिसामान्यात् स याति नरकं नर:'' என்றதிறே. परमप्रकृतமான जातिव्यवस्थैயை उपसंहरिக்கிறார் - ஆகையால் इत्यादिயால் -

---

(सा.स्वा) ஆகையால் भक्तविषयத்தில் जात्यादि नियतकर्तव्यनियमமுண்டோ? என்னவருளிச் செய்கிறார். भक्तिरिति. இப்படியாகில் स च पूज्यो यथा ह्यहமென்று पूज्यतोक्तिக்கு गति யெது? என்னவருளிச் செய்கிறார் - पूज्य इति - இப்படி तात्पर्यं कल्पिக்கைக்கு निदानமுண்டோ? என்னவருளிச் செய்கிறார். இவ் अर्थத்தை इति। இப்படி जाति कृतोत्कर्षापकर्षं व्यवस्थितமாகில் ''देवा अपि न तं विदु:'' என்று अपरिच्छिन्नप्रभावं சொல்லுகிறது विरोधिயாதோ? என்னவருளிச் செய்கிறார் - ஆகையால் इति - ஆகையால், जातिव्यवस्थै प्रामाणिकैயாகையால் - இனி विष्णुभक्तिயினாலே

---

(सा.प्र) वीक्षते जातिसामान्यत्स याति नरकं नर:। मद्भक्तं शूद्रसामान्यादव मन्यन्ति ये नरा:। नरकेष्ववतिष्ठन्ति वर्षकोटिं नराधमा:'' इत्यादिभिरवमतिकरणे प्रत्यवायावगमान्नावमन्तव्या इत्याह. भक्तिरष्टविधेत्यादिना - किञ्च वैष्णवत्वे जातिरपेयादिति पक्षे किं शूद्रत्वाद्यपकृष्ट जातिरेवापेयान्न तूत्कृष्टब्राह्मण्यादिजातिरिति मतम्? उतोत्कृेष्टजातिरप्यपेयादिति? नाद्य: - अपकृष्टजातिमात्र -

---

(सा.वि) वुङितस्याकारादेशे रूपम्। व्याख्यानं பண்ணினார்கள் इति பெரியவாச்சான்பிள்ளை इत्युक्तव्याख्यातार इति शेष: - साधारणமாகையாலே, सामान्यशब्दतया। शास्त्रं சொன்னமட்டுக்களிலே, ''न परीक्ष्य वयो वन्द्या नारायणपरायणा:। अपि स्स्युर्हीनजन्मानो मान्यानिम्नेन चतसा'' इत्यादि शास्त्रोक्तरीत्या अत्र न परीक्ष्येति सजातीयविषयं वन्दनमुक्त्वा अपिस्स्युरिति हीनजातिविषये अधिकजातीय्यैर्निम्नेन चेतसा स्वजात्युत्कर्षप्रयुक्ताहङ्काररहितेन आदरप्रवणेन चित्ते न मान्या इति इति माननं संमाननमुक्तम्। नतु कायिक प्रणामादिकम् - तद्रीत्यासच पूज्यो यथा ह्यहमित्युक्त पूज्यत्वं क्वचित्प्रणामादि पर्यन्तं क्वचिदादरणमात्रपर्यवसितमिति भाव: - जातिसामान्य बुद्ध्यावमानकरणं नरकावहमित्यवमानाकरणेऽपि पूज्यत्वोक्तेस्तात्पर्यमित्याह। இவர்களை इति - सजातीयரோடொக்க நினைத்து, इतरशूद्रैस्तुल्यत्वेन विचार्य - एवं तात्पर्ये वचनान्तरैकमत्यं दर्शयति-இவ் अर्थத்தை इति। एतद्वचनं पूर्वमेव व्याख्यातम् - अक्तमर्थमुपसंहरति -

**मू - ''अतो जातेर्निकृष्टायास्सर्वस्या वा विनाशतः । साजात्यं विष्णुभक्तानामिति मन्दमिदं वचः ।। वैष्णवत्वेन मान्यत्वं समानं मुनिसम्मतम् । जात्यादिध्वंसतस्साम्यं मुक्तिकाले भविष्यति ।।**

(सा.दी) उक्तार्थங்களை सङ्ग्रहिக்கிறார் - अत इति । अतः, पूर्वोक्तहेतुக்களால் निकृष्टायाः शूद्रत्वादिजातेः । सर्वस्या वा, उत्कृष्टाया अपि जातेर्विनाशतः என்றபடி. विष्णुभक्तानां साजात्यं, जातिभेदाभाव इतीदं वचनं मन्दयुक्तिकमित्यर्थः இவ்விடத்தில் - वस्तुस्थितिயையருளிச்செய்கிறார். वैष्णवत्वेनेति । पूर्वकुलापगमवैष्णवकुलप्राप्तिभ्याम् । मान्यत्वं , बहुमन्तव्यत्वं भागवतानां समानम् - இத்தாலிவர்களுக்கு प्रवृत्तिनियतै என்றதாயிற்று. जात्यादीत्यत्र स्पष्टम् । जातिवृत्तव्यवस्थैயில் -

(सा.स्वा) पूर्वतननिकृष्टजातिमात्रं கழிந்து सर्वभागवतருக்கும் साम्यமுண்டாகிறது उत्कृष्टब्राह्मण्यं கழியறதில்லையென்று சிலர் சொல்லுவர்கள் - சிலர் शूद्रत्वब्राह्मण्यत्वरूपनिकृष्टोत्कृष्टसर्वजातिயும் கழிந்து साम्यமுண்டாகிறதென்று சொல்லுவர்கள் - இந்த उक्तानुक्तमतं सर्वமும் उक्तयुक्तिயினாலே தானே निरन्तरமென்கிறார். अतो जातेरिति कारिकाद्वयத்தால் अतः, पूर्वोक्तयुक्त्या - निकृष्टाया जातेर्विनाशतस्सर्वस्या वा जातेर्विनाशतः विष्णुभक्तानां साजात्यमितीदं वचः मन्दम् - ஆனால், ''स विप्रेन्द्रो मुनिश्श्रीमान्'' इत्यादि शास्त्रத்துக்கு गतिயெது? என்னவருளிச் செய்கிறார் - वैष्णवत्वेनेति - இப்படியாகில் ''देवादिभेदेऽपध्वस्ते'' என்கிற कृत्स्नजातिध्वंसम् எந்த कालத்திலே? என்ன அருளிச்செய்கிறார் जात्यादीति । आदिशब्देन -

(सा.प्र) विनाशबोधकानन्यथासिद्धप्रमाणाभावात् - नेतरः - सर्वस्या जातेर्विनाशे ब्राह्मणभागवतविषये अपगोरणे शतयातनाद्यभावप्रसङ्गात् तेषां हननादौ ब्रह्महत्त्याद्यभावप्रसङ्गात् - अष्टवर्षोपनेयत्वाद्यभाव-प्रसङ्गात् च । अतो जातेर्विनाशो नोपपद्यत इति यावच्छरीरपातं वैष्णवत्वेनैव साजात्यं समानम् - शरीरपातानन्तरन्तु परमसाम्यमित्याह । अतो जातेरित्यादिना -

(सा.वि) अत इति - निकृष्टाया जातेर्विनाशो वा ? सर्वस्याः ब्राह्मणत्वादि जातेर्विनाशो वा ? निकृष्टाया जातेर्विनाश इत्यत्र प्रमाणं नास्ति । प्रमाणं विना तन्नाशाङ्गीकारे ब्राह्मणत्वादिजातेरपि विनाशाभ्युपगमप्रसङ्गः ।सर्वस्या अपि विनाश एवेत्यपि पक्षो न युक्तः - मनुष्यत्वादिजातीनामपि विनाशोक्तौ प्रत्यक्षविरोधात् - अतस्साजात्यमिति वचो मन्दमिति भावः । तर्हि न शूद्रा इति वचनानां का गतिरित्यत्र पूर्वोक्तप्रपत्तिपरत्वं स्मारयति । वैष्णवत्वेनेति । जातिव्यवस्थायां प्रमाणमाह -

(सा. सं) उक्तमर्थमुपसंहरन् परपक्षमनूद्य दूषयति - अत इत्यादिना द्वाभ्याम् - अतः जातिव्यवस्थामहत्त्वैव भागवतप्रभावस्य तत्तदितिहाससिद्धत्वात् - सर्वस्या वा, उत्कृष्टाया अपि जातेः - मन्दं , निकृष्टोत्कृष्टजात्योः प्रत्यक्षादिसिद्धत्वेन तद्बाधितत्वादित्यर्थः - तर्हि जात्याद्यविध्वंसे तद्देशिकानामात्मसाम्यावहत्व- मुच्छिन्नं स्यात् - तेषां विशेषेण मान्यत्वं च न स्यादित्यत्राह । वैष्णवत्वेनेति - उत्कृष्टजातीयत्वेन समानं मान्यत्वमपि वैष्णवत्वेनैव - भागवतानां तत्तज्जात्यनुगुणाचारविधायकमुनिसंमतञ्च जात्यादिध्वंसनिमित्तसाम्यं तु मुक्तिकाल एव भविष्यति - नाद्येत्यर्थः - तद्देशिकानामात्मसाम्यवहत्व -

**मू - भगवद्गीतादिகளிலும் "स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम् । स्वे स्वेकर्मण्यभिरतस्संसिद्धिं लभते नरः ।। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु ।। तस्मात्सप्रणवं शूद्रो मन्त्रनामानि न कीर्तयेत् । वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।। विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः । न चलति निजवर्णधर्मतोयः" इत्यादिகளாலே भागवतனுக்கே यथापूर्व जातिव्यवस्थैயும், அதுக்கு अनुरूपமான वृत्तव्यवस्थैயும் स्पष्टமாகச் சொல்லப்பட்டது. இப்படி भागवतत्वமாகிற गुणமும் அதடியாக வரும் पुरुषार्थविशेषமும் समानமாயிருக்க जातिविशेषங்களும் प्रवृत्तिविशेषங்களும் नित्यव्यवस्थितங்களென்னுமிடம் "शूद्रस्साधुः कलिस्साधुः" इत्यादिகளிலும் प्रसिद्धम् ।**

(सा.दी) இன்னும் प्रमाणமருளிச்செய்கிறார். भगवद्गीतादिகளில் इत्यादि । "स्त्रियो वैश्यास्तथा शूद्राः" என்று जातिव्यवस्थैயில் प्रमाणम् "स्वे स्वे कर्मण्यभिरतः" என்று वृत्तव्यवस्थैயில். भागवतர்க்கு जातिविशेषங்களும் वृत्तविशेषங்களும் नित्यव्यवस्थितமென்னுமிடம் "शूद्रस्साधुः कलिस्साधुः" इत्यादिகளிலும் प्रसिद्धமென்கிறார் - இப்படி भागवतत्वमित्यादि । साधुः, क्लेशराहित्याद्भाग्यवान् - ब्राह्मणवदनुष्ठानமில்லாமையாலே என்று கருத்து. व्यवस्था प्रशंसा -

(सा.स्वा) विद्यादिग्रहणम् । भागवतர்களுக்கே जातिव्यवस्थैயிலும் वृत्तव्यवस्थैயிலும் बहुप्रमाणமருளிச் செய்கிறார் - भगवद्गीतादिகளும் इति - स्त्रिय इति - "मां हि पार्थ व्यपाश्रित्य येऽपिस्स्युः पापयोनयः" என்று पूर्वार्धम् । मां हि पार्थ व्यपाश्रित्य वर्तमानेषु स्त्रियः वैश्याः - तथा शब्दश्च पर्यायः-शूद्रश्च ये पापयोनयोऽपि स्युः- तेऽपि परांगतिं यान्तीत्यन्वयः - तेऽपीति भागवतत्वदशायामप्यपकर्षणु वादाच्छूद्रत्जात्यनुवृत्तिः प्रतीयते-स्वे स्वे इति फलसिद्धेः पूर्वमुपायनिष्ठतादशायां स्वस्ववर्णतद्धर्मानुवृत्तिः प्रतीयते । एवमुत्तरत्रापि - स्त्रियो वैश्याश्ति जातिव्यवस्थायां प्रमाणम् । स्वे स्वे इति तद्धर्मव्यवस्थायां प्रमाणமென்றபடி - இனி प्रातिस्विकமாக शूद्रभागवतனுக்கே शूद्रत्वजातिயும் तत्प्रयुक्तप्रवृत्तिயும் नित्यव्यवस्थितैயென்னுமிடத்தில் प्रमाणமருளிச்செய்கிறார். இப்படி इति - साधुः, क्लेशराहित्याद्भाग्यवान् - बहुपुण्यसाध्यब्राह्मण्यமும் तत्प्रयुक्तातिप्रयास साध्ययज्ञाद्यनुष्ठानமும் -

(सा.प्र) एवं जात्यविनाशं युक्तितः प्रसाध्यवचनतोऽपि दर्शयति - भगवदित्यादिना - महाभारतविष्णुपुराणादिरादिशब्दार्थः - एवं जात्यनपगमे प्रमाणमुपन्यस्य तदनुग्राहकतर्कमभिप्रेत्याह- இப்படி भागवतत्वमित्यादिना । शूद्रत्वस्य साधुत्वमुपायलाघवेऽपि फलाधिक्य -

(सा.वि) स्त्रियो वैश्यास्तथा शूद्रा इति । वृत्तव्यवस्थायां प्रमाणमाह । स्वे स्वे कर्मणीति । भागवतत्व गुणविशेणपुरुषार्थसाम्यं जातिप्रयुक्तधर्मानुष्ठान क्लेशाभावं चाभिप्रेत्योक्तम् । शूद्रस्साधुरिति । व्यास भाषितम् । जातिवृत्तव्यवस्थापकप्रमाणमाह । भागवतत्वமடியாக इति । व्यासः क्वचित्तीर्थे स्नानं कुर्वन् महर्षिषु कस्य साधुत्वमिति धर्मबुभुत्सया गत्यतिष्ठत्सु तदभिप्रायं ज्ञात्वा -

(सा.सं) मपि वैष्णवत्वे नेति भावः । विष्णुपुराणे षष्ठेंऽशे कलिधर्मनिरूपणे शूद्रस्साधुरित्युक्तिः -

(सा.स्वा) அன்றிக்கே தானே शूद्रत्वरूपापकर्षविशिष्टனாயிருக்கச் செய்தே अप्रयाससाध्य स्ववर्णोचिताल्पतरधर्ममात्रेण भगवद्भक्तिं लब्ध्वा मोक्षभाक्காகையாலே साधु என்கிறதென்று கருத்து - இப்படி जातिव्यवस्थै சொன்னது கூடுமோ? ब्राह्मण्यजातियாவது नैय्यायिकोक्तजातिविशेषமோ? शिखा यज्ञोपवीतादिलिङ्गமோ? घटत्वादिवदवयवसंस्थानविशेषமோ? क्रिया विशेषात्मिकैயோ? श्रीभाष्यादि विरोधेनापसिद्धान्तप्रसङ्गेन आद्यपक्षं கூடாது. रथकारादावतिव्याप्तिकतया द्वितीयपक्षமும் கூடாது. शूद्रादिव्यावृत्तावयवसंस्थानविशेषस्य घटत्वादिवदवयवसंस्थानविशेष प्रत्यक्षेणानुपलम्भத்தாலே तृतीयपक्षமும் கூடாது. "ब्राह्मणो यजेत" इत्यादिविधिभिर्ब्राह्मण्यं पुरस्कृत्येव क्रियाविशेषविधानेनात्माश्रय प्रसङ्गத்தாலே तुरीयपक्षமும் घटिயாது. नान्यब्राह्मणमातापितृजन्यत्वम् - आत्माश्रयात् । परमात्ममुखजातानामयोनिजानामन्येषां च मानसानामगस्त्यवाल्मीकिप्रभृतीनां च ब्राह्मण्याभावप्रसङ्गात् - अत एव गोत्रप्रवरसंबन्धवत्पूर्वपुरुषोपदेशसिद्धगोत्रप्रवरसंबन्धवत्वमिति निरस्तम् - अयोनिजेष्वभावात् - ஆகையாலே योनिजायोनिजसर्वप्रयोगानुगतமாகவும், उत्पत्तिप्रभृति मरणान्तமாக स्थायिயென்னும் दुर्निरूपமன்றோ? किं च ब्राह्मण्यं सुनिरूपமானாலும் "विप्रा भागवतास्स्मृताः" इत्यादावर्थवर्णनமும் दुर्घटமன்றோ? विप्राः विप्रवदादरणीयரென்று சொன்னது கூடுமோ? सामान्यब्राह्मणனிடத்திலே विप्रत्वमादरणीयता हेतुவன்றே? अभक्तब्राह्मणன் शूद्रवदनादरणीयனென்று சொன்னதுவும் अनुपपन्नम् । प्रशंसा हेतु ब्राह्मण्यமிருக்கச் செய்தே अनादरं கூடாதே? இனி विप्राः என்கிற (पदத்துக்கு) पदं मानसब्राह्मण्याभिधानमुखेन मानसब्राह्मण्य युक्ततया -

---

(सा.प्र) हेतुत्वेन स्यात् - ततश्च शूद्रत्वस्यैव नाशे तस्य लघूपायानुष्ठानमुखेन गुरुफलजनकत्वं दूरनिरस्तं स्यात् - अतो जातिर्नापगच्छतीति भावः - एवं "विप्राभागवता स्मृताः - तं देवा ब्राह्मणं विदुः"इत्यादिभिः 'यश्शूद्रं भगवद्भक्तम्" इत्यादिभिश्चैकस्मिन्नेवैकदैव ब्राह्मण्यशूद्रत्वयोर्बोधने परस्परव्याघात इत्यत्र पूज्यता परत्वेन व्याघाताभावं प्रदर्श्य शूद्रेषु बोध्यमान ब्राह्मण्यस्य वेदाध्ययनोपयुक्त ब्राह्मण्यभिन्नत्वात्तस्य च -

---

(सा.वि) सकृन्निमज्योत्तीर्य कलिस्साधुरित्युक्तवानिति भारतकथा । यदि शूद्रत्वस्य नाशस्तदा सर्वेषां तुल्यत्वात्कथं शूद्रस्य साधुत्वं, शूद्रत्वाभावात् वृत्ततारतम्याभावाच्च तद्व्याघातस्स्यादिति भावः - "पूर्वं गुणविशेष सदसद्भावங்களாலே अपकृष्टजातीयரை उत्कृष्टवाचकशब्दத்தாலே சொல்லியும் उत्कृष्टजातीयரை अपकृष्टजातिवाचकशब्दத்தாலே சொல்லியுமிருந்தது" इति- महर्षिகளும் प्रपत्तिविशेषங்களைப்பற்ற उत्कृष्टர் பக்கல் अपकृष्ट शब्दமும் अपकृष्टர் பக்கல் उत्कृष्टशब्दமும் -

---

(सा.सं) तज्जात्यनुगुणादैकन्त्योचितलघुप्रवृत्तिविशेषादेव ऐकान्त्यसंसिद्धेर्लाभनिबन्धनेति तत्प्रकरणे व्यक्तम् -

**मू - तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्वमु(त्तमम्)त्कटम्'' इत्यादिகளில் சொல்லுகிறபடியே सत्त्वादिगुण -**

(सा.दी) वचनங்களுக்கு विषयव्यवस्थैயைக் காட்டுகிறார். तमश्शूद्र इत्यादियाल். शूद्रे, शूद्रशरीरத்தில். तम उत्कटम् । क्षत्रियशरीरத்தில் रजस्ஸு उत्कटम् । ब्राह्मणशरीरத்தில் सत्वगुणमुत्कटम् ।

(सा.स्वा) आदरणीयரென்று अर्थवर्णनमुपपन्नமென்னில் मानस ब्राह्मण्यமென்றும், कायिकब्राह्मण्यமென்றும், ब्राह्मण्यद्वयமுண்டோ? एवं क्षत्रियत्वादि धर्मமும் दुर्निरूपமாகையாலே पूर्वोक्तं सर्वमनुपपन्नமன்றோ? என்ன ब्राह्मण्यद्वयाभिधानमुखेन सर्वशास्त्रार्थाविरोधं समर्थिக்கிறார். तमश्शूद्र इत्यादिना । सत्वादीति । रजस्तमोऽभिभवेनोद्रिक्तसत्त्वं ब्राह्मण्यम् -

(सा.प्र) शूद्रत्वेन सहावस्थाने विरोधाभावान्न व्याघात इत्यभिप्रयन् शूद्रत्व विरोधिब्राह्मण्यस्यौत्पत्तिकत्वनियममपरस्य कादाचित्कत्वं चाह - तमश्शूद्र इत्यादिना - द्विविधेऽपि ब्राह्मण्ये -

(सा.वि) प्रयोगिத்தார்களித்தனை'' इति च सामान्येन लोकदृष्ट्योक्तम् । इदानीं ''तमश्शूद्रे रजःक्षत्रे ब्राह्मणे सत्वमुत्तमम्'' इति वचनानुरोधेन शरीरनिष्ठाधिकारस्सत्वादयश्शरीरेषु ब्राह्मण्यादि जाति समवायप्रयोजका इति ब्राह्मण्यादि जातिसमवाये तत्तज्जातिं प्रवृत्तिनिमित्तीकृत्य ब्राह्मणादि शब्दाः प्रयुज्यन्त इति ते जातिशब्दाः , तादृशब्राह्मणादिषु निरुद्दिश्य 'अष्टवर्षं ब्राह्मणमुपनयीत'' इत्यादिषु विधीयमाना उपनयनादि धर्माव्यवस्थिता भवन्ति ।गौणमुख्यन्यायेन मुख्यार्थस्यैव ग्राह्यत्वाच्छूद्रादिषु गुणविशेषमूलकतया प्रयुज्यमानब्राह्मणादि शब्दानामपि ब्राह्मणादि गुणविशेषमूलक ब्राह्मणादिभेदेषु दोषमूलकतया प्रयुज्यमानशूद्रादि शब्दानामप्यनुगततया मनोगत सत्वोत्कर्षादिकमेव प्रवृत्तिनिमित्तमिति वक्तुमुचितम् । सत्त्वादेः ब्राह्मण्यादि नियतधर्मत्वाद्भगवद्भक्तिवृत्तादीनामप्यनुगतत्वात् । अत इदं मानसब्राह्मण्यादिकं गौणं शारीरब्राह्मण्यादि जातेर्भिन्नं सर्वजाति साधारणं प्रशंसानिन्दयोः पुरुषार्थतदुपाययोश्च मूलम् - एवं च ''न शूद्रा भगवद्भक्ताः'' इत्यत्र शूद्रत्वजातिमन्तो भगवद्भक्ता न शूद्राः, मनसि तमोगुणवन्तो न भवन्ति - तत्प्रयुक्तकामक्रोधादिमन्तो न भवन्ति । परन्तु विप्राः , मनस्यधिकसत्ववन्तो ज्ञायन्ते । तत्प्रयुक्तज्ञानशमादिमन्त इति च ज्ञायन्ते । तत्र हेतुर्भागवता इति । भागवतत्वाद्धेतोः - अन्यथा भागवतत्वमेव न स्यात् । अतः पूज्या इति भावः । ये हि जनार्दने अभक्ताः भक्तिरहितास्ते तत एव हेतोस्सर्ववर्णेषु सर्वजातिविशिष्टा अपि शूद्राः, ब्राह्मणत्वादि जाति विशिष्टा अपि मनसि तमोगुणाधिक्यविशिष्टास्तत्प्रयुक्तराग, द्वेष,मोह,लोभ,मद,मात्सर्यवन्तः ज्ञायन्ते । ततः ''त्यज दुर्जनसंसर्गम्'' इत्येतद्विषयभूतानि ''यो ब्राह्मणायापगुरेत्तंशतेन यातयेत् । घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं नार्चयते विमूढः । स पापकृद्ब्रह्मदवाग्निदग्धो दण्ड्यश्च वध्यश्च न चास्मदीयः'' इत्युक्तरीत्या जात्या पूज्यत्वेऽपि विशेषनिष्ठानां दूरपरिहरणीयाः । ''यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति'' इत्येतदपि वेदविद्भ्य इति विशेषबलान्मानसब्राह्मण्यवतामेव नमस्कार्यत्वं प्रतिपादयति ।नतु तद्विरहित शारीरब्राह्मण्यवतामपीति न क्वापि व्यवस्था विरोध इत्यभिप्रेत्याह । तमश्शूद्र इत्यादिना ।

**मू** - **तारतम्यवत्**தான **शरीर**த்தில் **ब्राह्मण्यादि**கள் வேறே. **मनस्**ஸின் **सत्त्वादिगुणविशेष** மடியாக **सर्वजाति**களிலும் **प्रशंसावाक्य**ங்களாலே சொல்லப்பட்ட **ब्राह्मण्यादि**களும் வேறே. இவற்றில் **शरीरगुणविशेष**மடியாக **व्यवस्थित**ங்களான **शरीरजातिविशेष**ங்கள் **उत्पत्तिसिद्ध**ங்களாய் **मरणान्त**மாக **स्थिर**ங்களாயிருக்கும். **मानस**மான **सत्वादिगुणोन्मेष**மடியாகச் சொல்லுகிற **ब्राह्मण्यादि**கள் **सर्वजाति**களுக்கும் **संभावित**ங்களாய், **प्रह्लादादि**களுக்கு **जन्मसिद्ध**ங்களாய், நீக்கியுள்ளார்க்கு **आचार्यादिसंबन्धादिहेतु**க்களாலே **आगन्तुक**ங்களாயிருக்கும். இதில் **शारीरजातिविशेष**ங்களையிட்டு சில **शास्त्र**ங்கள் **नियत**ங்களாம். **मानस**மான **ब्राह्मण्यादि**களையிட்டு அவற்றுக்கு **अनुरूप**மான **पुरुषार्थतदुपाय**ங்களும் **प्रशंसादि**களும் **सर्वजाति**யிலும் **संभावित**ங்களாம். இதில் **ब्राह्मण्यादि**கள் பக்கலிலே **मानस**மான **विपरीताकार**ங்கள் வந்தால் **शमदमादियोग्य**மாக **शास्त्रसिद्ध**மான.

---

(सा.दी) प्रशंसावाक्यமாவது ''वृत्तस्थमपि चण्डालं तं देवा ब्राह्मणं विदुः'' इत्यादि मानसब्राह्मण्यादिகளும் வேறே. आदिशब्दाच्छूद्रत्वादिग्रहणम् - शारीरब्राह्मण्यादिलोकप्रसिद्धम्- யாதொருவனுக்கு मनस्ஸில் सत्त्वगुणமுண்டு அவன் मानसब्राह्मण्यवान्- யாதொருவனுக்கு मनस्ஸில் रजः அவன் मानसक्षत्रियன் - मानसवैश्यனும் - யாதொருவனுக்கு मनस्ஸில் तमस्ஸு அவன் मानसशूद्रனென்று विभागम् - ब्राह्मण्यादिகளில் आचारव्यवस्थोपयोग्याकारं காட்டுகிறார். இவற்றிலென்று - प्रशंसोपयुक्ताकारं காட்டுகிறார். मानसமானவென்று - இவற்றில் शारीर जातिविशेषத்தை अवलम्बिத்து धर्मशास्त्रங்கள் नियतवृत्तिपरங்களாமென்கிறார் - இதில் शारीरेति- निन्दाप्रशंसावचनங்களுக்கு विषयं காட்டுகிறார் - मानसமான इत्यादिயால் - मानसब्राह्मण्यद्यायत्त प्रशंसानिन्दैகளுக்கு प्रयोजकமருளிச்செய்கிறார். இதில் ब्राह्मण्यादिகள் इत्यादि - शमदमादीत्यादि निन्दाप्रयोजकम् -

---

(सा.स्वा) तमस्सत्त्वाभिभवे नोद्रिक्तरजः क्षत्रियत्वम् - रजस्सत्त्वाभिभवेनाल्पोद्रिक्ततमोगुणः वैश्यत्वम् - रजस्सत्त्वाभिभवेनात्यन्तोद्रिक्ततमोगुणश्शूद्रत्वम् - இது शारीरமென்று मानसமென்றும் - ரெண்டு வகையென்றபடி - ब्राह्मण्यद्वयத்துக்கும் प्रत्येकं कार्यविशेषव्यवस्थापकत्वத்தையருளிச் செய்கிறார் - இதில் इत्यादि वाक्यद्वयத்தாலே - சில शास्त्रங்கள் इति- ''वसन्ते ब्राह्मणमुपनयीत - राजा राजसूयेन यजेत'' इत्यादि शास्त्रமென்றபடி - அவற்றுக்கு इति - ''ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये गच्छन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः'' इत्याद्युक्त पुरुषार्थतदुपायங்களென்றபடி - प्रशंसादिகளும் इति - आदिशब्देन निन्दाग्रहणं ''न शूद्रा भगवद्भक्ता'' इत्यादौ என்றபடி. मातसशूद्रत्वं निन्दाप्रयोजकமென்று சொன்னது கூடுமோ? शूद्रனுக்கு मानसशूद्रत्वமுண்டாகில் அங்கு निन्दैக்கு शारीरशूद्रत्वமே निमित्तமாகலாமே? என்னவருளிச்செய்கிறார். இதில் इति। मानस -

---

(सा.प्र) प्रतिनियतशास्त्रप्रवृत्तिं प्रदर्शयन्नौपाधिके ब्राह्मण्ये स्वाश्रय भूतशूद्रादौ प्रशंसाधिक्यहेतुत्वरूपमौत्पत्तिक- ब्राह्मण्यवत्सु स्वव्यतिरेक निन्दाधिक्यहेतुत्वरूपं च विशेषमप्याह। இதில் शारीरेत्यादिना - शमादियोग्यமாக शास्त्रसिद्धமான इति - ''शमोदमस्तपश्शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्'' विद्यते -

**मू** - **जन्म**த்திலே பிறந்து தப்பினானென்று மிகவும் **निन्दै** நடக்கும். **जात्यन्तर**ங்களிலே பிறந்து **गुणोत्तर**னாய்ப் போந்தானாகில் **''एतैस्समे(तः) तैश्शूद्रोऽपि वार्धके मानमर्हति''** **इत्यादि**களிற்படியே **प्रशंसै** மிகவும் நடக்கும். இவற்றில் **शारीर**மாயும் **मानस**மாயும் வரும் **उत्कर्ष गर्वहेतु**வாமாகில் **अनर्थकर**மாம். இரண்டு வழியாலுமுள்ள **अपकर्षम्** "குலங்களாய வீரிரண்டில்" என்கிறபாட்டிலும் **''जनित्वाहं वंशे''** என்கிற **श्लोक**த்திலும் சொல்லுகிறபடியே தான் நின்ற நிலை தெளிந்து **कार्पण्य**த்தை விளைத்து **अकिञ्चनाधिकार**மான **उपायविशेष**த்திலே மாட்டுமாகில் **पुरुषार्थकारण**மாகையாலே **श्लाघ्य**மாம்.

---

(सा.दी) एतैस्समेतैरिति - शमादिभिः என்று अर्थம் - இருவகைப்பட்ட ब्राह्मण्यமும் गर्वहेतुவாமாகில் अनर्थத்தை விளைக்குமென்கிறார். இவற்றில் इत्यादि-द्विविधापकर्षமும் निर्वेदத்தை விளைக்கு மாகில் पुरुषार्थ हेतुतया श्लाघ्यமாமென்கிறார். இவ்விரண்டு इत्यादि - कुलங்களாய வென்றது द्विविधापकर्षத்தால் வந்த निर्वेदத்துக்கு उदाहरणम्। जनित्वाह மென்று मानसापकर्षத்துக்கு उदाहरणम् - தான் நின்ற நிலையாவது. आकिञ्चन्यम्। अयोग्यताप्रतिसन्धान कार्पण्यम्। एवं जातिव्यवस्थैயுண்டாகிலும் முன்பு சொன்ன -

---

(सा.स्वा) ब्राह्मण्यத்துக்கு प्रशंसाहेतुत्वத்தை उपपादिக்கிறார். जात्यन्तरங்களிலே इति - एतैश्शान्त्यादि-भिस्समेतः, समुदितः என்றபடி - இப்படியாகில் ஒருவனுக்கு उभयविधोत्कर्षं परनिकर्षानुसन्धानमुखेन गर्वहेतुता दशैயிலும் प्रशंसानिमित्तமாக प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். இவற்றில் इति இவற்றில், उत्कर्षसामान्यத்தில். अनर्थापर्यसाट्युत्कर्षं प्रशंसाकारण மென்று கருத்து. ஆனால் मानसापकर्षं निन्दाहेतुவாகில் उभय विधापकर्षத்துக்கு निन्दाहेतुत्वं कैमुत्यसिद्धமாகையாகில் कस्ययिदुभयविधापकर्षं स्वानुसन्धानमुखेन निर्वेदத்தையுண்டாக்கி परंपरयाकिञ्चनाधिकारமான स्वतन्त्रप्रपदनத்திலே மூட்டித்தாகில் तद्दशैயிலும் निन्दै प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். இவையிரண்டு வழியாலும் इति -

---

(सा.प्र) ब्राह्मणेदम'' इत्यादिशास्त्रैरित्यर्थः - नन्वेवं सति ब्राह्मण भागवतेषूभय-विधब्राह्मण्यस्यापि विद्यमानत्वात्तदनुसन्धाने गर्व एव स्यादित्यत्र - ''दृप्तो धर्ममतिक्रामति'' इत्यादिभिर्गर्वस्यानर्थहेतुत्वावगमात्सन कार्य इति दर्शयन्नुभयविधब्राह्मण्याभावरूपापकर्षानुसन्धानं लघूपायानुष्ठानेऽत्य न्तोपयुक्तत्वादत्युत्कृष्टमित्युभया-भावानुसन्धानमेव कार्यमित्याह। இவற்றில் शारीरமாயும் इत्यादिना - नन्वेवं भागवतशूद्राणां -

---

(सा.वि) उभयविधब्राह्मणोत्कर्षो गर्वहेतुश्चेदनर्थावहः- अपकर्षो निर्वेद हेतुश्चेदधिकारि तावच्छेदकत्वेन अतिशयावह इत्याह। இவற்றில் इति। कार्पण्यத்தை நினைத்து, कार्पण्यमनुसन्धाय। स्थितस्येति शेषः। उपायविशेषத்திலே மாட்டுமாகில், उपायविशेषे पर्यवसितश्चेत्। -

---

(सा.सं) एतैः, उक्तात्मगुणैः। समेतैः, मिलितैः - वार्धके, ज्ञानतो वृद्धतायां प्राप्तायाम्। இவ்விரண்டு வழியாலுமுள்ள आपकर्षमिति। सत्यपि शारीरे मानसे चोत्कर्षे तदुभयापकृष्टतानुसन्धानमित्यर्थः- कुलங்களாய வீரிரண்டில், वर्णत्वेन प्रसिद्धचतुर्षु- தான் நின்ற நிலை தெளிந்து, स्वनिष्ठभक्त्यादिषु शक्त्यभावादिकं ज्ञात्वा - पुरुषार्थकारणமாகையாலே इति - नोचेदुर्मतस्थानां नैच्यानुसन्धानवत्स्यादिति भावः। -

**मू** - இப்படிக்கு **जातिव्यवस्थै**யும் **जात्यनुरूप**மான **वृत्तव्यवस्थै**யுமுண்டானாலும் **सर्व**ர்க்கும் **भागवतत्वनिबन्धन**மாக முன்பு **समर्थि**த்த **उद्देश्यत्व प्रतिपत्ति**க்கு **विरोध**மில்லை. இப் **भगवत्पर**ரில் **''ऐश्वर्यं भगवत्येषां समान मधिकारिणाम्''** என்கிறபடியே **देवतान्तरस्पर्श** அற்றவர்கள் **एकान्ति**கள் - அவர்களில் வைத்துக் கொண்டு **''ज्ञानीतु परमैकान्ती''** என்கிறபடியே **प्रयोजनान्तरस्पर्श** மற்றவர்கள் **परमैकान्ति**கள் - அவர்களில் வைத்துக் கொண்டு **विलम्बाक्षम**ராய் **सर्वशक्ति**யான **शेषि** பக்கலிலே **भरन्यासं** பண்ணிச் செய்கிற **कैङ्कर्य**த்துக்கு **प्रयोजनान्तरं** கோலுகை பொலிசைக்கிடுவார் **मात्र** மென்கிற **श्रुत्यर्थ**த்தைத் -

---

(सा.दी) उद्देश्यत्वप्रतिपत्ति க்கு विरोधशङ्कै யைப் परिहरि க்கிறார். இப்படிக்கு इत्यादि யால். उत्कर्षप्रसङ्गाद्भगवतेषु उत्कर्षतारतम्य த்தையருளிச் செய்கிறார். இப் भगवत्पर ரில் इत्यादि - அதிலும் प्रपन्न ருடைய पारमै कान्त्यं षोडशवर्णसुवर्ण த்தோடொக்குமென்கிறார். அவர்களிலென்று. பொலிசைக் கிடுவார் मात्र மென்கிற **श्रुति, एकायनशाखै**யில் **''अथ भो भगवन्तं याचेत। नभो इत्याह।** -

---

(सा.स्वा) இரண்டுவழியாலும், कायिकत्व மான सत्वरूपमुखद्वय த்தாலேயுமென்றபடி - मोक्षापर्यव-साय्यपकर्ष निन्दाहेतु வென்றும் श्रेय: पर्यवसाय्युत्कर्षापकर्ष மிரண்டும் श्लाघ्यतानिमित्त மென்றும் கருத்து - उपसंहरि க்கிறார். இப்படி इति- सर्व ருக்கும் भागवतत्व மடியாக उद्देश्यत्व प्रतिपत्ति க்கு विरोध மில்லையென்று சொன்னது கூடுமோ? प्रयोजनान्तर परभागवतविषय த்திலும் परमैकान्ति க்கு उद्देश्यताप्रतिपत्ति प्रसङ्गि யாதோ? प्रयोजनान्तररहितपरमैकान्ति க்கு तद्रहितपरमैकान्ति யே उद्देश्य ன் - एकान्ति भागवतनुद्देश्य னன்றென்னில் இப்படி एकान्तिपरमैकान्तिभेदेन भागवत भेद முண்டோ? किञ्च भक्तियोगनिष्ठ னும் परमैकान्ति யாகையாலே प्रपन्न னுக்கு तदपेक्षया आधिक्याभावं प्रसङ्गि யாதோ? अतपसिद्धान्त மன்றோ? என்ன भागवतभेद த்தை निरूपि க்கிறார். இப் भगवत्पर ரில் इत्यादिना- போலிசை, वृद्धि- போலிசைக்கிடுவார், वृद्धि க்குப் போடுகிறவர் - கடன் கொடுக்கிறவரென்றபடி - श्रुतीति - एकायनशाखै யில் ''अथभोभगवन्तं -

---

(सा.प्र) जातेरनपगतत्वे तदनुगुणाचारवत्वे च तेषां पूजादिकं न स्यादित्यत्र पूजाप्रयोजकसद्भावात्सा च स्यादेवेत्याह - இப்படிக்கு जातीत्यादिना। एवं ब्राह्मण्यप्राप्तिरूपं प्रभावं व्यवस्थाप्य भागवतेषु परमैकान्तिनां सर्वोत्कृष्टत्वं स प्रतियोगिकं प्रदर्श्य तेषु भगवदाराधन भूतयावत्स्वव्यापारवत्वादिकं प्रभावं व्यवस्थापयति - இப் भगवदित्यादिना। போலிசைக்கு इति। -

---

(सा.वि) एवं जातिव्यवस्थायां भागवतत्वनिबन्धनोद्देश्यप्रतिपत्तेर्विरोधो नास्तीत्युपसंहरति। இப்படிக்கு इति। एतत्प्रकारस्य उत्कर्षप्रसङ्गा द्भागवतेष्वेकान्ति परमैकान्तिव्यपदेशनिदानमुत्कर्षतारतम्यमाह - இப் भगवत्पर ரில் इति- அற்றவர்கள், निवर्तितवन्त:। அவர்களில் வைத்துக் கொண்டு, तेषां मध्येऽपि। प्रयोजनान्तरं கோலுகை, प्रयोजनान्तरपेक्षा - போலிசைக்கிடுவார் मात्रं, वृद्ध्यर्थं वित्तप्रदानम् - என்கிற श्रुत्यर्थ த்தை, एतदर्थप्रतिपादकश्रुत्यर्थं ''कुसीदमेके विहरन्ति सर्वे -

---

(सा.सं) போலிசை, वृद्धि:- मैल्यनाशमप्यविचार्यवृद्धिलाभाशामात्रेणार्थ प्रदायीवेत्यर्थ: -

**मू** - தெளிந்து **कैङ्कर्य**த்துக்கு **मोक्षं**மும் **प्रयोजन**மென்று கோலாதே **कैङ्कर्यप्रयोजन**ராயிருக்குமவர் களுடைய **परमैकान्तित्वं षोडशवर्णसुवर्ण**த்தோடொக்கும். இம்மாற்றறியும் **महर्षि**கள் **महाभारतादि**களிலே **परमै कान्ति**களுடைய **माहात्म्य**த்தைப் **प्रपञ्चि**த்தார்கள் -

(सा.दी) आश्रयितव्यो भगवान्भवति। नत्वेव याचितव्यः'' तथाऽन्यत्र ''कुसीदमेके विहरन्ति स(र्वे) र्वं य आशीर्वदन्तो ददत्यत्र केचित्। पर्यन्तलोकास्त्विह ते भवन्ति अनाशिषस्तु विजयायानन्ताय'' इति ''यस्य सर्वे समारम्भाः अनाशीर्बन्धना इह। त्यागे यस्य हुतं सर्वं स त्यागी स च पण्डितः'' इति च - षोडश वर्ण परमैकान्तिகளுடைய माहात्म्यं महर्षिகளால் महाभारतादिகளில் प्रपञ्चिக்கப்பட்ட தென்கிறார் - இம்மாற்றறியும் इत्यादि - माहात्म्यवचनங்களில் नारायणैकनिष्ठस्य என்னும் वचनத்தினுடைய -

(सा.स्वा) याचेत ।नभो इत्याह आश्रयितव्यो भगवान् भवति - न त्वेव याचितव्य'' इति - तथान्यत्रापि ''कुसीदमेके विहरन्ति सर्वे य आशीर्वदन्तो ददत्यत्र किञ्चित् । पर्यन्तलोकास्त्विह ते भवन्ति अनाशिषस्तु विजया यानन्ताय'' इत्यादि श्रुत्यर्थமென்றபடி. षोडशवर्णसुवर्णத்தோடொக்குமென்று சொன்னது கூடுமோ? प्रपन्नனுடைய परमैकान्तित्वं षोडशवर्णसुवर्णसदृशமென்று महर्षिகள் சொல்லவில்லையே? என்னவருளிச்செய்கிறார் - இம்மாற்றறியும் इति? याः क्रियास्संप्रयुक्तास्स्युरेकान्तगत बुद्धिभिः। तास्सर्वा शिरसा देवः प्रतिगृह्णाति वै स्वयम् । सत्कर्मनिरताश्शुद्धास्सांख्ययोगविदस्तथा'' इत्यादौ प्रपन्नमाहात्म्यप्रपञ्चनं பண்ணுகையாலே -

(सा.प्र) ''कुसीदमेके विहरन्ति स(र्वे)र्वं य आशीर्वदन्तो ददत्यत्र किञ्चित् ।पर्यन्तलोकास्त्विह ते भवन्ति अनाशिषस्तु विजयायानन्ताय'' इति श्रुत्युक्तप्रकारेण वृद्ध्यर्थं ऋणतया द्रव्यप्रदातॄनिव ज्ञात्वेत्यर्थः - மாற்று. सुवर्णवर्णोत्कर्षसादृशभागवतोत्कर्षः। महाभारतादीति - श्रीभागवतहरिभक्ति सुधोदयस्कान्दभृगुसंहितादिरादिशब्दार्थः। महाभारते ''मद्भक्तजनवात्सल्यम् ''इत्यादिः - ''ये यजन्ति हरिं सर्वे ब्राह्मणा एव ते स्मृताः'' इत्यादिः - ''न शूद्रा भगवद्भक्ताः'' इत्यादिश्च - श्री भागवते - ''श्वपचोऽपि महीपाल विष्णुभक्तो द्विजाधिकः'' इत्यादिः - ''न शूद्राभगवद्भक्ता'' इत्यादिश्च हरिभक्तिसुधोदये - ''शुचिषड्भक्ति-

(सा.वि) य आशीर्वदन्तो ददत्यत्र किञ्चित्। पर्यन्तलोकास्त्विह ते भवन्ति। अनाशिषस्तु विजयायानन्ताय'' इति ।श्रुतिः, आशीर्वदन्तः, पुरुपार्थाभिलाषिणः - ये ददति - कैङ्कर्यमिति भावः। ते पर्यन्तलोकाः - अन्तवल्लोका भवन्ति। अनाशिषस्तु,फलाभिलाष विरहिणस्तु, अनन्ताय विजयाय - निरवधिकैङ्कर्याय भवन्तीत्यर्थः ஒக்கும், तुल्यम् - देवतान्तर संबन्धरहिता एकान्तिनः। प्रयोजनान्तरदेवतान्तरसंबन्धरहिताः परमैकान्तिनः।तत्रापि मोक्षमपि कैङ्कर्यस्य प्रयोजनत्वेनाकामयमानाः स्वयं प्रयोजनकैङ्कर्यकारिण उत्कृष्टा इति भावः। இம்மாற்றறியும் महर्षिகள் -

(सा.सं) ''नास्त्यकृतः कृत्येन''इत्यादिकमभिप्रेत्य श्रुत्यर्थத்தை इत्युक्तम् फलाभिसन्ध्याकृतं हि श्रुतौ कृतेनेत्युच्यते - फलं वृद्धिस्थानीयम् - पारमैकान्त्यादि नाशो मौल्यनाशस्थानीयः -।

**मू** - இவன் **प्रभाव**த்தைப்பற்ற **''नारायणैकनिष्ठस्य या या वृत्तिस्तदर्चनम् । यो यो जल्पस्स स जपस्तद्ध्यानं यन्निरीक्षणम् । तत्पादाम्ब्वतुलं तीर्थं तदुच्छिष्टं सुपावनम् । तदुक्तिमात्रंमन्त्राग्र्यं तत्स्पृष्टमखिलं शुचि''** என்கிற **श्लोक**ங்கள் **प्रमाण**மேயாகிலும் இங்கு **''या या वृत्तिस्तदर्चनम्''** என்றது -

(सा.दी) अर्थங்களை शिक्षिக்கவேண்டி वचनத்தைக் காட்டுகிறார். இவன் प्रभावத்தைப் பற்றவென்று प्रमाणமேயாகிலுமென்றத்தால் आपातप्रतीतार्थमर्थமன்றென்று सूचितम् । இங்கு ''या या वृत्तिस्तदर्चनम्'' என்றும் ''या या चेष्टा तदर्चनम्'' என்றும் हारद्वयமுண்டு - அதில் या या वृत्तिस्तदर्चन மென்றதுக்கு अर्थமருளிச்செய்கிறார். या या वृत्तिस्तदर्चन மென்றதென்று - मन्निमित्तकृतं पाप மென்றதுக்கு यावत्स्वनन्तरा -

(सा.स्वा) அது पारमैकान्त्यवैषम्य மன்றிக்கே கூடாமையாலே अर्थसिद्ध மென்று கருத்து. இப்படி भागवतருக்கு जातिव्यवस्थैயும் शास्त्रीय वृत्तव्यवस्थैயும் சொன்னது கூடுமோ? ''नारायणैकनिष्ठस्य या या वृत्तिस्तदर्चनम्''इत्यादिना भागवतனுடைய निषिद्धवृत्त्यनुष्ठानमर्चनமென்றும் निषिद्धवीक्षणं ध्यानமென்றும் तत्पादस्पृष्टा शुद्धजलமும் पावनமென்றுமிப்படி பல प्रकारமாக शास्त्रத்தை अतिक्रमिத்துச் சொல்லவில்லையோ? இங்கு वृत्तिध्यानादिपदं विहितवृत्तिध्यानादिपरமென்னிலப் போது नारायणैकनिष्ठस्य என்று विशेषनिर्देशं व्यर्थமன்றோ? भागवतனுக்கு आधिक्यं தோற்றாமையாலே श्लोकवैय्यर्थ्यं प्रसङ्गिயாதோ? என்ன नारायणैकनिष्ठस्य என்கிற वचनத்தையெடுத்து अर्थव्यवस्थैயருளிச் செய்கிறார். இவன் प्रभावத்தைப்பற்ற इत्यादिना - प्रमाणமேயாகிலும் इति- वस्तुत: यामुनाचार्यादिभिरनुदाहृतत्वात्प्रमाणत्वेन संप्रतिपन्नமன்றென்று கருத்து - अत एव श्रीमत्तात्पर्यचन्द्रिकायां ''यातयामं गतरसं'' इति श्लोकव्याख्याने यत्तु कैश्चित्पर्यत इत्युक्तम् । नतु संप्रतिपन्नत्व द्योतक ऋष्यादि नामग्रहणं कृतम् । तदर्चन மென்று इति । सा सा என்று पदத்தை अध्याहरिத்து सा सा वृत्तिस्तदर्चनं - तस्य नारायण -

(सा.प्र) दीप्ताग्निदग्धदुर्जातिकिल्बिष: । श्वपचोऽपि बुधै: श्लाघ्या न वेदाढ्योऽपि नास्तिक:'' इत्यादि: - स्कान्दे ''येषां चक्राङ्कितं गात्रं शूद्रेष्वपि च दृश्यते । ते वै स्वर्गस्य नेतारो ब्राह्मणा भुवि देवता:'' इत्यादि: । भृगुसंहितायाम् । ''न शूद्रा भगवद्भक्तास्ते हि विप्रा इति स्मृता:'' इत्यादि: भागवतोत्कर्षबोधको द्रष्टव्य: - एषु प्रबन्धेषु परमैकान्त्युत्कर्षबोधकवचनबाहुल्यात्तत्तद्वचनानामुपादाने ग्रन्थगौरवं स्यादिति । प्रबन्धानामेवोपादानम् । - अथ भगवदाराधनभूत यावत्स्वव्यापारवत्वादि प्रभाव सङ्ग्राहकवचनोपादानपूर्वकं तत्र प्रतीतक्रमेण तेषां व्यवस्थां वक्तुं ''या या वृत्तिस्तदर्चनम्'' इत्यस्यार्थमाह । இவன் प्रभावத்தை इत्यादिना । शास्त्रानुमतार्थार्जनरूप सर्वव्यापार एव -

(सा.वि) एतन्मर्यादावेदिनो महर्षय: - एवं जातिं व्यवस्थाप्य नारायणैकनिष्ठस्येति वचनस्य वृत्तव्यवस्थार्थं पठितक्रमेणार्थमाह । இவற்றின் प्रभावத்தைப்பற்ற इति । प्रमाणமேயாகிலும், आप्तवाक्यत्वेऽपि आपातप्रतिपन्नार्थेन प्रमाणं न भवतीति भाव: -

**मू - शास्त्र (निषिद्धवृत्ति**யை**) विरुद्धवृत्ति**யைச் சொன்னபடியன்று **देशकालादि वैगुण्य**த்தாலே **''आपत्स्वनन्तरावृत्तिः''** என்கிற நிலையிலே நின்றாலுமது **समाराधनो पयुक्त**மான **सम्यगुपादान**மா மென்றபடி. **'मन्निमित्तकृतं पापमपि धर्माय कल्पते''** என்றதுக்குமிதுவே **तात्पर्य**ம். இங்ஙனல்லாத போது **अतिप्रसङ्गः** வரும் **''या या चेष्टा''** என்று **पाठ**மானாலும் **अर्थप्राप्तशास्त्रप्राप्त**ங்கள்போலே **स्वभावप्राप्त**ங்களான **निमेषोन्मेषादि**களும் **समर्पणीय**ங்களாக -

(सा.दी) वृत्तिயிலே तात्पर्यமென்கிறார் - **मन्निमित्त**மென்று - இங்ஙனல்லாதபோது अतिप्रसङ्ग वருமென்கிறார் - இங்ஙனல்லாதபோது **इत्यादि - अर्थप्राप्तेत्यादि-अर्थप्राप्त**ங்கள், **देहधारणार्थ**ங்கள் **- शास्त्रप्राप्त**ங்கள், **सदाचाररूप**ங்கள் **- स्वभावप्राप्त**ங்களாவன? **निमेषोन्येषादि**கள் **- निषिद्ध**ங்கள், **पापरूप**ங்கள் -

(सा.स्वा) **स्यार्चन**மென்று **अन्वयि**ப்பது **- निषिद्धवृत्ति**யை **इति । चौर्यादिवृत्ति**யையென்றபடி. இப்படி **वृत्तिशब्दमापत्कालिक गौणवृत्तिपर**மானாலும் அத்தை **अर्चन**மென்று **निर्देशि**க்கக்கூடுமோ? **भगवद्विषय**த்தில் **सांस्पर्शिकादि भोगार्पण मनो अर्चनम्?** என்னவருளிச்செய்கிறார். **समाराधनेति - अर्चनपदं लक्षणया इज्योपयुक्तोपादानपर**மென்றபடி - **अभागवत**னுக்கிது **अर्चन**மன்றென்று கருத்து - **''मन्निमित्तमित्तं कृतं पापमपि धर्माय कल्पते'' इत्यादौ पाप**மே **धर्म**மாகிறாப்போலே **भागवतकृत-निषिद्धवृत्ति**யும் **अर्चन**மென்று **निर्देष्टं शक्य**மாகையால் **स्वरसार्थत्यागं** கூடுமோ? என்னவருளிச் செய்கிறார். **मन्निमिति** - இரண்டிடத்திலும் **मुख्यार्थं बाधित**மாகையால் **गौणार्थं स्वीकार्य**மென்று கருத்து. **एवमनङ्गीकारे बाधक**மருளிச்செய்கிறார் - இங்ஙனல்லாத **इति - आतिप्रसङ्गमिति - भगवद्भागवतद्रव्यापहार**மும் **कर्तव्य**மாக **प्रसङ्गि**க்குமென்றபடி **- या या चेष्टा** என்கிற **पाठान्तर**த்தில் **निषिद्धक्रियै**யும் **अर्चन**மாகத் தோற்றவில்லையோ? என்ன அந்த **पाठ**த்திலும் **अर्थ**மருளிச் செய்கிறார். **- या या चेष्टेति अर्थप्राप्तेति - शरीरधारणार्थव्यापार**மென்றபடி - **इतु इतराधिकारि**களுக்கும் **धर्मोपयुक्त**மாகையாலே **अर्चन**மென்று சொல்லலாமென்று கருத்தாலே **दृष्टान्त**மாக எடுத்தது - **इतराधिकारि**களுக்கு **स्वभावप्राप्तनिमेषादिव्यापारं समर्पणीय**மாகச் **चोदित**மல்லாமையாலே **अर्चन**மன்று. **भागवत**னுக்கானால் -

(सा.प्र) भगवदाराधनतया तत्र प्रतिपाद्यत इत्यर्थः - आपदनुष्ठेयानाम-नापद्यनुष्ठाने तेषां पापत्वमेवेति भावः। ननु भगवदर्थानुष्ठित पापानामपि धर्मत्वावगमाद्भागवतानां निषिद्धानुष्ठानमपि भगवदाराधनमेव स्यादित्यत्राह - मन्निमित्तमित्यादि - स्वोक्तानङ्गीकारे बाधकमाह। இங்ஙனல்லாத इत्यादिना - भवान्तरीयदुष्कर्मवशाद्रागप्राप्तनिषिद्धानुष्ठानस्यापि कैङ्कर्यत्वे तस्यैवानुष्ठानं स्यादिति भावः - पाठान्तरेऽप्येवमेवार्थ इत्याह या-या चेष्टेत्यादि - अर्थप्राप्तेति। भागवतस्सर्वतोदिशयारोपितदीपानां तैलदानार्थव्यापारेऽर्थात्प्राप्तप्रदक्षिण -

(सा.वि) अर्थप्राप्तशास्त्रप्राप्तங்கள் போலே, भगवन्मन्दिरे प्रदक्षिणस्थापितदीपमालिकायां तैलदानार्थगतौ प्रदक्षिणसिद्धिवत् । देहयात्राप्यर्थ प्राप्तगतिर्वा -

**मू** - **रहस्यशास्त्रसिद्ध**மாகையாலே **तदर्चन**மென்னலாம். இது **निषिद्ध**த்தில் **प्रसङ्गि**யாது. **प्रतिषिद्ध**மல்லாத **स्वभावार्थ शास्त्रप्राप्त**ங்களிறே **समर्पणीय**ங்களாக ஓதப்பட்டது. இதின் **उपब्रंहण**மான **''यत्करोषि यदश्नासि''** என்கிற **श्लोक**த்துக்கும் இப்படி **शास्त्रविरोध**மில்லாத **विषय**த்திலே **तात्पर्य**ம் -

(सा.दी) रहस्यशास्त्रங்களில் अर्थप्राप्तशास्त्रप्राप्तங்களுக்குப்போல் स्वभावप्राप्तचेष्टैகளுக்கும் समर्पणीयत्वं சொல்லுகையாலிங்கில் चेष्टा शब्दं அவற்றில் पर्यवसिக்குமாகையால் निषिद्धव्यतिरिक्तங்களே या या चेष्टा என்று சொல்லப்படுமென்கிறார் - இது निषिद्धத்தில் इति ''यत्करोषि यदश्नासि'' என்றதுக்குமிதுவே तात्पर्यமென்கிறார் - இதின் उपबृंहणமான इत्यादि निषिद्धமும் अर्चनैயாகில் ''प्रायश्चित्तं -

(सा.स्वा) समर्पणीयतयार्चनமென்று भागवतासाधारणप्रभाव परत्वं கண்டு கொள்வது - रहस्येति - रहस्यशास्त्रं, रहस्यार्थप्रतिपादक भगवच्छास्त्रादिकम्। அங்கு ''कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेस्स्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि'' என்று स्वभावार्थशास्त्र प्राप्तव्यापारसमर्पणं विहितமென்றபடி. भागवतனுடைய स्वभावप्राप्तचेष्टै अर्चनமென்றது கூடுமோ? स्वभावप्राप्तनिषिद्धचेष्टैயும் अर्चनமாக प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார். इது इति - இது, अर्चनत्वं - இதுக்கு नियामकமேதென்னவருளிச் செய்கிறார். प्रतिषिद्धमिति - ஓதப்படுகிறது इति - ''तस्यैवं विदुष:'' इत्यनुवाकத்தில் ''यदश्नाति यत्पिबति तदस्य सोमपानम्'' इत्यादिना स्वभावार्थशास्त्र प्राप्तानामाराधनविशेषत्वश्रुते: என்றபடி - छान्दोग्यத்திலே तत्समानप्रकरणத்தில் पुरुषविद्यैயில் स्वभावप्राप्तव्यापारங்களை यज्ञावयवங்களாகச் சொல்லி ''तद्दैतदाङ्गिरस: कृष्णाय देवकीपुत्रायोक्त्वा पिपास एव सम्बभूवेति - प्रतिषिद्धवर्जं स्वभावार्थ शास्त्र प्राप्त व्यापाराणां भगवति समर्पणस्य मोक्षपर्यवसायित्वमप्युक्तமாகையாலே प्रतिषिद्धव्यापारं समर्पणीयமல்லாமையாலே चेष्टाशब्दं तत्परமன்று - कि न्तु भागवतனுடைய विहिता प्रतिषिद्ध स्वभावार्थ शास्त्रप्राप्तचेष्टै समर्पणीयतया चेतितैயாகையால் अर्चनமென்று கருத்து - ''यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्'' इत्याद्युपब्रह्मणத்திலே सामान्यत: निषिद्धकरणமும் अभक्ष्यभक्षणமும் समर्पणीयமாகத் தோற்றுகையாலேயதுவும் अर्चनமாக प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். இதின் उपबृंहणமான इति - இப்படி इति - श्रुति சொன்ன प्रकारமாகவென்றபடி - இப்படி भागवतனுடைய -

(सा.प्र) रूपतादिरित्यर्थ:। रहस्यशास्त्रेति। ''कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात्। करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत्'' इत्यादि श्रीपाञ्चरात्रशास्त्रप्राप्तमित्यर्थ: ஓதப்பட்டது. ''यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यामि भगवन् तत्करोमि त्वदर्पणम्'' इत्यादि मन्त्रेष्वधीतमित्यर्थ: -

(सा.वि) रहस्यशास्त्रसिद्धமாகையாலே ''या चेष्टा मम नित्यश: - केशवाराधने वा स्यात् । कायेन वाचा इत्यादि पाञ्चरात्रसिद्धतया - निषिद्धத்தில் प्रसङ्गि யாது, निषिद्धत्वचेष्टा न भवतीत्यर्थ। ஓதப்பட்டது, यत्करोमि -

(सा.सं) ஓதப்பட்டது इत्युक्ति: - ''यान्यनवद्यानि कर्माणि तानि सेवितव्यानि'' इत्यादि -

**मू** - இவற்றில் **शास्त्रविरुद्धங்கள்** வந்தால் **अधिकारानुरूप**மான **नैमित्तिकं निग्रहशमन (म् कार्यम्)**மான **कैङ्कर्यम्** - **''यो यो जल्पः स जपः''** என்கிறதுவும் **''पारुष्यमतिवादश्च पैशुन्यं चैव सर्वशः अनिबद्ध प्रलापश्च वाङ्मयं स्याच्चतुर्विधम्''** என்று **शास्त्रप्रतिषिद्ध**மான **वृथा जल्प**த்தைச் சொன்னபடியன்று. **तत्त्वहितविषय**மாக **शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोऽर्थि**களோடே **अज्ञातज्ञापनार्थ**மாகவும், **ज्ञातस्थिरीकरणार्थ**மாகவும், **संशयनिराकरणार्थ**மாகவும், (பண்ணும்) **उक्तिप्रत्युक्तिपरंपरै**களைச் சொல்லுகிறது -

(सा.दी) समाचरेत् ''इत्यादिகளோடு विरोधिக்குமென்னும் अभिप्रायத்தாலருளிச் செய்கிறார். இவற்றில் शास्त्रेत्यादि - यो यो जल्प इत्यादि - जल्पशब्दं तत्त्वज्ञानार्थवादத்தை उक्तिप्रत्युक्तित्वसाधर्म्यात् लक्षिக்கிறதென்று अर्थம் - शिष्येति - ''तं शिष्यगुरु स ब्रह्मचारिशिष्टश्रेयोऽर्थिभिरभ्युपेयात्'' என்று वादविषयமான न्यायमात्रं प्रत्यभिज्ञापितम् । विजिगीषु कथारूपमुख्यार्थத்தை -

(सा.स्वा) निषिद्धचेष्टादिகள் अर्चनமென்று சொன்னது கூடுமோ? அப்போது निषिद्धं प्रसक्तமாகில் तन्निवृत्यर्थं प्रायश्चित्तं பண்ணவேண்டுகையால் प्रयोजनान्तरप्रसङ्गத்தாலே षोडशवर्णसुवर्णसदृशपरमैकान्तिக்கு மாற்றின் न्यूनतै வாராதோ? என்னவருளிச் செய்கிறார். இவற்றில் इति । निग्रहेति - बन्धकफलार्थமான कैङ्कर्यं बाधकமானாலும் निग्रहशमनமான कैङ्कर्यं स्वरूपोचितமாகையாலே अपकर्षापादकமன்றென்று கருத்து. இனி ''यो यो जल्पः'' என்கிறவிடத்தில் जल्पशब्दம் विजिकीषु कथापरமாகில் बोधितार्थम् - परमैकान्तिக்கு विजिगीषु कथैயில்லையே? उक्तिमात्रपरமாகில் निषिद्धप्रलापமும் जपமாக प्रसङ्गिக்கும் - जल्पशब्दा स्वारस्यமும் प्रसङ्गिக்கும். ஆகையால் यो यो जल्पः என்கிறது கூடுமோ? என்னவருளிச் செய்கிறார். यो यो जल्प इति - पारुष्यं, क्रूरभाषणम् - अतिवादः , वस्तुस्वभावाननुगुणोत्कर्षवादः - पैशुन्यं, परपीडार्थमन्य कर्णे श्रावणम् - अनिबद्ध प्रलापः , असङ्गतभाषणम् - तत्त्वेति। पारुष्यादिகள் वाङ्मयपापங்களாகையாலே जपः என்று स्तुतिக்கக்கூடாமையாலும் विजिगीषुकथारूपमुख्यार्थं बाधितமாகையாலும் अन्यथानुपपत्त्या उक्तिप्रत्युक्तिरूपत्वसादृश्येन गौण्यावृत्या शिष्यगुर्वाद्युक्तिप्रत्युक्तिपरமென்று கருத்து -

(सा.प्र) ननु ''वादेन ब्राह्मणं जित्वा स्पृष्टो भवति यो द्विजः । श्मशाने पादपस्सस्याद् गृध्रकं कनिषेवित'' इति जल्पस्य निषिद्धत्वात्कथं जल्पस्य मन्त्रजपरूपत्वमित्यत्र जल्पशब्दस्यार्थमाह - यो यो जल्प इत्यादिना। जल्पशब्दस्य कृत्स्नव्यापारपरत्वेऽपि पारुष्यमित्यादिना कतिपय वाग्व्यापाराणां निषिद्धत्वाल्लोके सामान्यशब्दानां विशेषकटाक्षेण प्रयोगदर्शनाच्च तत्त्वविषयोक्ति -

(सा.वि) यदश्नामीति मन्त्रे अधीतम्। निषिद्धानुष्ठानमपि आराधनं चेत् ''प्रायश्चित्तं समाचरेत्'' इत्यनेन विरोधस्स्यादित्यभिप्रेत्याह- இவற்றில் इति - नैमित्तिकं प्रायश्चित्तमित्यर्थः - निग्रहशमनं, भगवदप्रीतिनिवर्तकम्। जल्पशब्दस्य वाङ्मात्रपरत्वस्वीकारेण व्याख्याय विजिगीषुकथा जल्प इति स्वीकारेण तस्य सामान्यतो निषेधेऽपि धर्मसंस्थापनार्थं विगृह्य कथाया अनुमतत्वात् सोऽपि जल्पो जपप्रायस्सन् -

(सा.सं) श्रुत्यभिप्रायः - पिशुनः कुटुम्बच्छेदकवाक्यवृत्तिकः । तस्य वाग्व्यापारः पैशुन्यम् - अतिवादो वस्त्वननुगुणवादः । अनिबद्धप्रलापः असङ्गतिप्रलापः। गुरुशिष्ययोरुक्तिप्रत्युक्ति -

**मू - ''न विगृह्य कथां कुर्यात्''** என்று **सामान्येन** சொல்லச்செய்தேயும் **''यथाशक्ति निगृह्णीयाद्देवता गुरुनिन्दकान्''** என்று **विशेषित्**து **धर्मशास्त्रसिद्ध**மாகையாலே **बाह्यकुदृष्टि**களைப் பற்ற **विजिगीषु**வாகச் சொல்லும் **वाक्यपरम्परै**யை **जल्प**மென்றதாகவுமாம் - **''तद्ध्यानं यन्निरीक्षणम्''** என்றது **निषिद्धनृत्यादि दर्शन**த்தைச் சொன்னபடியன்று. **कैङ्कर्यार्थ**மாக **प्रवर्ति**க்கும்போது இவன் கண்ணுக்கிலக்கான **पदार्थ**ங்களெல்லாம் **''अहं हरिस्सर्वमिदं जनार्दनः''** **इत्यादि**களிற்படியே ''நிற்கின்றதெல்லாம் நெடுமால்'' என்று **ब्रह्मात्मक**மாய்த் தோன்றும் **प्रकार**த்தைச் சொன்னபடி **''तत्पादाम्बुतुलं तीर्थम्''** என்றதுவும் **प्राप्तविषय**த்திலே **गुणाधिक्यं** சொல்லுகிறது - **पादोदकं तीर्थ**மாகச் சொன்ன **विषय**த்தில் **नारायणैकनिष्ठत्वं** உண்டாயிற்றாகில் அது **सर्वाधिकतीर्थ**மென்றபடி. அல்லாது **भागवत**னுடைய **पाद**த்திலே **यादृच्छिक**மாகப்பட்ட **निर्माल्यजलादि**களும் **अतुल**மான **तीर्थ**மென்றபடியன்று. -

(सा.दी) अङ्गीकरित्தருளிச்செய்கிறார். न विगृह्येत्त्यादियால் तद्ध्यानमित्यादि - இங்கு निषिद्धமென்றது हेतुगर्भம். நிற்கின்றதெல்லாம் इति - நிற்கிற पदार्थமெல்லாம் - நெடுமால், सर्वेश्वरன். सर्वेश्वरात्मकமென்றெண்ணாதார் - கடை. अतिहेयम् - प्राप्तविषयத்தில். विहित -

(सा.स्वा) मुख्यार्थपरமாயும் योजनान्तरமருளிச்செய்கிறார். न विगृह्येति-सामान्यनिषेधं विशिष्य विहितवृत्तिरिक्तविषयமென்று கருத்து. तद्ध्यानं यन्निरीक्षणமென்கிறத்தை विवरिக்கிறார் - तद्ध्यानमिति। तत्पादाम्बुतुलं तीर्थமென்கிறத்துக்கு अर्थமருளிச்செய்கிறார் - तत्पादाम्बिति - प्राप्तेति - विशिष्टविध्यपेक्षमाप्राप्तानुवादेन किञ्चिद्गुणविधानं न्याय्यமென்றபடி. இத்தை विवरिக்கிறார். पादोदकमिति। ''ब्राह्मणाः पादतो मेध्याः'' என்று ब्राह्मणपादोदकं तीर्थतया प्राप्तமென்றபடி - व्यवच्छेद्यार्थத்தைக்காட்டுகிறார். அல்லது इति तदुच्छिष्टं सुपावनமென்கிறதுக்கும் -

(सा.प्र) प्रत्युक्तिरूपविशेषपरत्वमेव युक्तमित्यर्थः - अथवा जल्पशब्दस्य विजिगीषु कथापरत्वेऽपि न दोष इत्याह - न विगृह्येत्यादिना - நிற்கின்றதெல்லாம் நெடுமாலென்று, चक्षुर्विषयेऽवस्थितं सर्वं सर्वेश्वर इति - पादोदकं तीर्थமாக इत्यादि - ''यो मूर्ध्नि धारयेद्ब्रह्मन्महत्पादतलोदकम्। स स्नातस्सर्वतीर्थेषु पुण्यवान्नात्र संशयः'' इत्यादिभिः पावनत्वेनोक्तस्य पादोदकस्य ''प्रायश्चित्तमिदं पुण्यं महापातकिनामपि। वैष्णवाङ्घ्रिजलं शुभ्रं भक्त्या संप्राश्यते यदि ''इत्याद्युक्तवैष्णवसंबन्धो लभ्यते चेत् सर्वाधिकमित्यर्थः।। ननु ''उच्छिष्टमपि -

(सा.वि) भगवत्समाराधनं भवतीत्याह - न विगृह्येति - கண்ணுக்கிலக்கான, नेत्र लक्ष्यभूताः - நிற்கின்றதெல்லாம், स्थितं सर्वं-நெடுமால், भगवान् । भगवदात्मकम् - प्राप्तविषयத்திலே, ''यो मूर्ध्नि धारयेद् ब्रह्मन् महत्पादतलोदकम् । स स्नातस्सर्वतीर्थेषु पुण्यवान्नात्र संशयः'' इति सामान्यतः पावनत्वेनोक्तस्य पादोदकस्य ''प्रायश्चित्तमिदं पुण्यं महापातकिनामपि। वैष्णवाङ्घ्रिजलं शुद्धं भक्त्या संप्राश्यते यदि'' इति वैष्णवसंबन्धित्वेऽप्यत्यन्तपावनत्वमिति भावः அல்லது इति-

(सा.सं) परम्परायामपि जल्पशब्दा स्वारस्यादाह - न विगृह्येत्यादिना - प्राप्तविषयத்தில் इत्युक्तमेव विवृणोति - पादोदकमिति -

**मू - ''तदुच्छिष्टं सुपावनम्''** என்றதுவும் **पुनरुपनयनादि प्रकरण**ங்களிலே **पावन**மாக **शास्त्रप्राप्त**மான **उच्छिष्टविशेष**த்துக்கு இக்**गुणविशेष**மடியாக **पावनत्वातिशयं** சொன்னபடி. மற்றும் **शिष्यपुत्रादि**களுக்கு **नारायणैकनिष्ठत्व**முண்டானால் **आचार्यादि**களுக்கு அவர்களுடைய **उच्छिष्टं -**

(सा.दी) विषयத்தில் तदुच्छिष्टமென்றதின் अर्थமருளிச்செய்கிறார் - तदुच्छिष्टमित्यादिயால். विहितस्थलத்தில் नारायणैकनिष्टனுடைய उच्छिष्ठமாகில் सुपावनமென்றபடி. अविहितस्थलத்திலும் சொன்னபடியன்று:-

(सा.स्वा) प्राप्तविषयத்திலே गुणाधिक्यविधिपरत्वं காட்டுகிறார். तदुच्छिष्टमिति। पुनरुपनयनेति। ''पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यं इत्यादौ என்றபடி - आदिशब्देननित्यभोजनप्रायश्चित्तप्रकरणं गृह्यते - उच्छिष्टத்துக்கென்று निर्देशिயாதே उच्छिष्टविशेषத்துக்கென்று अधिकोपादानं ब्रह्मचारिण: पुत्रादे: पित्राद्युच्छिष्टभोजनप्रसक्तौ उच्छिष्ट मध्वादिकं न भोक्तव्यமென்று सूचिப்பிக்கைக்காக - व्यवच्छेद्यार्थத்தைக் காட்டுகிறார். शिष्येति। आदिशब्देन शरीरात्मसंबन्धरहितानां ग्रहणम् - आचार्येति - आदिशब्देनानाचार्यग्रहणम् - இங்கு ஒரு भागवतोच्छिष्टम् अन्यभागवतனுக்கு पावनமென்றபடியன்று என்று निर्देशिயாதே शिष्यपुत्राचार्यादिग्रहणम् अत्यन्तानौचित्ये -

(सा.प्र) चामेध्यं भोजनं तामसप्रियम्'' इत्यादिभि: ज्ञानसङ्कोचकरतयोक्तस्योच्छिष्टस्य कथं सुपावनत्वमित्यत्र उच्छिष्टशब्दस्यार्थमाह - तदुच्छिष्टमित्यादिना - पुनरूपनयनादिति - ''अथात: पुनरुपनयनम्'' इत्यारभ्य ''व्याहृत्तिश्च हुत्वा पुनरुपनयनं करोति। अथवा सावित्रीमष्टशतमावर्त्याभिमृश्य तथैव घृतं प्राश्नीयात् - गुरोरुच्छिष्टं वा -- तत: पूतो भवति'' इति वैखानस बोधायनी या खण्डा दर्शादौ पुनरुपनयनापरकल्पतयोक्तगुरूच्छिष्टभोजने नारायणैकनिष्ठ संबन्धित्वे पावनत्वातिशय उच्यत इत्यर्थ: । ननु साक्षात्कृतसकलप्रमाणैर्भक्ताङ्घ्रिरेणुरित्याख्यातैर्दिव्यसूरिभिर्वैष्णवोच्छिष्टभोजनमात्रस्य सर्वान् प्रत्यप्यति पावनत्वोक्तेर्वैष्णवोच्छिष्टभोजनस्य प्रायश्चित्तविशेषविषयत्वमेवेति कथं नियम्यत इत्यत्र सांप्रदायिकं नियामकमपि दर्शयन् सूरिवाक्यस्य ''योऽसौ मन्त्रवरं प्रादात्संसारोच्छेदसाधनं प्रतीच्छेद्गुरुपर्यस्यतस्योच्छिष्टं सुपावनम् । गुरोस्स्वस्य यदुच्छिष्टं भोज्यं तत्पुत्र -

(सा.वि) पादस्पृष्टरध्यसलीलादिरादिशब्दार्थ: ।पुनरुपनयनादीति।''अथात: पुनरुपनयनम्'' इत्यारभ्य ''व्याहृतीर्हुत्वा पुनरुपनयनं करोति ।अथवा सावित्रीमष्टशतमावर्त्याभिमृश्य घृतं प्राश्नीयात् - गुरोरुच्छिष्टं वा भुञ्जीत - तत: पूतो भवति'' इति वैखानसबोधायनीयाखण्डादर्शादौ पुनरुपनयनापरकल्पतयोक्त गुरूच्छिष्टभोजने नारायणैकनिष्ठसंबन्धित्वे पावनत्वातिशय उच्यत इत्यर्थ: । ननु साक्षात्कृतसकल प्रमाणैर्भक्ताङ्घ्रिरेणुनामकदिव्य सूरिभिर्वैष्णवोच्छिष्ट भोजनमात्रस्य सर्वान्प्रत्यप्यति पावनत्वोक्ते: वैष्णवोच्छिष्टभोजनवचनस्य कथं प्रायाश्चित्तरूप गुरूच्छिष्टभोजनविषयत्वमुच्यत इत्यत्र गुरूच्छिष्टभक्षण विषयत्वस्य सांप्रदायिकत्वं दर्शयन् दिव्यसूरिवाक्यस्य ''योऽसौ मन्त्रवरं प्रादात्संसारोच्छित्तिसाधनम् । प्रतीच्छेद्गुरुरप्यस्य तस्योच्छिष्टं सुपावनम् । गुरोस्स्वस्य यदुच्छिष्टभोज्यं तत्पुत्रशिष्ययो:'' -

**मू - सुपावन**மென்றபடியன்று - **''निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि। मासं प्रयो व्रतो भूत्वा जपन्नष्टाक्षरं सदा। ब्रह्मकूर्चं ततः पीत्वा पूतो भवति मानवः''** என்று **भगवद्धर्मनिष्ठ**னுக்கு **समयाचारं** சொல்லுகிற **सनत्कुमारसंहितावचन**த்தை **आगमप्रामाण्य**த்திலே ஆளவந்தார் **उदाहरि**த்தருளினார். ஆகையாலே "போனகம் செய்த சேடந்தருவரேல் புனிதமன்றே" என்றதுவும் **गुरुविषय**மாமத்தனை.

(सा.दी) अविहितस्थलोच्छिष्टभक्षणத்தில் प्रायश्चित्तத்தாலே शुद्धिயென்னுமிடத்துக்குப் प्रमाणं காட்டுகிறார் - निर्माल्यमित्यादिயால் - देवतान्तरத்துக்கிட்ட पत्रपुष्पादिनिर्माल्यम् - ஆளவந்தார் என்று எடுத்தது அவருக்குமிது अनभिमतமென்கைக்காக - अगुरोः, आचार्य पितृज्येष्ठभ्रातृव्यतिरिक्तனுடையவென்கை - போனகம், செய்தசேடம், தாங்கள் அமுதுசெய்து மிகுந்த शेषத்தைத் தருவராகில் - அன்றே, அப்போதே. புனிதம், पावनतमम् - போனகம் செய்த சேடம் தருவரேலென்றதுவும் विहितस्थलத்திலே என்கிறார். ஆகையால் इति सामान्य -

(सा.स्वा) न परिहासद्योतनार्थम्- प्राप्तविशिष्टविधिप्रसङ्गात् என்று கருத்து. स्वोक्तार्थத்துக்கு शास्त्रान्तरानुगुण्यமருளிச்செய்கிறார் निर्माल्यमिति - இந்த वचनमभागवतविषयமானாலோ? என்னவருளிச்செய்கிறார். भगवद्धर्मनिष्ठனுக்கு इति- இந்த वचनं प्रामाणिकமோ? என்னவருளிச் செய்கிறார் आगमप्रामाण्यத்திலே इति। இப்படியாகில் ''போனகம் செய்த சேடந்தருவரேல் புனிதமன்றே'' என்கிற பாட்டு विरोधिயாதோ? என்னவருளிச்செய்கிறார் - ஆகையாலே इति - ஆகையாலே, तदुच्छिष्टं सुपावनமென்கிறது विशेषविषयமாகையாலே - यद्वा, தாங்கள் அமுதுசெய்து மிகுந்த शेषத்தைத்தருவராகில் - அன்றே, அப்போதே - புனிதம், पावनतमम् - धातुसाम्याद्या पादकपञ्चगव्यादिकं போலே कालविलंबமன்றிக்கே அப்போதே पावनतमமென்றபடி- भागवतसामान्यविषयगाधैக்கு गुरु विषयत्वं சொல்லில் अस्वारस्यं प्रसङ्गिயாதோ? என்ன सामान्यविषयता मभ्युपेत्यापि गाधाया -

(सा.प्र) शिष्ययोः'' इति भोक्तव्यतयोक्तगुरूच्छिष्टविषयमेवेत्याह। निर्माल्यमित्यादिना - ननु सामान्येन भगवन्नामकीर्तनपरा भागवताहीनकृत्यापि स्वभुक्तशेषं प्रयच्छन्ति चेत्तदत्यन्तपरिपूतमिति भक्ताङ्घ्रिरेणु सूर्युक्तत्वात् ''उच्छिष्टमगुरोः'' इत्यस्यैवान्यथार्थो वर्णनीय इति कथं गुरूच्छिष्टस्यैव भोज्यत्वं तत्रापि विवक्षितमित्युच्यत इत्यत्र -

(सा.वि) इति भोक्तव्यतयोक्त गुरूच्छिष्टविषयत्वमेवेत्याह - निर्माल्यमित्यादिना। अगुरोरिति ''एतत्पितुर्ज्येष्ठस्य भ्रातुरुच्छिष्टं भोक्तव्यम्'' इति सूत्रोक्तस्याप्युपलक्षणम्। गुर्वादिव्यतिरिक्तस्येत्यर्थः - போனகம் செய்த சேடந்தருவரேல் புனிதமன்றே - போனகம் செய்த சேடம், भुक्त शेषम् - தருவரேல், भागवता ददति चेत्। அன்றே, सद्य एव। புனிதம், पूता भवायः - ननु सामान्येन भागवतानामकीर्तन -

(सा.सं) ब्रह्मकूर्चं, प्रायश्चित्तरूपं पञ्चगव्यम् - गुरुविषयமாமத்தனை इति - தருவரேல் इत्युक्त्या न दास्यन्तीति भावात् दानाभावस्य भाण्डशेषे प्रसङ्गाभावाद्भुक्तशिष्टविषयैव सा गाधेति ''सवैश्श्रेष्ठ तयो गुरुः'' इत्युक्तभरसमर्पणकृद्गुरुपरेति भावः सामान्यतः प्राप्ता सा -

**मू** - பொதுவானாலும் **भगवत्सङ्कीर्तनपर**ர் **देशकालादिवैगुण्य**த்தாலே **ऊनवृत्ति**களுமாய் **ऊनकारक**ர்களுமாயிருந்தார்களேயாகிலும் தாங்கள் அமுதுசெய்த சேடந்தருவாராகில் புனிதமாமென்றதாமத்தனை. இதில் **शेषशब्दं ''अन्नशेषः किं क्रियतामिष्टैस्सह भुज्यताम्'' इत्यादि**களில் **न्याय**த்தாலே **भाण्डस्थविषय**மானால் **विरोध**மில்லை -

(सा.दी) विषयமானாலும் निर्वाहं காட்டுகிறார் - பொதுவானாலுமென்று - இப்பக்ஷத்தில் शेषशब्दं भाण्डस्थशेषपरமாகில் शास्त्रविरोधமில்லையென்றகிறார் - இதில் शेषेत्यादि । तदुच्छिष्टं सुपावनமென்று वचनத்துக்கும் अन्यविषयत्वं निर्वहिக்கைக்காக श्रुत्यादिகளில் उच्छिष्टशब्दं पात्रशेषத்திலும் प्रयुक्त -

(सा.स्वा) योजनान्तरமருளிச் செய்கிறார். பொதுவானாலும் इति - ऊनवृत्तिகள், ஆபத்திலே कृष्यादिகள் பண்ணுகிறவர்கள் ऊनकारकர், இந்த ऊनवृत्तिகளைப் परர்களுக்கும் बोधिத்துப் பண்ணுவிக்கிறவர்கள் - ''दिव्यैरवेद्यविभवेति यदि ब्रुवन्ति माध्वीमनोज्ञ तुलसीकयदीति चाहुः । ऊनक्रिया अपि परानपि कारयन्तो भुक्ताधिकं ददति चेन्न तु तत्पवित्रम्'' इत्येतद्गाधार्थकथन श्लोकं श्रीमत्तात्पर्य-चन्द्रिकैயில் उपात्तमनुसन्धेयम् - ஆனாலும் शेषशब्दमुच्छिष्टपरமானால் विरोधं வாராதோ? என்ன வருளிச்செய்கிறார். இதில் इति - இதில், गाधैயில். ஆனாலும், शेषशब्दं भाण्डस्थशेषशब्दத்திலும் प्रयुक्तமானலும் उच्छिष्टशब्दं भाण्डस्थशेषத்தில் प्रयुक्तமல்லாமையாலே ''तदुच्छिष्टं सुपावनम्'' என்கிற वचनத்தில் उच्छिष्ट शब्दं भुक्तोज्झितपरமாகையால் तदुपब्रह्मणமான गाधैயிலும் शेषशब्दमुच्छिष्टपरமாக வேண்டாவோ? என்னவருளிச்செய்கிறார் -

(सा.प्र) शेषशब्दस्य भाण्डस्थशेषविषयतयापि प्रयोगदर्शनात्सूरिवाक्यस्थस्य तस्यान्यथासिद्धि-संभवान्निषेधस्यत्वनन्यथासिद्धत्वाच्चे सूरिवाक्यस्य भाण्डस्थशेषविषयत्वमेवेत्याह - பொதுவானாலும் इत्यादिना - ननु ''उच्छिष्टं सुपावनम्'' इत्यत्र उच्छिष्टशब्ददर्शनात्सामान्यस्यापि शेषशब्दस्योच्छिष्टत्वमेव न्याय्यमित्यत्र उच्छिष्टशब्दस्यापि भुक्तशिष्टपाकपात्रस्थविषयतया प्रयोगदर्शनाच्छेष शब्दस्य भाण्डस्थपरत्वं कैमुतिकन्यायसिद्धमित्यभिप्रायेणाह ।

(सा.वि) परा अपि भुक्तशेषं प्रयच्छन्ति चेदिति तैर्व्याख्यातत्वात्तद्वाक्यस्य गुरूच्छिष्टविषयत्वमयुक्तम् - उच्छिष्टमगुरोरपीत्यस्यैवान्यथार्थो वर्णनीय इत्यत्र भागवतमात्र परत्वेऽपि भाण्डशेषविवक्षायां न विरोध इति सप्रमाणमाह - இதில் शेषशब्दमिति - ननूच्छिष्टं सुपावनमित्युच्छिष्टशब्ददर्शनात्तस्य भाण्डशेष परत्वमनुपपन्नमित्यत्र श्रुतौ ''उच्छेषणेन जुहोति । उच्छेषण भोगो वैरुद्रः - अग्निहोत्रोच्छेषणमभ्यातनक्ति'' इत्यादौ शेषमात्रेप्युच्छिष्टशब्दप्रयोगात् शेषशब्दोच्छिष्टशब्दयोः पाकपात्रस्थभुक्तिपात्रस्थोभयपरत्वस्यापि सत्वात्प्रकृते पाकपाकपात्रस्थशेष परत्वेऽपि -

(सा.सं) व्यवस्थापकविरहेणकथं विशेष परेत्यत्राह - பொதுவானாலும் इति - ऊनवृत्तयः देहधारणार्थमसेव्यसेवान्विताः । ऊनकारकர் तापादिसंस्कारेषु एकद्वित्रिन्यूनाः- தாங்கள், परमैकान्तिनः- विरोधமில்லை इति, निर्माल्यं भक्षयित्वेत्यनेन श्लोकेन तदुच्छिष्टमित्यस्य न विरोध इत्यर्थः -

**मू - किञ्च । ''सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना ।**
**स स तस्याहमेवेति चरमश्लोकसङ्ग्रहः ।।**
**भावाभावौ न धर्माणां प्रपत्तेरङ्गमिष्यते ।**
**स्वतन्त्रशिष्ट्या -**

(सा.दी) காட்டுகிறார் किञ्च सुदुष्करेणेत्यादि - யாதொருவன் யாதொரு யாதொரு सुदुष्करसाधनத்தால் दुःखिக்கிறான் स्वाभिलषितफलविषयத்தில் तत्साधनங்களுடைய दौष्कर्म्यத்தைக்கண்டு शोकिக்கிறானென்றபடி - அவனுக்கு அவ்வோ फलसाधनं நானே. तत्साधनத்திலென்னை शरणं புகுருவானென்கை - भावाभावाविति - यथा धर्माभावो नाङ्गम् என்று दृष्टान्तार्थमभावग्रहणम् - இது नैरपेक्ष्यविधिपक्षத்தில் अर्थम् - कुतः என்னில்? स्वतन्त्रशिष्ट्या, धर्मங்கள் स्वतन्त्रविधिसिद्धங்களாகையாலென்கை -

(सा.स्वा) வேண்டாவோ? किञ्च परित्यज्य என்று कर्मयोगाङ्गकत्वनिवृत्तिपरமாகில் कर्माभावमङ्गமாக प्रसङ्गिயாதோ? என்ன उक्तानुक्तार्थங்களை कारिकया सङ्ग्रहिக்கிறார் -किञ्चेति। अङ्गत्वाभावे शिखा यज्ञोपवीतधारणादेस्तत्काले कथमनुष्ठानमित्यत्राह - स्वतन्त्रेति - शिष्टः, शासनम्। स्वतन्त्र -

(सा.प्र) लघूपायविधिपरतयान्यपरत्वाच्च न नित्यनैमित्तिक त्यागविधिपरत्वमित्याह - किञ्च सुदुष्करेणेत्यादिना - एवं वेदवैदिकेत्यारभ्य इयता प्रबन्धेन प्रतिपादितं त्यागशब्दार्थं सुग्रहत्वाय सङ्कलय्य दर्शयन् अतिप्रपन्नेषु प्रपत्त्यनुष्ठानकाले प्राप्तनित्यनैमित्तिकानां प्रपत्त्यवरोधादेव तस्मिन् कालेऽननुष्ठितानां प्रत्यवायजनकत्वाभाववद् दृष्टे पश्चादननुष्ठितानामपि तेषां प्रत्यवायजनकत्वं नास्तीति तेषां कर्तव्यत्वं नोपपद्यत इति शङ्कां सोदाहरणं परिहरति। भावाभावावित्यादिना। स्वतन्त्रशिष्ट्येत्यादि। स्वतन्त्रस्य भगवतः। शिष्टिः, शासनम्। भगवदाज्ञा - तया - अशक्या ईहा चेष्टा येषाम् - येषां धर्मणामनुष्ठानं न शक्यं तेषामशेषाणाम् -

(सा.वि) तात्पर्यम् - न स्वरूपत्याग इति न नित्यकर्मत्यागप्रसङ्ग इति- पक्षान्तरमाह । किञ्चेति - अत्र पक्षे गीताभाष्यविरोधश्चरमश्लोकाधिकारे परिहरिष्यते - स सः तत्तदिष्टहेतुरहमेवेति चरमश्लोकसंग्रहः, चरमश्लोकतात्पर्यम् - निष्कृष्टमर्थं कारिकया संगृह्णाति - भावाभावाविति - धर्माणां नित्यनैमित्तिकादीनां भावः - अभावो वा? प्रपत्तेरङ्गं नेष्यते - अङ्गत्वेन नेष्यत इत्यर्थः -त्यागाङ्गकविध्यभावादभावो नाङ्गम् - नैरपेक्ष्यविधिवशाद्भावोऽपि साङ्गमिति भावः - तर्हि किमिति नित्यकर्मानुष्ठानमित्यत आह - स्वतन्त्र्य शिष्ट्येति - स्वतन्त्र्यशिष्ट्या -

(सा.सं) मात्रस्थाननिविष्टताप्यस्येह चरमश्लोके विवक्षितेत्याह - किञ्चेति - सुदुष्करेण, अत्यन्तदुष्करेण - तत्तत्फलहेतूनां दौष्कर्यमिवास्य शोकहेतुरिति शोचेदित्युक्तिः - दौर्ष्यद्वारा इष्टहेतूनामेव शोकहेतुत्वाद्धेतुनेति तृतीया - यश्शोचेत् , यो यो निर्विण्णो भवति - तस्य तस्याहमेव तत्तदभीष्टोपाय इति विवक्षितार्थस्सङ्गृह्य चरमश्लोकस्येत्यर्थः - ननु त्यज्य व्रजेति विधानसामर्थ्यात्सर्वधर्मत्यागाङ्गकप्रपत्तिविधिरिति प्रतिभातीत्यत्राह - भावाभावाविति। धर्माणां भावाभावानुष्ठानमननुष्ठानं वा - स्वरूपं स्वरूपत्यागो वेति यावत्। न प्रपत्यङ्गम् - शिष्टिशासनं विधिः, स्वतन्त्रस्य ''अहरहः'' इत्यादि विधिना त्यज्येति -

**मू - शक्येहा शेषाभावोऽधिकारगः। क्रत्वनंगतया ये तु -**

(सा.दी) अशक्येति - अशक्यानुष्ठानस्य कमदिरभावः, प्रपत्तेः पूर्वावस्थैயில் उपायान्तरानन्वयमधिकारकोटியிலே நிற்குமென்கை - प्रपत्तिக்கு अङ्गங்களல்லாவிடிலும் वर्णाश्रमधर्मங்கள் उत्तरकालத்தில் कार्यங்களென்னும் अर्थத்தை सदृष्टान्तமாக संग्रहिக்கிறார் - क्रत्विति। दर्शपूर्णमासादिகள் -

(सा.स्वा) भगवच्छासनेन - शक्येषु ईहा, अनुष्ठानेच्छा। स्वतन्त्राज्ञया शक्यानामनुष्ठानमित्यर्थः - शेषाणामशक्यानामभावो अधिकारगः - अशक्यधर्मत्यागः आकिञ्चन्यानुप्रविष्टः। नत्वङ्गमिति भावः। ननु प्रपत्तिकाले प्रपत्त्यवरुद्धतया अननुष्ठितानां सन्ध्यावन्दनादीनां कथमनुष्ठानमित्याशङ्कायां स्वकाले तत्तद्विधेरेवानुष्ठानमित्यत्रानुरूपं दृष्टान्तமாக - क्रत्विति -

(सा.प्र) धर्माणामभावो भगवतश्शासनादधिकारताङ्गत इत्यर्थः। यद्वा, एवं सति प्रपन्नानां नित्यनैमित्तिकानुष्ठानं न स्यादित्यत्राह - स्वतन्त्रशिष्टेत्यादि - स्वतन्त्रविधिना, ''अहरहस्सन्ध्यामुपासीत'' इत्यादिना भगवच्छासनेन - कर्तु शक्येष्वीहा, अनुष्ठानं स्यादिति शेषः - तद्व्यतिरिक्तस्यत्वशक्यस्य कर्मणोऽभावः अधिकार इत्यर्थः। क्रत्वनङ्गतयेत्यादि - नित्यनैमित्तिकादीनां -

(सा.वि) स्वतन्त्रविधिना, ''अहरहस्सन्ध्यामुपासीत'' इत्यादिरूपेणेत्यर्थः। तर्हि सर्वेषामशक्यानामपि नित्यकर्मणामनुष्ठेयता स्यादित्यत आह - शक्येति - शक्येषु, ईहा इच्छाकार्येति शेषः - शक्तं प्रत्येव शास्त्रं प्रवर्तत इत्याशङ्क्य अननुष्ठानं न प्रत्यवायावहमिति भावः - अशक्याननुष्ठानं न केवलं प्रत्यवायाभावायैव - प्रत्युत ''न धर्मनिष्ठोऽस्मि'' इत्यादि प्रकारेणाशक्योपायान्तर शक्त्यभावस्याकिञ्चन्याधिकारत्वादधिकारं पुरस्कृत्येत्यादि प्रकारेणानुसन्धायोपकरोतीत्यभिप्रायेणाह - शेषाभाव इति- शेषाणामशक्यानामभावः- अधिकारगः,अधिकारापादकः इत्यर्थः - केचित्तु शेषाभावः - अशक्यपरित्यागः, अधिकारगः। अधिकारप्रयुक्तः, अनधिकारत्वात्तत्परित्यागो न शास्त्रविरुद्धः। यथाधिकारमेव शास्त्रप्रवृत्तिरित्याचक्षते - अपरे तु भावोभावो वा नाङ्गम् - किन्तु शक्या ईहा चेष्टा अनुष्ठानं येषां ते शक्ये शास्त्रे च ते अशेषाश्चेति कर्मधारयः - तेषामभावः अधिकारगः - प्रपत्त्यनुष्ठानात्पूर्वं अधिकारताङ्गत इत्यर्थ इत्याहुः। नन्वार्तानां प्रपत्त्यनुष्ठानकाले प्राप्तस्य नित्यकर्मणस्त्यागः। आर्तिविरोधादेव न दोषाय - तद्वद्दृप्तानामुत्तरकाले तत्परित्यागोऽप्यदोषस्यैव किं न स्यादित्यत्र स दृष्टान्तमाह। क्रत्वनङ्गतयेति -

(सा.सं) विधिना च धर्माणां स्वरूपं तत्त्यागश्च नैरपेक्ष्यबलान्न प्रपत्त्यङ्गम्। आज्ञानुपालनादि शास्त्रबलाद्धर्मत्यागो न युक्तः - तर्हि कथमित्यत्राह। शक्येहेति - स्वतन्त्रविधिसिद्धानां भोग्यत्वात्स्वनुष्ठानमेव - शेषाणाम्, अशक्यक्रियाणाम्। अभावः, अनुष्ठानाभावः। अधिकारगः, आकिञ्चन्ये निविशते - ननु यथा प्रपत्त्यनुष्ठानकाले धर्मत्यागःप्राप्तो न दोषाय तथा - तत ऊर्ध्वमपि स्यादित्यत्राह - क्रत्विति -

**मू - तदानीमननुष्ठिताः। स्वकाले स्वविधेरेव कार्यास्ते तद्वदत्र नः ।।**
**त्यज धर्ममधर्मं च''** என்கிறதுவும் -

(सा.दी) तदानीम्, அந்த क्रतुकालத்திலே - क्रतुக்களுக்கு अङ्गங்களாகாமையாலே अनुष्ठितங்களாகாதே இருந்தாலும், स्वकाले, क्रतूत्तरकालத்தில் स्वतन्त्रविधियாலே தானே எப்படி यजमानனால் अनुष्ठिக்கப்படுகின்றன - அப்படியே இங்கு उत्तरकालத்தில் वर्णाश्रमधर्मங்களிலும் கண்டுகொள்வதென்று अर्थம் - त्यजधर्ममधर्मंच - प्रवृत्तिं च निवृत्तिं चोत्सृज्य - सर्वधर्मान्परित्यज्य'' इत्यादिகளால் आपातप्रतीतिயால் வரும் स्वधर्मपरित्यागभ्रमத்தை शमिப்பிக்கக்கோலி यथावस्थितार्थத்தை प्रथमं காட்டுகிறார் - त्यजधर्ममधर्मं च इत्यादिயால் - இங்கு धर्माधर्मशब्दங்களால் काम्यமும் निषिद्धமும் -

(सा.स्वा) ज्योतिष्टोमानुष्ठानदशायामङ्गतयाननुष्ठितानाम् औपासनादीनां स्वकाले ''सायं जुहोति प्रातर्जुहोति'' इत्यादिविधिभिर्यथानुष्ठानं तद्वदत्र प्रपत्तिविषये नः अस्माकं वर्णाश्रमधर्माणामनुष्ठानमित्यर्थः - यद्वा, अत्र, वर्णाश्रमधर्मे नः अनुष्ठानमित्यर्थः - ''त्यज धर्ममधर्मं च'' इत्यादिवचनத்திலே सर्वधर्मत्यागमङ्गமாகத் தோற்றுகையாலே तदैकार्थ्याय चरमश्लोकத்திலும் धर्मत्यागं विधेयமென்று வேண்டாவோ? என்ன அந்த वचनத்துக்கும் अविरुद्धமாக अर्थமருளிச்செய்கிறார் - त्यजधर्ममित्यादिना -

(सा.प्र) दीक्षाकालननुष्ठितानामपि - पश्चात्स्वकालेऽनुष्ठेयत्ववत्प्रपन्नानुष्ठेयत्वमपि स्यादित्यर्थः। ननु सर्वधर्मानित्यस्याकारभूते महाभारत एव ''त्यज धर्ममधर्मं च - त्यज सत्यानृते अपि'' इति विविच्य धर्मादीनां त्याज्यत्वोक्तेः सर्वधर्मानित्यस्यापि स्वरूपत्याग एव तात्पर्यमङ्गीकार्यमित्यत्र त्यजधर्ममित्यस्यापि नित्यनैमित्तिकानामवश्यानुष्ठेयत्वबोधकैरननुष्ठाने प्रत्यवायबोधकैश्चानेकैः प्रमाणैरविरोधाय सामान्यविशेषन्यायात्केवलकाम्यविषयत्वन्निषिद्ध विषयत्वं च स्वीकार्यमित्याह - त्यजधर्ममित्यादिना - काम्यकर्मणां त्याज्यत्वं मोक्षविरोधि -

(सा.वि) तदानीं, दीक्षाकाले। अननुष्ठिताः, स्नानादीनां दीक्षायां निषेधादिति भावः - स्वकाले, क्रतूत्तरकाले - स्वविधेरेव, स्वविधायकवचनबलादेव ननु सर्वधर्मानित्यस्याकारभूते महाभारत एव ''त्यज धर्ममधर्मं च'' इति त्याज्यत्वोक्तेः सर्वधर्मानित्यस्यापि स्वरूपत्याग एव तात्पर्यमङ्गीकार्यमित्यत्र त्यज धर्ममित्यस्यापि नित्यनैमित्तिकानामवश्यानुष्ठेयत्वबोधकैरननुष्ठाने प्रत्यवायबोधकैश्चानेकैः प्रमाणैरविरोधाय सामान्यविशेषन्यायात्केवलकाम्यविषयत्वादिकं स्वीकार्यमित्याह - त्यजधर्ममिति - त्यजसत्यानृते इत्यैश्वर्यकैवल्ययोश्च काम्य -

(सा.सं) तदानीं, दीक्षाकाले - नित्यादयः क्रत्वनङ्गत्वेन येऽननुष्ठिताः - ते स्वकाले, क्रतोरूर्ध्वं तत्तत्काले। स्वविधेरेव, तत्तत्कालनिमित्तम स्वविधायकवचन बलादेव यथाकार्याः - तद्वदत्र, अत्र विद्यमानतादशायाम् - नः प्रपन्नानां - नित्यादयस्स्वकाले, कार्य एव - एवं जात्यवगमवादानुगुण धर्मस्वरूप त्यागविधिपरत्वं सर्वधर्मान्परित्यज्येत्यस्य निराकृतम् - अथ त्यज धर्ममित्यादीनामपि महाभारतस्थ वचनानां स्वरूपत्यागविधिपरत्वं निरस्यते - त्यजधर्ममित्यादिना -

**मू** - **काम्य**ங்களையும் **निषिद्ध**ங்களையும் விடச்சொன்னபடி - **''त्यज सत्यानृते''** என்கிறதுவும் **आत्मानुभव**த்தையும் **ऐश्वर्य**த்தையும் **प्रयोजन**மாகக் கோலாதே கொள்ளென்றபடி - **वाचिक**ங்களை **विशेषि**த்துச் சொல்லிற்றாகவுமாம் - இதன் அருமை தோற்றுகைக்காக **''उभे सत्यानृते त्यक्त्वा''** என்று **अनुवदि**க்கிறது - **त्याग**த்தில் **कर्तृत्व**மும் **पराधीन**மென்று **अनुसन्धि**க்கைக்காக **''येन त्यजसि तत्त्यज''** என்கிறது.

(सा.दी) சொல்லப்பட்டன என்கை - त्यज सत्यानृते अपि, सत्यानृतशब्दங்கள் वाक्याவும் अचितपयोग्यமும் சொல்லிற்று - यद्वा, सत्यानृत वाक्குக்களைச் சொன்னாலும் दोषமில்லையென்கிறார் - वाचिकங்களை इत्यादि । सत्यं, तथ्यवचनम् அத்தைவிடுகையாவது, भूतங்களுக்கு पीडावहமான सत्यத்தைவிடுகை - त्यज सत्यानृते என்று विधिத்து மீளவும் अनुवदिக்கிறத்தின் கருத்தை காட்டுகிறார். இதனருமை इत्यादिயால். येनेति-येन स्वातन्त्र्याभिमानेन त्यजसि तत्यज என்று अर्थம். இதின் आपातप्रतीतिயால் -

(सा.स्वा) आत्मेति सत्यशब्दमात्मवाचकமென்றும், अनृतशब्दं विकारिயான अचेतनवाचिயென்றும் கருத்து - वाचिकेति - सत्यवचनत्यागமாவது काम्यवचनत्यागो वा परपीडाकरसत्यवचनत्यागो वा என்றபடி - उभे सत्यानृते त्यक्त्वा என்று ஏன் சொல்லுகிறது? प्राप्तार्थत्वाद्विधि கூடாதே? अनुवाद ஒட்டத்தில் निरर्थकानुवादं கூடாதே? என்னவருளிச் செய்கிறார். இதின் इति -''येन त्यजसि तत्त्यज'' என்று சொல்லுகிறது கூடுமோ? त्यागकरणीभूत करण कलेबरादिகளை விடக்கூடுமோ? என்னவருளிச்செய்கிறார். त्यागத்தில் इति-येन, स्वन्त्रकर्तृत्वानुसन्धानेन त्यजसि तत्स्वातन्त्रयं त्यज என்றபடி - இனி उक्तप्रकारங்களாலே निरस्तமாயிருந்தாலும் ''तस्मात्त्वमुद्धवोत्सृज्य'' इति वचनத்துக்கு अर्थविशेषं சொல்லுகைக்காகவும் विनोदार्थமாகவும் केषाञ्चिन्मतத்தை अनुवदिக்கிறார் -

(सा.प्र) फलजनकत्वेनैवेति मुमुक्षूणां काम्यत्याज्यत्वस्य निर्वाहकत्वादैश्वर्यकैवल्ययोस्त्यागस्य तयोः पृथग्वक्तव्यत्वसिद्धेस्तत्परत्वं नोपपद्यत इति गोबलीवर्दन्यायान्कर्तुमशक्यस्य विशिष्य त्यागावते रौचित्याध्व धर्माधर्मविशेषविषयत्वमाह। वाचिकங்களை इत्यादिना - ननु प्रमाणतमत्वेन प्रसिद्धे भागवते ''तस्या त्वमुद्धवोत्सृज्य'' इत्यादि वा विधिनिषेध शास्त्रार्थभूतविहितनिषिद्धरूपधर्मा धर्मयोः कृष्णेनैव त्याज्यत्वबोधनात्सर्वधर्मान् परित्यज्येति सामान्योक्तेरपि तद्विषयत्वस्य न्याय्यत्वाच्च त्रिवाचक न्यायेन नित्यनैमित्तिकानां स्वरूपत्याग एवं प्रतिपाद्यत इति वक्तुं युक्तमित्याशङ्क्य तथा च सति निषिद्धनिवृत्तिरपि त्याज्यत्वा -

(सा.वि) निषेधादेव सिद्धेः - पुनस्तन्निषेधकथनं व्यर्थमित्यनुशयादाह - वाचिकங்களை इति - सत्यवाक्यस्य विहितस्य त्यागो भूतपीडाकर सत्य वाक्यविषयः - ''न ब्रूयात्सत्यमप्रियम्'' इति धर्म शास्त्र विरोधादिति भावः - ''उभे सत्यानृतेत्यक्त्वा'' इत्यनुवादस्य प्रयोजनं तत्तात्पर्यज्ञानमेवेत्याह - இதினருமை इति - அருமை, तात्पर्यं - येन त्यजसि तत्त्यजेति त्यागकर्तृत्वात्यागतात्पर्यमिति ज्ञापनम् அருமை - सात्विकत्यागमाह - येनेति - येनाहं त्यजामिति स्वातन्त्र्याभिमानेन त्यजसि -

(सा.सं). - ''सत्यं चानृतं सत्यमभवत्'' इति । श्रुतौ चिदचित्सु सत्यानृतपदप्रयोगमनुसृत्याह - आत्मानुभवத்தை इति - येन त्यागेन कर्तृत्वाभिमानेन येनेत्यर्थः - तत्रापि सात्विको हि त्याग -

**मू** - இப்படியானால் - **आज्ञातिलङ्घन**த்துக்கு ஒரு விரகின்றிக்கேயிருக்க சிலர் **''तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तिंच निवृत्तिंच श्रोतव्यं श्रुतमेव च । मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसि ह्यकुतो भयम्''** என்று **निवृत्ति**யையும் கூடவிடச்சொன்னபடியாலும் **''सर्वधर्मान्परित्यज्य''** என்கிறவிடத்தில் **सर्वशब्द**த்தை **सङ्कोचि**யாமைக்காகவும் **निवृत्तिरूपधर्म**ங்களையும் கூடவிடவேண்டுகையாலவற்றை விடுகையாவது, **निषेधि**த்தவையெல்லாத்திலும் **यथाशक्त्यनुष्ठान**மாகையால் இந்த **निषिद्धानुष्ठानं विधिबलप्राप्त**மாகையால் **प्रपन्न**னுக்கு **बुद्धिपूर्वोत्तराघ**மும் **लेपि**யாதென்று **भ्रमि**ப்பார்கள் -

---

(सा.दी) வரும் भ्रमத்தைக் காட்டுகிறார் - இப்படியானால் इत्यादि - चोदना, विधिरूपशास्त्रम् - प्रतिचोदनानिषेधशास्त्रम् । அவையிரண்டாலும் विधिக்கப்பட்ட सत्कर्मप्रवृत्तिயையும், इतर निवृत्तिயையும், முன்பில் श्रुतத்தையும், பின்பில் श्रोतव्यத்தையும் எல்லாத்தையும் விட்டென்று श्लोकத்துக் अन्वयम्। सर्वात्मभावेन, सर्वेषामन्तर्यामि என்றும் भावத்தால் अकुतोभयम्, कुतोऽपि भयं यत्र नास्ति -

---

(सा.स्वा) என்னவருளிச்செய்கிறார் - मुमुक्षुவுக்கே इति - இப்படி अङ्गीकरिயாமால் मुमुक्षुमात्रத்துக்கு अपराधं வாராதென்று சொல்லில் बाधकமருளிச்செய்கிறார் - இங்ஙனன்றாகில் इति - उपासकனுக்கும், प्रपन्नனுக்கும், विहितानुष्ठानத்தில் अङ्गताभिसन्धिயும், कैङ्कर्यबुद्धिயுமென்கிற भेदं போலே निषिद्ध निवृत्तिயிலேயும் वैषम्यமில்லையோ? என்னவருளிச் செய்கிறார். उपासकனுக்கும் इति - वर्णेति । -

---

(सा.प्र) मात्रेण तथोक्तिरित्यर्थः - नन्वाप्ततमानां वाक्ये संभावितत्वाभिप्राय तोक्तिनिर्निबन्ध नेत्यत्राह - मुमुक्षुவுக்கே इत्यादि-महर्षिகள் பக்கலிலும் इत्यादि-वसिष्ठस्य चण्डालगृह भोजन तत्प्रायश्चित्तादिः - दुर्वाससोऽम्बरीष पारणा विघाताम्बरीष प्रसादनादिः। लोकसारङ्ग मुनेर्मुनिवाहनविषये शिलाप्रहार तत्प्रायश्चित्तादिश्चेत्यर्थः - मुमुक्षूणां बुद्धिपूर्वोत्तराघानुदयोक्तिस्सिद्धान्तविरुद्धेत्याह - இங்ஙனன்றாகில் इत्यादिना - व्यवस्थै பண்ணவொண்ணாதொழியும், व्यवस्थाकरणमयुक्तं स्यादित्यर्थः - ननु ''सत्कार्यनिरताश्शुद्धास्सांख्ययोगविदस्तथा। नार्हन्ति शरणस्थस्य कलां कोटितमीमपि'' इत्यादिभिः प्रपन्नानां भक्तेभ्योऽतिशयितप्रभावत्वावगमात्तेषां निषिद्धानुष्ठानं न दोषायेत्यत्राह - उपासकனுக்கும் इत्यादि - ''परीक्षार्थमपि ब्राह्मण आयुधं नाददीत इत्यादि वर्णनिमित्तक निषेधः- ''तांबूले भर्तृकस्त्रीणां -

---

(सा.वि) मुमुक्षुவுக்கே इति । பகுந்து, प्राप्तेषु । महर्षीति । वसिष्टादेश्चण्डालान्न भक्षणतत्प्रायाश्चित्तादि - ऋषिप्रायர்பக்கலிலுமுள்பட, लोकसारङ्गमुनि प्रभृतीनामपि विषये। मुनिवाहने शिलाक्षेप तत्क्षयादिति भावः - கண்டுபோரா நின்றதிறே, दृष्टं सत्स्थिरं खल्वित्यर्थः - व्यवस्थै, व्यवस्था - பண்ணவொண்ணாதொழியும், कर्तुमयोग्या स्यात् - परीक्षार्थमपि ब्राह्मण आयुधं नाददीतेति वर्णनिमित्तनिषेधः ''- ताम्बूले -

---

(सा.सं) पुनः प्रपत्तिरेव - अन्यतरकलपानाश्रयणे लोकमर्यादातिलङ्घनान्निग्रहलक्ष्य एव स्यादिति न प्रतिपदोक्याद्यानर्थक्यमितिन्नावः। अत्र शक्तौ सत्यामपि अनुतापातिशयाचिरादेव शरीरपातभयेन विलम्बाक्षमोऽपि कालक्षेपाक्ष्मोऽभिप्रेतः - व्यवस्थै பண்ணவொண்ணாதொழியும் इति । व्यवस्थाप्यस्यैवाभावादिति भावः-

**मू - இது மிகவும் परि (हसनीयम्) हरणीयम् - எங்ஙனேயென்னில்? अलेपकா் पापं பண்ணினால் लेपियाதென்பார். இவர்கள் पापमवश्यं अनुष्ठिक्கவேணுமென்றார்களாயிற்று. இது ''भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बलिशमायसम् । अन्नाभिलाषी ग्रसतेनानुबन्धमवेक्षते'' என்கிற கணக்காம் -**

(सा.दी) तत्परमपदமென்றபடி - निरसनार्थमिति (மிதின்) निरसनीयत्वத்தைக் காட்டுகிறார் - இது மிகவும் इत्यादियால். அத்தை उपपादिக்கிறார் - எங்ஙனேயென்னில் इत्यादियால் - अलेपकரென்று சிலர் பண்ணின पापங்களால் लेपமில்லையென்னுமவர்கள் - அவர்களைப் போலன்றியே இவர்கள் अवश्यं पापमनुष्ठेयமென்னும் साहसिकராயிற்று - இம் मतं संसारवर्धकமாமென்னுமிடத்தை सहदृष्टान्तமாகவருளிச் செய்கிறார். இது भक्ष्योत्तमेत्यादियால் - भक्ष्योत्तमेति - मत्स्यமானது अन्नाभिलाषिயாய் भक्ष्योत्तमமான मांसादियால் विहितமான आयसबलिशத்தை விழுங்குமாப்போலேயாயிற்று. अनुबन्धम्, मरणम्, अन्तम् -

(सा.स्वा) இது மிகவும் इत्यादिना - இது संसारवर्धकமாகையாலே हास्यமென்று கருத்து - இம் मतं மிகவும் संसारवर्धकமென்கையில் दृष्टान्तமருளிச் செய்கிறார் - भक्ष्येति - भक्ष्योत्तमेन, मांसेन - प्रतिच्छन्नम्, विहितम्। आयसम्, अयोमयम् - बलिशम्, मत्स्यवेधनम् - मत्स्यः अन्नाभिलाषी सन् ग्रसते - अनुबन्धम्। पश्चादापतदनर्थम् मरणं नावेक्षते - तद्रीतिயாமென்றபடி - இந்த मतமும் -

(सा.प्र) अनुबन्धम्, अनुबध्नाति इत्यनुबन्धः - भाविफलमित्यर्थः-

(सा.वि) भक्ष्योत्तमेति। भक्ष्योत्तमप्रतिच्छन्नं, मांसपिहितम् - बडिशं, मत्स्यबन्धनम् - अनुबन्धं, तदनुसक्षण प्राप्तमरणरूपमनर्थम्। नावेक्षते, न विचारयति - என்கிற கணக்காம், इत्युक्त प्रकारस्स्यात् -

(सा.सं) व्संस्कारोद्बोधायत्तश्रुतवत्तां सूचयन् गुरूच्चारणानूच्चारणनिषेधपरः - दुर्वासः प्रभृतीनामाश्रमधर्मनिष्ठानां काश्चनोद्वृत्तवृत्तय अधिकारित्वकृताः - ऋभु, शुक, संवर्तकादिषु नग्नचर्यादर्शन - व्रतमपि ब्रह्मचर्यादिषु परीक्षार्थ कालविशेष नियत व्रतविशेष रूपमेव - शुकस्य वारकुख्यासु गणिकासु भोजनादि व्यपदेशोऽपि ब्राह्मणादि परपक्वोपनीतान्न विषयः - अजगरोपाख्यानेऽपि ''स्वस्थश्शुको मृदुर्दान्ति'' इत्यादिना प्रह्लाद प्रेरने ब्राह्मण मुमुक्षूपादेयगुणाभिधानान्न तत्र स्वैरप्रतीतिः ''ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वा न पेक्षकः स लिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः'' इति च तत्तल्लिङ्गैरे व तत्तदाश्र(या)म्यहमिति दुरभिमानं त्यक्त्वा आश्रमप्रयुक्तविधिविहितान् प्रीत्यैव कुर्यात् न विध्येक गोचरस्सन्निति वदति - सनत्कुमारादिनग्नचर्यानित्यबाल्यावस्थया केवलब्रह्मभावनया च - पशुपतेर्नग्नचर्यातु पाशुपतव्रतविशेषाङ्गतया आधिकारिकतया चोपपन्ना। तदेव चरितं चरेदिति वचनान्नाधुनिकानां साप्रमाणभूता - तेषां तेजो विशेषा बाधका च - शिष्टाचारादयश्च धर्मत्यागे गगनकुसुमायमानाः - इदं सर्वमभिप्रेत्य ஒருவிரகன்றிக்கே इत्युक्तम् - चोदना, कैङ्कर्यं मया कार्यमिति रूपा। प्रतिचोदना, किं मया त्याज्यमिति रूपा। चोदनायत्ता विहितेषु प्रवृत्तिः प्रवृत्ति शब्दार्थः। प्रति चोदनायत्ता निषिद्धनिवृत्तिर्निवृत्तिशब्दार्थ इत्युच्यते - निवृत्त्युत्सर्गो निषिद्धानुष्ठानात्मक - इति मतमतिहेयमपि वचनोपन्यसनेन अतिमोहनत्वादियुक्तमित्युक्तम्। भक्ष्योत्तमशब्देन कुत्सित -

**मू** - இவையெல்லாவற்றையும் நினைத்து "**अहोबत महत्कष्टं विपरीतमिदं जगत्। येनापत्रपते साधुरसाधुस्तेन तुष्यति**" என்று **महर्षि निर्विण्ण**னானான் - இவர்கள் சொல்லுகிறபடி **अर्थ**மானால் **यावज्जीवं**இருந்து **अनुष्ठि**க்கும் **निषिद्धानुष्ठान**மெல்லாம் **प्रपत्ति**க்கு **अङ्ग**மாகையால் **साङ्गप्रपदनं सकृत्कर्तव्य**மென்னுமிடமும் கழியும் - **प्रपत्तिक्षण**த்தில் எல்லா **निषिद्ध**ங்களும் **अनुष्ठि**க்கை **अशक्यम्।** அப்போது **यथाशक्ति निषिद्धानुष्ठानं** பண்ணிக்கொண்டு **प्रपत्ति** பண்ணவும் கண்டறியோம். இப் **पक्ष**த்தில் **पाप**ங்கள் **अग्नीषोमीयहिंसै** போலே **पाप शब्दवाच्य**மல்லாமையாலே **बुद्धिपूर्वोत्तराघ**த்தையும் கூட்டி -

---

(सा.दी) यद्वा, अन्तस्स्थित(மான) मान वायसबलिशम् - அத்தையறிய மாட்டாது - இனியவர்கள் போலிவர்களுடைய साहसप्रवृत्तिகளை நினைத்து महर्षि निर्विण्णனான படியைக் காட்டுகிறார் - இவையெல்லாவற்றையும் इत्यादिயால் - अहो बतेति - இந்த जगत् विपरीतமாக वर्तिக்கும்படி महाकष्टम् - அய்யோ பாவீயேன் कष्टத்தைக் காட்டுகிறார் येनेति - யாதொரு पापकर्मத்தால் सज्जनன் लज्जिக்கிறான் அது தன்னாலே दुर्जनன் सन्तोषिத்துக் கொள்வதேயென்று दूषणமருளிச் செய்கிறார். இவர்கள் इत्यादि - இப் पक्षத்திலவர்கள் பண்ணும் निषिद्धानुष्ठानமெல்லாம் प्रपत्तिக்கு अङ्गமாய் पर्यवसिக்கையாலே இன் निषिद्धानुष्ठानं यावज्जीवமிருந்து अनुष्ठिக்குமதெல்லாம் अङ्गமோ? எல்லா निषिद्धமும் प्रपत्तिक्षणத்தில் अनुष्ठितமாய் अङ्गமோ? तत्क्षणத்தில் यथा शक्त्यनुष्ठितமோ? என்று विकल्पिத்து क्रमेण दूषिக்கிறார் - यावज्जीवமிருந்து इत्यादि वाक्यत्रयத்தாலே - இப் पक्षत्रयத்திலும் दूषणान्तरமருளிச் செய்கிறார் - இப்पक्षத்தில் इत्यादि -

---

(सा.स्वा) சிலர்க்கு तुष्टिकरமன்றோ? என்னவருளிச்செய்கிறார். இவையெல்லாவற்றையும் நினைத்து इति। बाधकान्तरமருளிச் செய்கிறார். இவர்கள் சொல்லுகிறபடி इति-यावज्जीवमनुष्ठेय निषिद्धानुष्ठानம் अङ्गமோ? तत्कालத்தில் यावन्निषिद्धानुष्ठानम् अङ्गமோ? यथाशक्ति निषिद्धानुष्ठानம் अङ्गமோ? என்று विकल्पिத்து क्रमेण उत्तरமருளிச் செய்கிறார் - यावज्जीवमित्यादिना - இன்னமொரு दूषणமருளிச்செய்கிறார் - இப்पक्षத்தில் इति - विहितமானபடியாலே என்றபடி - दूषणान्तरமருளிச் செய்கிறார் -

---

(सा.प्र) अहोबतेत्यादि - गर्हणीयैस्तुष्यतां कथं वा गर्हणीयार्थेभ्यो निवर्तनं कार्यमिति निर्विण्णोऽभवदित्मर्थः निषिद्ध निवृत्तेस्त्यागविधौ तत्त्यागस्य निषिद्धप्रवृत्तिरूपतया निषिद्धानुष्ठानस्य विधेयत्वे फलवत्सन्निधावफलं तदङ्गमिति न्यायादङ्गत्वस्यावश्यकत्वादङ्गत्वे च किं यावज्जीवं निर्वर्त्यमानं निषिद्धानुष्ठानं वाद्यप्रपत्तिक्षण एव सर्वेषां निषिद्धानामनुष्ठानं वा? प्रपत्तिक्षणे यथाशक्ति निषिद्धानुष्ठानं वा? तत्त्वेन विधीयत इति विकल्प्य प्रथमे लघूपायत्वव्याहतिं, द्वितीये अशक्तानुष्ठानत्वेनाननुष्ठान लक्षणाप्रामाण्यं, तृतीये प्रत्यक्षाचरणविरोधं, कल्पत्रयेऽपि स्वोक्तिविरोधं, भाष्यकारवाक्यविरोधं चाह। இவர்கள் சொல்லுகிற इत्यादिना - अग्नीषोमीयहिंसैபோலே इति - विहितत्वं पापशब्दवाच्यत्वाभावे हेतुरिति भावः -

---

(सा.वि) கழியும், निरस्तं भवेत् - கண்டறியோம், दृष्ट्वा न जानीमः

---

(सा.सं) भक्ष्यमुच्यते। अनुबन्धं नावेक्षत इत्यर्थः । ये निषिद्धानुष्ठानेन साधुरपत्रपते -

**मू** - ''**सर्वपापेभ्यो मोक्षयिष्यामि**'' என்கிறவிடத்துக்குத் தாங்கள் **व्याख्यानं** பண்ணின **प्रकार विरुद्ध**மாம் - **यथाशक्ति त्रिविधापचार**ங்கள் **कर्तव्य**ங்களாகவும் **प्रसद्धि**க்கும் - **இது पूर्वानुष्ठान**த்துக்கும், **पूर्वसंप्रदाय**த்துக்கும், **स्वानुष्ठान**த்துக்கும், மற்றுமிப்போது காண்கிற **मुमुक्षु**க்கள் **अनुष्ठान**த்துக்கும் **विरुद्ध**ம் - இப்படி சொல்லுமவர்கள் தம்மையொரு **प्रपन्न**ன் **अर्थकाम**ங்களடியாக நலியப்புக்கால் இது **प्रपन्नधर्म**மென்றவரை உகந்திருக்க **प्राप्त**(மா)ம் - இது **अनन्त प्रमाण**ங்களுக்கு **विरुद्ध**மானவளவேயன்றிக்கே இங்கெடுத்த **वचन**ங்களுக்கும் **विवक्षित**மன்று -

(सा.दी) இன்னமொரு **दूषण**மருளிச்செய்கிறார் - **यथाशक्ति**யென்று - **तथास्तु** என்றருளிச் செய்கிறார் - இது पूर्वानुष्ठानेत्यादि। पूर्वர்களில் **निषिद्धानुष्ठान**மில்லையிறே - இது **स्वानुष्ठान**த்துக்கும் **विरुद्ध**மென்கிறார் - இப்படி சொல்லும் **इत्यादि - निषिद्धं कर्तव्य**மென்னும் पक्षं **प्रपन्न**னுக்கு धर्मங்களை **विधि**க்கிற **प्रमाण**ங்களுக்கு **विरुद्ध**மாம். அவ்வளவன்றிக்கே இங்கெடுத்த **वचन**ங்களுக்கும் **विवक्षित**மன்றென்கிறார். இது என்று - **विवक्षितत्वाभाव**த்தை சில आचार्यர்கள் पक्षத்தாலே उपपादिக்கிறார் -

(सा.स्वा) यथाशक्तीति - **इष्टप्रसङ्ग**த்தில் **बाधक**மருளிச்செய்கிறார் - இது इति - स्वानुष्ठानத்துக்கும் इति-त्रिविधापचारங்களை மிகவும் वर्जिக்கையாலே என்றபடி - இன்னம் प्रबलानिष्टप्रसङ्गं பண்ணுகிறார் - இப்படி **इति - इयता प्रबन्धेनबाधक** மருளிச் செய்து **साधक भाव**முமருளிச்செய்கிறார் - இது **इति** -

(सा.प्र) ननु निषिद्ध मनुष्ठेयमिति वदतस्त्रिविधापचारकर्तव्यत्वप्रमङ्ग इष्ट एवेति चेत्तत्राह - இது पूर्वர் इत्यादिना - **सम्प्रदायो नाम, उपदेशपरम्परा** - भागवतापचारस्य कर्तव्यत्वसमर्थनं स्वव्याघातकं चेत्याह இப்படி சொல்லும் **इत्यादि** - निषिद्धाननुष्ठानस्य वैधत्वोवतौ विहितस्य च निषेधायोगात् ''तस्माद! ब्राह्मणाय नापगुरेत - न कलञ्जं भक्षयेत - न सुरां पिबेत्'' इत्यादीनां न हिंस्यादित्यस्य अग्नीषोमीयपश्वालम्बनाकर्तव्यताबोधकत्वाभावाद्ब्रह्महत्याद्यकर्तव्यत्वबोधकत्वानुपपत्तेः केनाप्यकर्तव्यतया बोधितत्वमन्तरेण निषिद्धत्वासिद्धेरन्येषां निषिद्धस्य प्रपन्नान्प्रति विहितस्यानुष्ठीय मानस्य निषिद्धानुष्ठानव्यपदेशविषयत्वानुपपत्तेर्निषिद्धानां विहिततयानुष्ठेयत्वसमर्थनं सिद्धय सिद्धि व्याघातपराहतमिति बहुप्रमाणविरोधसद्भावेऽपि तस्मात्त्वमित्यादिषु विवक्षितं च न भवतीत्याह - இது अनन्तप्रमाणेत्यादिना - एवं निषिद्धसामान्यनिवृत्तेरत्याज्यत्वमुक्त्वा तस्य धर्मशब्दवाच्यत्वे किल त्याज्यत्वप्रसङ्गोऽपि भवेदिति तदेव नास्तीति दर्शयन् ''सायमाद्यं तयोहरहोस्सायं प्रातश्च मध्यमे। उपवास फल प्रेप्सुर्जहचा (द्व?) भ्भुक्त चतुष्ठयम ऐश्वर्यसन्ततिं -

(सा.वि) - तस्मै, स्वात्मनः। प्रपन्नர், केचित्प्रपन्नाः। நலியப்புக்கால், हिंसितुमुद्यक्ताश्चेत् - உகந்திருக்கப் प्राप्तமாம், सन्तुष्य स्थातुमुचितं स्यात् இங்கெடுத்த वचनங்களுக்கு, इहोपात्त वचनानां - तस्मात्त्वमुद्धवोत्सृज्येत्यादि वचनानामित्यर्थः - अत्र सर्वधर्मान्परित्यज्येत्यत्र प्रवृत्तिनिवृत्ति रूपधर्माणां सर्वेषां त्यागविधानानिषिद्धानुष्ठानमपि प्रपन्नानां कर्तव्यमेवेति केषाञ्चिद् भ्रान्तानां -

(सा.सं) एवं बुद्धिपूर्वकनिषिद्धानुष्ठानं प्रपन्नस्य न बाधकमित्यर्थे बहून्यतिप्रसङ्गान्यापाद्य निषिद्धानुष्ठानपर्यवसायि निषिद्धनिवृत्त्युत्सर्गोऽत्र विवक्षितश्च इत्याह - இங்கெடுத்த इति -

**मू - निषिद्धनिवृत्तिरूप**ங்களெல்லாம் **सर्वधर्मशब्द**த்தாலே **सङ्गृहीत**ங்களென்னுமிடம் **धर्मशब्दार्थ**மறியாமல் சொன்னபடியென்று சில **आचार्य**ர்கள் **निर्वहि**ப்பார்கள் - எங்ஙனேயென்னில்? **निवृत्ति**களிலேயொரு **फल**த்துக்கு **साधन**மாக **नियमविशेष**ங்களுடனே செய்தவை **धर्मशब्दार्थ**மாம் - **सामान्य**மான **अहिंसादिमात्रम्।** **पापाभावमात्र**மாமித்தனை போக்கி **धर्मशब्द**த்துக்கு **मुख्यार्थ**மன்று. ஆகையால் **फलविशेषनियमविशेष**ங்களோட கூடின **अहिंसादि**களை விடுகையாவது? **फल**ங்களையும் **नियम**ங்களையும் விடுகை மற்று **निवृत्तिशास्त्र**த்தில் சொன்ன **निवृत्ति**களை விடுகைக்கு விரகில்லை -

(सा.दी) निषिद्धनिवृत्तिயென்று துடங்கி, निर्वहिக்கும் प्रक्रियैயைக் காட்டுகிறார் - எங்ஙனே யென்னில் इत्यादिயால் - अविरुद्धமான निषिद्धनिवृत्तिरूपधर्मत्यागத்தைக் காட்டுகிறார் - ஆகையால் फल विशेषेत्यादि - फलनियमங்களுடைய त्यागमात्रத்தாலே निषिद्धनिवृत्ति धर्मत्याग முண்டாகையால் निवृत्तिशास्त्रத்தை बोधिக்க விரகில்லையென்று கருத்து. फलनियम रहिताहिंसादि मात्रமும் धर्म शब्दार्थமென்றும் -

(सा.स्वा) विवक्षितமன்றென்கிற अर्थத்தை சில आचार्योक्ति मुखेन उपपादिக்கிறார் - எங்ஙனே யென்னில் इत्यादिना -

(सा.प्र) स्वर्गं मुक्तिं वा यद्यदिच्छति। एकादश्युपवासेन तत्सर्वं लभते नरः'' इत्याद्युक्तनियमविशेष फलसङ्कल्पविशेषसहितस्य निषिद्धैकादशीभक्षणादिविरहस्यालौकिकश्रेयस्साधनतया धर्मशब्दार्थ भूतस्यापि स्वरूपेण त्यागो निषेधशास्त्रविरोधादेवानुपपन्न इति नियमविशेषादित्यागादेव तत्त्यागोऽपि विशेषणाभावाद्विशिष्टाभाव इति न्यायेन सिद्ध इत्याह निषिद्धनिवृत्तीत्यादिना -

(सा.वि) व्याख्याने प्रपन्नानां सुरापान ब्रह्महत्यादिभागवतापचारादीनां कर्तव्यत्वप्रसङ्गे आपतिते सति निषिद्धनिवृत्तिमात्रस्य धर्मशब्दार्थत्वे किंतु फलविशेषनियमविशेषसहितनिषिद्धनिवृत्तिरेव धर्मत्वं यथा ''सायमा(यं)द्यन्तयोमूहोऽस्यायं प्रातश्च मध्यमे। उपवासफलं प्रेप्सुः जह्याद्भुक्तचतुष्टयम्। ऐश्वर्यं सन्ततिं स्वर्गं मुक्तिं वा यद्यदिच्छति। एकादश्युपवासेन तत्सर्वं लभते नरः'' इत्यादिरूपाया एकादश्या निवृत्तेः त्यागो नाम फलनियमत्यागः। विशेषणत्यागे सति विशिष्टस्वरूपाभावेन विशिष्ट धर्मत्यागसम्भवन्नत्वेकादश्युपवासस्वरूपत्यागोऽपि - तस्य धर्म शब्दार्थत्वाभावादिति केचिन्निर्वाहं चक्रुरित्याह। निषिद्ध निवृत्तिरूपमिति। அறியாமல், अज्ञात्वा । नियमविशेषங்களுடனே செய்தவை, नियमविशेषैस्सह क्रियमाण एव - இத்தனைப்போக்கி, पापाभावमात्रं विना । -

(सा.सं) ननु कथमविवक्षितता - सर्वधर्मानित्यादौ धर्मशब्देन निवृत्तेरपि सङ्ग्रहे ''तस्मात्त्वमुद्धव'' इति वचनबोधितेन निषिद्धनिवृत्त्युत्सर्गेण निषिद्धानुष्ठानपर्यवसानमित्यत्र तत्र तदसङ्ग्रहेणैव केषाञ्चिदाचार्याणम् तदपर्यवसानफलकं निर्वाहमाह - निषिद्धनिवृत्तिरूपங்களெல்லாம் इत्यादिना - निर्वहिப்பார்கள். इह निषिद्धनिवृत्त्युत्सर्गविधिं निषिद्धनिवृत्त्यपरित्यागेनैवोपपादयन्तीत्यर्थः - निर्वाहमेव प्रश्नपूर्वकमुपपादयति எங்ஙனேயென்னில் इति - रुक्माङ्गदादिभिरनुष्ठितैकादश्यां भोजननिवृत्तिर्मोक्षफलाचातुर्भुक्तवर्जत्वादिनियमविशेष -

**मू - नियमविशेषादिகளோட கூடாத अहिंसादिमात्रமும் धर्मशब्दार्थமென்னும் पक्षத்திலும் சொல்லு கிறோம் - "अधर्मपरिहारेऽपि धर्मत्वेन विवक्षिते। स्यात्स्वतन्त्रविधेरेव नित्यं तस्य परिग्रहः।।"**

(सा.दी): पक्षத்திலும் परिहारं சொல்லுகிறார். नियमविशेषादिகள் इत्यादि-प्रपन्नனுக்கே अधर्मपरिहारं विशिष्य विधिக்கையால் सर्वधर्मान् என்றவிடத்தில் सर्वशब्दं सङ्कोचनीयமென்கை - अधर्मपरिहारेऽपि, केवलनिषिद्धनिवृत्तिயும் - अन्यत्र धर्मशब्दத்தால் विवक्षितமாகிலும் - अर्थமாகிலுமென்றபடி - यद्वा, இங்கு विहितமான सर्वधर्मत्यागं सर्वधर्मनैरपेक्ष्यமாகக் கடவது. அப்போது स्वतन्त्रविधिயாலே प्रपन्नனுக்கு वर्णाश्रमधर्मपरिपालनமுண்டாகையால் यथेष्टचरणத்துக்கு अवकाशமில்லை. -

(सा.स्वा) स्वयं परिहारமருளிச் செய்கிறார் - नियमेति-सर्वधर्मत्यागवचनं नैरपेक्ष्यविधिपरं वा? सर्वधर्मत्यागाङ्गकत्वविधिपरं वा? என்று विकल्पिத்து आद्यपक्षத்திலருளிச்செய்கிறார் - अधर्मेति -

(सा.प्र) निषिद्ध निवृत्ति सामान्यस्य धर्म शब्दार्थत्वेऽपि "न हिंस्यात्सर्वा भूतानि" इति सामान्य निषेधे निषेध्यवाचि सर्वपदस्याग्नीषोमीयहिंसाविध्यवैय्यर्थ्याय तद्व्यतिरिक्त विषयत्व न्यायात्सर्वधर्मानित्यत्र सर्वशब्दस्यापि निषेधनिवृत्तिव्यतिरिक्तधर्मपरत्वमेवेत्याह - नियम विशेषेत्यादिना - स्वतन्त्र विधेरेव, यत्किञ्चित्फलाशेषतयैव विधानादित्यर्थः तस्य, अधर्मपरिहारस्येत्यर्थः। यद्वा, स्वतन्त्रस्य, भगवतो नियमनादेव विधिः, प्रेरणा-इदं कुरु इदं मा कुर्विति भगवत्प्रेरणादेवेत्यर्थः - एवं सर्वधर्मानि त्यस्य त्यज धर्ममित्यस्य चार्थनिर्यये सति तस्मात्वमुद्धवेत्यत्रापि विहितत्यागो निषिद्ध स्वीकारश्चोभयं -

(सा.वि) केषाञ्चिन्निर्वाह प्रकारमुक्त्वा केवलनिवृत्ति स्वरूपस्य धर्मत्वाभ्युपगमेऽपि सर्वधर्मानित्यत्र न हिंस्यादित्यत्र विहितेतरविषयत्ववन्निषिद्धनिवृत्तीतरविषयत्वस्यावश्यकतया धर्मशब्दसङ्कोचे सति सर्वनिर्वाह इति वयं तं निर्वाह प्रकारं ब्रुवन्नित्याह - नियम विशेषादिகளோடு கூடாதே इति - अधर्म इति - अधर्म परिहारे धर्मत्वेन विवक्षितेऽपि नियम विशेषादिकं विना निषिद्ध निवृत्ति मात्रस्य धर्मत्व विवक्षायामपीत्यर्थः स्वतन्त्र विधेरेव - स्वतन्त्रस्य - भगवतो विधेरेव "न सुरां पिबेत्" इत्यादि रूप निषेधविधेरेव - अधर्मपरिहारस्य नित्यं परिग्रहस्सिद्ध्यति - न परित्यागः। यद्वा "उपायापाय संत्यागो - अपाय संप्लवे सद्यः प्रायश्चितं समाचरेत्" इत्यादिना प्रपन्नं प्रत्येव स्वीकारः उपाय परित्याग विधिसद्भावादपायपरिहारस्य परित्यागोऽत्र न विधेय इति -

(सा.सं) युक्ता च सती धर्मशब्दसङ्गृहीता-तादृश निवृत्तीनामुत्सर्गः सविशेषणे हीति व्यायेन नियम फलयोस्त्याग एवं पर्यवसन्नः। ननु भोजननिवृत्त्यादित्यागपर्यवसन्न इति केषांचिन्निर्वाह इत्यर्थः धर्म शब्देन निषिद्धनिवृत्तिपात्रसङ्ग्रहेऽपि। इह तत्त्यान्गो न सिद्ध्यतीत्याह - अधर्मेति - तस्य, अधर्मपरिहारस्य - स्वतन्त्रस्य, भगवतः। विधिः शासनम्-तत्व- "एकादश्यां न भोक्तव्यम्" इत्यादिकम्। नन्वेवं सामान्य धर्मपद घटित-त्यागविधिपराणां तत्तन्निवृत्तिधर्मविध्युपरिबन्धित्वेऽपि चोदनां प्रति चोदनामिति विशेषपदघटितत्यागविधिबलान्निषिद्ध निवृत्ति त्याग स्यापि -

**मू - आनुकूल्यपरित्यागं प्रातिकूल्यपरिग्रहम् । प्रपत्त्यङ्गं परिज्ञातुं परितः प्रतिसन्धीयतामिह।**
*இப்படி(யற்றபின்பு)யான பின்பு **''चोदनां प्रतिचोदनां''** என்கிறவிடத்தில், **''प्रवृत्तिं च निवृत्तिं च''** என்கிறவிடத்திலும் **प्रपत्ति**க்கு **अङ्ग**மாகவொன்றும் **स्वीकरि**க்க வேண்டாவென்கிறதாமித்தனை -

(सा.दी) யென்றபடி - இப்படியான பின்பு, सर्वधर्म त्यागं विवक्षितமாகாத பின்பென்கை. चोदनां विसृज्य என்று आनुकूल्य परित्यागத்தையும் प्रतिचोदनां विसृज्य என்று प्रातिकूल्यपरिग्रहத்தையும், ''मामेकमेवशरणं याहि'' என்று विधिக்கப்பட்ட प्रपत्तिக்கு अङ्गत्वेन प्रतिज्ञै பண்ண साधुगोष्ठिயில் शक्यமன்றென்கிறார். आनुकूल्य परित्यागमित्यादिயால் - चोदनां प्रतिचोदनाமென்று विधिनिषेध शास्त्रங்களை प्रपत्त्यङ्ग प्रतिपादकत्वेन परिग्रहिக்கவேண்டாவென்கிறது என்கை. இத்தால் आनुकूल्यस्य सङ्कल्पः என்கிற प्रमाण विरुद्धமென்றும் सूचितम्। कथं न शक्यम्? என்னவருளிச் செய்கிறார் - प्रपन्नमधिकृत्यैव என்று - इह, न शक्यते என்னும் अर्थத்திலென்றபடி. இனி प्रवृत्तिं च निवृत्तिं च என்றதுக்குத் तात्पर्यार्थத்தைக் காட்டுகிறார் - प्रवृत्तिं चेत्यादिயால் - अर्थान्तरமருளிச் செய்கிறார்.

(सा.स्वा) द्वितीयத்தை निरसिக்கிறார் - आनुकूल्येति - विधिनिषेधानां प्रपन्नेतरविषयत्वात्प्रपन्नस्यैच्छिकसञ्चारप्रसङ्ग इत्यत्राह - प्रपन्नमिति। இப்படியாகில் चोदनां प्रतिचोदनाமென்கிற वचनத்துக்கு गतिயெது? என்னவருளிச் செய்கிறார் - இப்படி इति । இப்படியற்ற பின்பு, स्वतन्त्र -

(सा.प्र) न्यासाङ्गत्वेन विधीयत इति वक्तुमयुक्तमित्याह - இப்படியற்ற इत्यादिना। एवं विहित त्यागनिषिद्ध स्वीकारयोरङ्गत्वाभावे भक्तियोग इव प्रवृत्त्यात्मक विहितानां निषिद्धात्मकनिवृतीनां वा किमङ्गत्वमित्राह - प्रवृत्तिं चेत्यादि। एवं चोदनां प्रतिचोदनामित्यादेस्सर्वधर्मा नित्याद्यैकार्थ्याय -

(सा.वि) नित्यमपराधपरिहारस्य परिग्रह एव वेति। एवं सर्वधर्मानित्यस्यार्थनिर्णये सति तस्यात्त्व मुद्धवोसृज्येत्यस्य परोत्प्रेक्षितार्थः पण्डितसदसि न वक्तुं योग्य इत्याह - இப்படியற்ற பின்பு इति - एवं प्रकारेण परिहारानन्तरं इत्थं परिहारसम्भवे सतीत्यर्थः प्रवृत्तिं च निवृत्तिं चेत्यस्य विवक्षित मर्थमाह - प्रवृत्तिं च निवृत्तिं च என்றவிடத்திலும் इति । என்கிறதாமத்தனை, उक्तं भवतीत्येतन्मात्रं -

(सा.सं) प्रपत्त्यङ्गत्वसिद्धिरित्यत्राह। இப்படியான பின்பு इति-स्वतन्त्र विधेरनुल्लङ्घनीयत्वे सिद्ध इत्यर्थः आनुकूल्य परित्यागमिति। यदि चोदनामुत्सृज्येत्यस्य विहितमुत्सृज्येति प्रतिचोदनामुत्सृज्येत्यस्य निषिद्धवर्जनमुत्सृज्येति च यद्यर्थस्यात्तदानुकूल्यं परित्यज्य प्रातिकूल्यं परिगृह्य प्रपद्येतेति पर्यवस्येत् - एवं प्रतिज्ञातुमेव न शक्यते - तदुपपादकाभावात् ''आनुकूल्यस्य सङ्कल्प'' इत्यादि बाधाच्च - साधु संसदीत्युक्त्वा तत्र स्थातुमप्ययोग्येन कथमेवं प्रतिज्ञाकार्येति ध्वनितम्। ननु प्रपन्नभिन्नविषयास्सन्तु धर्म विधम इत्यात्राह - प्रपन्नमिति - यमधिकृत्य सर्वधर्मपरित्यागविधिं ब्रूषे तमेवोदिश्येत्येवकारार्थः - ''एवं -

* இப்படியற்றபின்பு என்கிற प्रतीकं सारास्वादिनीயில் பிற்பட்டிருக்கிறது.

**मू - मुमुक्षुमात्रத்தைப்பற்ற "त्रिवर्गिकांत्यजेद्धर्मान्" என்கிற கட்டளையிலே फलान्तरसाधनமாக चोदितैகளான प्रवृत्तिनिवृत्तिகளையும், அவற்றுக்குறுப்பான शास्त्रங்களையும் விடச் சொன்னதாகவுமாம். இங்ஙனன்றிக்கே नित्यनैमित्तिकादिகளுடைய स्वरूपत्यागं विवक्षितமென்னில் முன் சொன்ன सर्वविरोधமும் प्रसङ्गिக்கும். இந்த निष्कर्ष सत्वनिष्ठராய் विवेकिகளாயிருப்பார் தெளிந்து अङ्गीकरिப்பார்கள். இவ் अर्थத்தை "செய்யாதன செய்யோம் -**

(सा.दी) मुमुक्षुमात्रத்தை इत्यादिயால். அவற்றுக்குறுப்பான शास्त्रங்களையுமென்றது चोदनां प्रतिचोदनाமென்றத்தை நினைத்து. இப்படி अङ्गीकरिயாத पक्षத்தில் पूर्वोक्तदूषणங்களை स्मरिப்பிக்கிறார். இங்ஙனன்றிக்கே इत्यादिயால். இந்த निर्णयத்தை நம்மாழ்வார் முதலானாருமருளிச் செய்தார்களென்கிறார் - இவ் अर्थத்தை इत्यादिயால் - செய்யாதவை, செய்யப்படாதவை. अकृत्यकरणादिகளென்கை. செய்யோம் -

(सा.स्वा) विधेरेवानुल्लङ्घनीयत्व सिद्धे யென்றபடி - இப்படி प्रवृत्ति निवृत्तिகளை प्रपत्त्यङ्गமாக स्वीकरिக்கவேண்டாவென்று சொன்னது கூடுமோ? मनसो भगवद्विषये प्रवृत्तिயும் विषयेभ्यो निवृत्तिயும் प्रपदनापेक्षितமன்றோ? என்ன अर्थान्तरமருளிச் செய்கிறார். मुमुक्षुमात्रத்தைப்பற்ற इति। विपक्षத்தில் बाधकமருளிச்செய்கிறார் - இங்ஙனன்றிக்கே इति - இப்படி இவ்अर्थம் समीचीनन्याययुक्त प्रमाणसिद्धமாகில் சிலர் अङ्गीकरिயாமலிருக்கக்கூடுமோ? என்னவருளிச் செய்கிறார். இந்த निष्कर्ममिति - இப்படியாகில் दर्शनप्रथमप्रवर्तकரானவாழ்வார்களிந்த अर्थத்தைச் சொல்ல வேண்டாவோ? என்னவருளிச் செய்கிறார். இவ் अर्थத்தை इति - செய்யாதவை, செய்யப்படாதவை - अकृत्यங்களை - செய்யோம், -

(सा.प्र) विहित प्रवृत्तेर्निषिद्ध निवृत्तेश्च भरन्यासानङ्गताज्ञापनपरत्वमुक्त्वा केवलकाम्यमात्रनिषेध विषयत्वं वेत्याह। मुमुक्ष्वित्यादिना - काम्य प्रतिपादकशास्त्राणां सर्वदा परिचेय तत्फलेच्छाप्रसङ्गेन काम्यकर्मानुष्ठान प्रसङ्गाच्छास्त्रान्तरमपि त्याज्यमिति भावः - नन्विदानीन्तनानां प्राचुयेणार्थ - कामपरत्वाद्भावत्कं निष्कर्षं न केऽप्यङ्गीकुर्युरित्यत्रैतदनङ्गीकारे बाधकस्य विद्यमानत्वात्प्रामाणिका अङ्गीकुर्युरित्याह - இங்ஙனன்றிக்கே इत्यादिना-विषिद्धानामनुष्ठानस्य सांप्रदायिकत्वमाह - இவ் अर्थத்தை इत्यादिना - செய்யாதன செய்யோம் -

(सा.वि) मुमुक्षुमात्रस्य फलान्तरसाधनत्वेन विहितकाम्यप्रवृत्ति निवृत्ति परित्यागपरं (ना) वास्त्वित्याह - मुमुक्षुमात्रத்தை इति- செய்யாதன செய்யோம். செய்யாதன, अकृत्यानि - செய்யோம், न कुर्मः -

(सा.सं) विलङ्घयन् मर्त्यो मर्यादां वेदनिर्मिताम्" इत्यादिकं प्रतिसन्धी यतामित्यत्र भाव्यम्। एवं च प्रपत्त्यनुपकारक चोदना प्रतिचोदनयोस्त्यागः उद्धवं प्रत्युपदिष्टमिति मन्तव्यम् - नन्वानुकूल्य सङ्कल्पादि रूपाङ्गभिन्नायां मनसा भगवति प्रवृत्ते विषयेभ्यो निवृत्तेश्च प्रपत्त्यर्थमस्वीकारप्रसङ्ग इत्यत आह - मुमुक्षुमात्रக इति-भक्ति निवृत्त्यादि फलसाधनतया चोदिताकायशोषणादि प्रवृत्तिस्त्रैवर्गिकधर्म निवृत्तिस्तदुचितश्रोतव्यं श्रुतं च प्रपत्त्यङ्गत्वाकारेणोत्सृज्येत्यर्थ इति। இந்த निष्कर्षम्, उक्तविधया धर्मत्याग परकृत्स्नवचनार्थनिष्कर्षम् - एवं स्वनिष्कर्षस्य दिव्यसूरिपरिग्रहमपि दर्शयति - செய்யாதவை इति-अकार्यं न कुर्मः -

**मू - தீக்குறளை சென்றோதோம்'' என்றும் ''செய்யேல் தீவினை யென்றருள் செய்யும்'' என்றுமருளிச் செய்தார்கள். ''நாயினேன் செய்த குற்றம் நற்றமாகவே கொள் ஞாலநாதனே'' என்றதுக்கும் तात्पर्यத்தைப் பார்த்தால் क्षमिக்க வேண்டுமென்று अपेक्षितத்த படியாகையாலே प्रपन्नனுக்கு अपराधं புகுந்தால் ''अज्ञानादथवा ज्ञानादपराधेषु सत्स्वपि। प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम्'' என்கிறபடியே क्षमै கொள்ள प्राप्तम् -**

(सा.दी) தீக்குறளை, क्रूरமான கோள்சொல்லுகை. செய்யேல் इत्यादि। செய்யேல், செய்யாதே கொள்-தீவினை, क्रूरकर्मங்களையென்று कृपै பண்ணும். நற்றம், गुणम्। நாயினேன் इत्यादिக்கும் क्षमिக்கவேணுமென்கையிலே तात्पर्यम्। गुणமாக स्वीकरि என்று अर्थமன்று - இவ் अर्थத்துக்கு प्रमाणानुग्रहமுமுண்டென்கிறார் - अज्ञानाद थवेति - இச் क्षामणமாக पुनः प्रपदनமும் अधिकारिविशेषिத்தென்கிறார் -

(सा.स्वा) பண்ணோம் - தீக்குறள் - தீ, क्रूरமான-குறள், सूक्तिகளை. असच्छास्त्रங்களை என்றபடி - சென்று, கிட்டிப்போய். गुरूपसर्पणं பண்ணி - ஓதோம், अध्ययनं பண்ணோம் - செய்யேல் इत्यादि-தீவினை, क्रूरपापத்தை - செய்யேல், பண்ணாதே. என்றருள்செய்யும், कृपै பண்ணுமென்கை - இப்படியாகில் நாயினேனென்கிறபாட்டில் निषिद्धानुष्ठानமும் समीचीनंமென்கிறது विरोधिயாதோ? என்னவருளிச்செய்கிறார் - நாயினேன் इति। ஞாலநாதனே, जगत्த்துக்கு नाथனே - நாயினேன் செய்த, அடியேன் பண்ணின - குற்றத்தை, निषिद्धத்தை - நற்றம், गुणम्, उपचारமாக - கொள், अङ्गीकरिத்தருளவேண்டுமென்கை - तात्पर्यத்தைப்பார்த்தால் क्षमिக்க வேண்டுமென்று अपेक्षितத்தபடியாலேயென்று निष्कर्षिக்கக் கூடுமோ? शब्दस्वारस्यமில்லையே? என்ன प्रमाणानुगुण्यத்தாலே क्षमिக்கவேணுமென்று गाधातात्पर्यமென்றருளிச்செய்கிறார் - अज्ञानादिति - बहुष्वप्यपराधेषु सत्सु प्रतिनिमित्तं प्रायश्चित्तं मास्तु-एका प्रार्थनैव, केवलं, மிகவும் प्रायश्चित्तमतिशयितं प्रायश्चित्तமென்றபடி -

(सा.प्र) अकृत्यं न कुर्मः - தீக்குறளைச் சென்றோதோம், क्रूरवाक्या दीनि कस्यचित्समीपे गला न ब्रूमः - पैशुन्यं नाचराम इत्यर्थः செய்யேல் தீவினை யென்றருள் செய்யும் इति-शङ्खचक्र गधादरस्सर्वस्वामी परमदयालुरस्मत्स्वामी क्रूरकार्याणि न कुर्वति कृपां कुर्यादित्यर्थः - एवं निषिद्धा नामनुष्ठेयत्वे दिव्यसूरिवचनान्युपादाय तेषामेव वनान्तरर्थिन्यिथानुप पत्त्यापि निषिद्धानां परिहर्तव्यत्व माह - நாயினேன் इत्यादिना-अविलजग त्स्वामिन्न ज्ञेनाति नीचेन -

(सा.वि) தீக்குறள். क्रूरवाक्यानि। சென்றோதோம், न ब्रूमः, செய்யேல் தீவினையன்றருள் செய்யும். தீவினை, क्रूरपापानि। செய்யேல், मा कुरु। என்ன, इति। அருள் செய்யும், कृपां कुर्यात् - நடிணு? नडिनु!? दिव्य सूरीणामेव वचनान्तरे अपचाराणामुपचारत्वेन प्रार्थनात्तद्विरोधइत्याशङ्क्य तद्वचनस्यापि क्षमाकरण एव तात्पर्यम् - नतु गुणत्वे - अतो न विरोध इत्याह। நாயினேன் செய்த इति। நாயினேன் செய்த குற்றம் நற்றமாகக் கொள்ளும் ஞாலநாதனே. நாய், जिह्वया। நான் செய்த குற்றம், मयाकृतं दोषं ஞாலநாதனே, हे जगत्पते। நற்றமாக, गुणत्वेन। கொள்ளு, स्वीकुरु -

(सा.सं) செய்யேல், क्रूरपापानि न कार्याणि - सूक्त्यन्तरनिद्धामुक्तनिष्कर्षविपरीतप्रतीतिं समाधत्ते। நாயினேன் इति। நற்றம், उपचारम्, तात्पर्यं பார்த்தால் क्षमै கொள்ள प्राप्तमिति -

**मू - प्रायश्चित्तान्तराशक्तः कालक्षेपाक्षमोऽपि वा।**
**पुनः प्रपद्यते नाथमभिन्दन्लोकसङ्ग्रहम्॥**

**मुमुक्षुत्व**மே அடியாக **बुद्धिपूर्वनिषिद्ध**ங்கள் புகுராவென்னும் **वार्त्तै**யும் **''विद्यते ब्राह्मणे दमः''** என்னுமாப்போலே **औचित्य**த்தாலே சொன்னபடியத்தனை. -

(सा.दी) प्रायश्चित्तान्तरेति - प्रायश्चित्तान्तराशक्तனொருவன். शक्तत्वेऽपि कालक्षेपाक्षम னொருவன் - अभिन्दन् लोकसङ्ग्रहமாவது शक्तனும் कालक्षेपाक्षमனுமாகில் लोकसङ्ग्रहार्थं प्रतिपदोक्त प्रायश्चित्तंத்தையும் பண்ணக் கடவன் என்று கருத்து. मुमुक्षुவுக்கு बुद्धिपूर्वोत्तराघं புகுறாது. प्रायश्चित्तமென்றென்னிலருளிச் செய்கிறார் - मुमुक्षुत्वமே அடியாக इत्यादिயால் औचित्यத்தாலே என்னுமத்தை -

(सा.स्वा) இப்படியாகில் पूर्वमपराधपरिहारத்திலே शक्तனுக்கு प्रतिपदोक्तप्रायश्चित्तं பண்ண வேண்டுமென்றும், शिष्टतया व्यपदेश्यனுக்கும், प्रतिपदமே பண்ணவேண்டுமென்றும் சொன்னது विरोधिயாதோ? என்ன, प्रपदनमशक्त विषयமாகையாலே विरोधமில்லையென்கிறார் - प्रायश्चित्तेति - प्रायश्चित्तान्तरे, प्रतिपदे। अशक्तः - शक्तौ सत्यामपि प्रतिपदस्य बहुकाल साध्यत्वे विलम्बाक्षमश्चेदपि नाथं पुनः प्रपद्यते - अभिन्दन् लोकसङ्ग्रहम्, लोकसङ्ग्रहमभिन्दन् सन् - व्यपदिष्टश्चेल्लोक सङ्ग्रहभेदस्स्यात् - अतः अव्यपदिष्टाधिकारि என்றபடி - व्यपदिष्टश्चेत् स्वात्मसाक्षिकं प्रपदन प्रायश्चित्तं कृत्वा लोकसङ्ग्रहार्थं दीर्घकालसाध्यमपि प्रतिपदं कुर्यात् என்று கருத்து - இப்படியாகில் मुमुक्षुவுக்கு बुद्धिपूर्व निषिद्धं புகுராதென்று पूर्वाचार्योक्ति विरोधिயாதோ? என்னவருளிச் செய்கிறார் - मुमुक्षुत्वமே इति - औचित्यத்தாலே என்று पूर्वाचार्यवाक्यத்தை अन्यथाकरिக்கைக்கு निदानமுண்டோ? -

(सा.प्र) मया कृतमपराधमुपचारतया स्वीकुर्विति गाधाखण्डार्थः - नन्वेनं सति प्रतिपदोक्त प्रायश्चित्तविधि वैय्यर्थ्यं स्यादित्यत्राह - प्रायश्चित्तान्तरेत्यादि - ननु तापत्रयाभिहत्या सांसारिकसुखानामल्पास्थिरत्व, दुःखमिश्रत्व, दुःखोदर्कत्वादि दोषानुसन्धानेन चोत्पन्नवैराग्यपूर्वकं प्रपन्नानां निषिद्धानुष्ठानमेव नोपपद्यत इति कैश्चिदुक्तेः प्रपन्नापराधप्रायश्चित्तविधानं शास्त्रेषु न विवक्षितमित्यत्राह। मुमुक्षुत्वமே इत्यादि ''विद्यते गोषु संपन्नं विद्यते ब्राह्मणे दमः। विद्यते स्त्रीषुतु चापल्यं विद्यते ज्ञातितो भयम्'' इत्यादिष्विव संभावना -

(सा.वि) प्रार्थनामात्रादेव अपराधपरिहारे प्रतिपदोक्त प्रायश्चित्तविधि वैय्यर्थ्यमित्यत आह - प्रायश्चित्तान्तराशक्त इति। कालक्षेपाक्षमः दीर्घ कालसाध्यकृच्छ्रचान्द्रायणादिना विलम्बाक्षमोऽपि वा। शक्तविषये कालक्षेपक्षमविषये च प्रतिपदोक्त प्रायश्चित्तविधि सार्थक्यमिति भावः। अभिन्दन् लोकसङ्ग्रहम् सङ्ग्रहाय च लोकस्य इति लोकसङ्ग्रहार्थमपि प्रतिपदोक्तं वा, पुनः प्रपदनं वा कर्तव्यमिति भावः - मुमुक्षूणां वीतरागत्वाद्बुद्धि पूर्वाघानि न संभवन्त्येवेतिं प्रायश्चित्तविधानं शास्त्रेषु विवक्षितमित्याशङ्क्याह - मुमुक्षुत्व மடியாக इति -

(सा.सं) गाधया ध्वनितार्थकथनात्क्षमस्वेति प्रार्थनैवक्षामणं सत्प्रायश्चित्तमित्यपि तयाध्वनितं स्यात् - तर्हि प्रतिपद प्रायश्चित्तादि शास्त्रानर्थवयमित्यत्राह। प्रायश्चित्तेति - सम्भाविते पूर्वादि प्रतिपदोक्त शक्तौ तस्य स्वल्पकाल ??? ध्यतायां वा प्रतिपदोक्तमेव कर्तव्यम् - अन्यथा -

**मू - मुमुक्षु**வுக்கே **बुद्धिपूर्वनिषिद्ध**ங்கள் புகுந்து **परिहार**ங்கள் பண்ணுகை **महर्षि**கள் பக்கலிலும் **ऋषिप्राय**ர் பக்கலிலுமுள்படக் கண்டு போராநின்றதிறே. இ(அ)ங்ஙனன்றாகில் **उपासक**ர்களும் **मुमुक्षु**க்களாகையாலே அவர்களுக்கும் **बुद्धिपूर्वोत्तराधं घटि**யாமையாலே **उत्तराघाश्लेषं प्रामादिकविषयम् । बुद्धिपूर्वोक्तराघ**த்துக்கு **क्षन्तव्यत्व**மில்லையென்று **व्यवस्थै** பண்ணவொண்ணா தொழியும் - **उपासक**னுக்கும், **प्रपन्न**னுக்கும் **वर्णाश्रम** -

(सा.दी) स्थापिக்கிறார் मुमुक्षुவுக்கென்று - கண்டுபோரா நின்றது. शास्त्रத்திலும், लोकத்திலு மென்றபடி. मुमुक्षुவுக்கு बुद्धिपूर्वापराधं வாராதென்னுமதில் बाधकமருளிச் செய்கிறார். அங்ஙனன்றாகி லென்று துடங்கி. मुमुक्षुत्वமுண்டாகலும் उपासकனுக்கு अघं लेपिக்கும். प्रपन्नனுக்கு लेपिயாதென்ன வொண்ணாதென்கிறார். उपासकனுக்குமென்று துடங்கி.

(सा.स्वा) என்னவருளிச் செய்கிறார் - मुमुक्षुவுக்கே इति - இப்படி अङ्गीकरिயாமல் मुमुक्षुमात्रத்துக்கு अपराधं வாராதென்று சொல்லில் बाधक மருளிச் செய்கிறார். இங்ஙனன்றாகில் इति - उपासकனுக்கும் प्रपन्नனுக்கும், विहितानुष्ठानத்தில் अङ्गताभिसन्धिயும், कैङ्कर्यबुद्धिயுமென்கிற भेदं போலே निषिद्धनिवृत्तिயிலேயும் वैषम्यமில்லையோ? என்னவருளிச் செய்கிறார். उपासकனுக்கும் इति - वर्णेति । -

(सा.प्र) मात्रेण तथोक्तिरित्यर्थ: - नन्वाप्ततमानां वाक्ये संभावितततमाभिप्रायत्वोक्तिर्निर्निबन्धनेत्यत्राह - मुमुक्षुவுக்கே इत्यादि -महर्षिகள் பக்கலிலும் इत्यादि - वसिष्ठस्य चण्डालगृहभोजनतत्प्रायश्चित्तादि: - दुर्वाससोऽम्बरीष पारणाविघाताम्बरीष प्रसादनादि: । लोकसारङ्ग मुनेर्मुनिवाहनविषये शिन्लाप्रहार तत्प्रायश्चित्तादिश्चेत्यर्थ: - मुमुक्षूणां बुद्धिपूर्वोत्तराघानुदयोक्तिस्सिद्धान्तविरुद्धेत्याह - இங்ஙனன்றாகில் इत्यादिना । व्यवस्थै பண்ணவொண்ணாதொழியும், व्यवस्थाकरणमयुक्तं स्यादित्यर्थ: - ननु सत्कर्मनिरता: शुद्धा: साङ्ख्ययोगविदस्तथा । नार्हन्ति शरणस्थस्य कलां कोटितमीमपि इत्यादिभि: प्रपन्नानां भक्तेभ्योऽतिशयित प्रभाववत्वावगमात्तेषां निषिद्धानुष्ठानं न दोषायेत्यत्राह - उपासकனுக்கும் इत्यादि - परीक्षार्थमपि ब्राह्मण आयुधन्नाददीत इत्यादिर्वर्णनिमित्तकविषेध: - तांबूले भर्तृक स्त्रीणाम् ।

(सा.वि) मुमुक्षुவுக்கே इति । புகுந்து, प्राप्तेषु । महर्षीति । वसिष्टादे: चण्डालान्बभक्षण तत्प्रायश्चित्तादि - ऋषि प्रायர் பக்கலிலுமுள்பட, लोकसारङ्गमुनिप्रभृतीनामपि विषये । मुनिवाहने शिलाक्षेप तत्क्षामणादिति भाव: - கண்டுபோரா நின்றதிறே, दृष्टं सत् स्थितं खल्वित्यर्थ: - व्यवस्था । பண்ணவொண்ணாதொழியும், कर्तुमयोग्या स्यात् - परीक्षार्थमपि ब्राह्मण आयुधं नाददीतेति र्णनिमित्त निषेध: - ''ताम्बूल -

(सा.सं) पुन: प्रपत्तिरेव - अन्यतरकल्पानाश्रयणे लोकमर्यादातिलङ्घनान्निग्रहलक्ष्य एव स्यादिति न प्रतिपदोक्तत्द्यानर्थक्यमिति भाव: । अत्र शक्तौ सत्यामपि अनुतापातिशयाचिरादेव शरीरपातभयेन विलम्बाक्षमोऽपि कालक्षेपाक्षमोऽभिप्रत: - व्यवस्थै பண்ணவொண்ணாதொழியும் इति । व्यवस्था प्यस्यैवा भावादिति भाव: ।

**मू :- जाति, गोत्र, प्रवर, चरण, कुल, देशकालावस्थागुणसमयादिகளை उपाधिயாகக் கொண்டு சொன்ன -**

(सा.स्वा) ''ब्राह्मणो न सुरां पिबत् - यतिर्द्वये न पतति। स गोत्रं न निमन्त्रयीत। समानप्रवरान्नोद्वहेत् - स्वसूत्रे विद्यमाने परसूत्रेण न कुर्यात् - वकुल्यान्नाति क्रमेत् - नर्मदोत्तरे कटके उपाकर्म न कुर्यात्। एकादश्यान्न भुञ्जीत। नातुरस्स्नायात् - नान्यं देवं नमस्कुर्याद्विष्णुपादाब्ज संप्रश्रयः। शिखां पुण्ड्रं च पुत्रं च समयाचारमेवच। पूर्वैराचरितं कुर्यादन्यधा पतितो भवेत्। क्रमेण इत्यादि निषेधத்தைத் தவிருமிடத்திலென்றபடி - இப்படி निषिद्धத்தைத் தவிருமிடத்தில் वैषम्य -

(सा.प्र) यतीनाम् ब्रह्मचारिणाम्। एकैकं मांसतुल्यं स्यात्संभूयमदिरा समम्। ब्रह्मसूत्रपरित्यागाद्ब्रह्मचारी गृही वनी। परिव्राट्चापि पतति इत्यादिना श्रमनिमित्तक निषेधः - स्त्रीणां प्रत्याचक्षाणानां समाहितो ब्रह्मचारि इष्टं हुतं प्रजां पशून् ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते तस्मादुहवै ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीत - न स्वरः प्रणवोऽङ्गवनि साप्यन्यविधयस्तथा। स्त्रीणां तु शूद्रजातीनाम् इत्यादि जाति निमित्तक निषेधः - समप्रवरगोत्रं च विधुरं ब्रह्मचारिणाम्। देवार्थे वरयेद्विद्वान् पित्रर्थे वरणं त्यजेत् इत्यादिः प्रवरनिमित्तकविषेधः - बहृचाश्रवणे कुर्युश्श्रावणं नतु पर्वणि इत्यादिः चरणनिमित्तकनिषेधः - मृतबन्धोर्दशाहानि कुलस्यान्नं विषिध्यत इत्यादिः कुलनिमित्तकनिषेधः - नासु नैवाम्भसस्तीरे न श्मशाने समाचरेत्। उत्सर्गं वैपुरीषस्य मूत्रस्य च विसर्जनम् इत्यादिर्देशनिमित्तकनिषेधः - न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे इत्यादिः कालनिमित्तकनिषेधः एकादश्यान्न भुञ्जीत शक्तस्सन्निरुपद्रव इत्यादिरवस्थानिमित्तकनिषेधः - नातिकेशानु केशां वा नानिकृष्णाति पिङ्गलाम्। निसर्गतोऽधिकाङ्गां वा न्यूनाङ्गां वापि नोद्वहेत् इत्यादिः आरनालं न सेवेत कदाचिद्भगवत्पर इत्यादिश्च गुणनिमित्तकनिषेधः। अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु इत्यादिस्समयनिमित्तकनिषेधः-

(सा.वि) भर्तृकस्त्रीणां यतीनां ब्रह्मचारिणाम्। एकैकं मांसतुल्यं स्यात्संभूयमदिश समम् इत्यादि श्रमनिमित्तनिषेधः। नस्वरः प्रणवोऽङ्गानि स्त्रीशूद्राणाम् इति जातिनिमित्तनिषेधः - दानं कुर्यात् सगोत्राय कन्यादानं तु वर्जयेत् इति गोत्रनिमित्तनिषेधः। समानप्रवरां कन्यां नोद्वहेत् इति प्रवरनिमित्तनिषेधः - बह्वृचाश्श्रवणे कुर्युश्श्रावणं न तु पर्वणि इति चरणानिमित्तनिषेधः - चरणः शाखा।मृतबन्धोर्दशहानि कुलस्यान्नं निषिध्यते इति कुलनिमित्तनिषेधः - न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे इति कालनिमित्तनिषेधः। नाप्सु मुत्रपुरीषं कुर्यात् इति देशनिमित्तनिषेधः - एकादशं न भुञ्जीत शक्तस्सन्निरुपद्रवः इत्यवस्था निमित्तनिषेधः - आरनालं न सेवेत कदाचित्भगवत्परः इति गुणनिमित्तनिषेधः - अस्वर्ग्यं लोकविद्विष्टम् इति समयनिमित्तनिषेधः - न भ्रातरौ नियुञ्जीत तथा पितृ सुतावपि इति संबन्धविशेषादि -

**मू** - **निषिद्ध**ங்கள் தவிருமிடத்தில் **विशेष**மில்லை - **निषिद्ध**ங்கள் புகுந்தால் **प्रायश्चित्तं यथाधिकार**மாகையாலே **वैषम्य**முண்டு - "என்னடியாரது செய்யார் செய்தாரேல் நன்று செய்தார்" என்கிறதுவும் **अपराधं** புகுருமென்கைக்கு **लिङ्गम्** - இங்கு "செய்தாரேல் நன்று செய்தாரென்றதுக்கு **प्रामादिक**மாகப் புகுந்தால் நாமே **क्षमि**ப்புதோம். -

(सा.दी) निषिद्धं புகுந்தால் प्रायश्चित्तத்தில் वैषम्यமுண்டெடன்கிறார். निषिद्धங்களென்று. "अपि चेत्पातकं किञ्चिद्योगी कुर्यात्प्रमादतः। योगमेव निषेवेत नान्यं यत्नं समाचरेत्" என்கை - ஆகையால் वैषम्यமுண்டென்று கருத்து - प्रतिबुद्धர்க்கும் अपराधं வருமென்னுமதில் लिङ्गदर्शनமுண்டெடன்கிறார் - என்னடியாரென்று. செய்தாரேல் நன்று செய்தாரென்னும் अंशத்துக்குத் तात्पर्यமருளிச் செய்கிறார் - இங்கு செய்தாரேலென்று -

(सा.स्वा) மில்லையென்று சொன்னது கூடுமோ? அப்போது निषिद्धाचरणத்தில் उपासकனுக்கு योगं प्रायश्चित्तமென்றும், प्रपन्नனுக்கு प्रतिपादமாதல், प्रपदनமாதல், प्रायश्चित्तமென்றும் भेदं கூடாதொழியாதோ? என்னவருளிச்செய்கிறார். निषिद्धங்கள் புகுந்தால் इति - निषिद्धवर्जन-मधिकारभेदமில்லாமையாலே एकरूपமானாலும் प्रायश्चित्तमधिकारभेदवत्தாகையாலே वैषम्यமுண்டென்று கருத்து. भागवतனுக்கு अपराधं புகுராதென்னவொண்ணா தென்கையிலே युक्त्यन्तरமருளிச்செய்கிறார். என்னடியாரது செய்யார் इति - செய்தாரேலென்று சொல்லுகையாலே भागवतனுக்கும் अपराधं संभावितமென்று கருத்து - ஆனாலும் நன்று செய்தாரென்று निषिद्धத்தையும் उत्कृष्टமாகச் சொல்லுகிறது विरोधिயாதோ? என்னவருளிச்செய்கிறார் - இங்கு इति - இப்படி तात्पर्यं सङ्कल्पिக்கைக்கு निदानமெது? என்னவருளிச் செய்கிறார் -

(सा.प्र) न भ्रातरौ नियुञ्जीत श्राद्धे पितृसुतावपि इत्यादिरादिशब्दार्थः। विशेषமில்லை, उपात्तवचनेषु भक्तप्रपन्नवाचक पदविशेषाभावादिति भावः। नन्वेवं निषिद्धानुष्ठाने भक्तप्रपन्नयोः प्रत्यवाय तौल्यप्रायश्चित्त तौल्यमपि स्यादित्यत्राह। निषिद्धंங்கள் इत्यादि - एवं प्रपन्नानां निषिद्धानुष्ठानसद्भावे शब्दरूपं प्रमाणं "ऋषि प्रायர் பக்கலிலும் காணாநின்றதிறே" इति प्रदर्श्य लिङ्गमप्याह - என்னடியார் इत्यादिना मद्दासा अकृत्यं न कुर्युः - यदि कुर्युस्समीचीन सेवाकुर्वन्नीत्यर्थः - नन्वेवं भागवतानां निषिद्धानुष्ठानं भगवान् समीचीन तया स्वीकरोतीत्येतत्प्रपन्नानामुपक्लेशबोधक प्रमाण विरोधीत्यत्राह। இங்கு செய்தாரேல் इत्यादि -

(सा.वि) निमित्तनिषेधः आदिशब्दार्थ इति द्रष्टव्यम् - विशेषமில்லை, उपात्तवचनेषु भक्तानामेव न प्रपन्नानामिति विशेषबोधकाभावादित्यर्थः - नन्वेवं निषिद्धानुष्ठाने भक्तप्रपन्नयोः प्रायवायतौल्ये प्रायश्चित्ततौल्यमपि स्यादित्यत्राह। निषिद्धங்கள் इत्यादि। "अपि चेत्पातकं किञ्चिद्योगी कुर्यात्प्रमादतः। योगमेव निषेवेत नान्यं यत्नं समाचरेत् इति विशेष विधानादिति भावः - प्रपन्नानामपि प्रत्यवायोऽस्तीत्यत्र ज्ञापकमाह - என்னடியார் इति - என்னடியார், अस्मद्दासाः। அது, तत्पापम्। செய்யார், न कुर्वन्ति। செய்தாரேல், कुर्वन्ति चेत् - நன்று, समीचीनम्। செய்தார், अकुर्वन्। புகுருமென்கைக்கு, प्राप्नोतीत्यस्य। लिङ्गम्, ज्ञापकम्। புகுந்தால், प्राप्नोति चेत् - நாம், वयमेव -क्षमिப்புதோம், क्षमामहे। -

(सा.वि) भक्त प्रपन्नयोर्निषिद्ध प्रवृत्तौ भेदाभावे प्रायश्चित्तेऽपि भेदो न स्यादित्यत्राह - निषिद्धங்கள் इति -

**मू - बुद्धिपूर्वक**மாகப் புகுந்தால் அவர்கள் **क्षमै** கொள்ளாதவளவிலும் **शिक्षाविशेष**ங்களாலே நாம் **शमि**ப்புதோம். "ஒரு படிக்கும் நாம் கைவிடோம்" என்று **तात्पर्यम् - "**நன்று செய்தாரென்பர் போலும்" என்று சொல்லுகையாலே இது, **वस्तुवृत्ति**யில் நன்றன்றென்னுமிடம் **सूचितम् । -**

(सा.दी) இது वस्तुवृत्त्या நல்லதன்றென்று विवक्षितமென்னுமதில் लिङ्गமருளிச் செய்கிறார் - நன்று செய்தாரென்பர் போலும் इत्यादिயால் - என்பர் போலுமென்னத்தால் वस्तुवृत्या திருவுள்ள மல்லவென்று தோற்றும் - बुद्धिपूर्वोत्तराघं प्रपन्नனுக்கு लेपिயாதென்றுமவனுக்கு अभिप्रायமென்? बुद्धिपूर्वोत्तराघத்தில் ईश्वरனுக்கு निग्रहेच्छै उदिயாதென்றோ? निग्रहेच्छै யுண்டாகிலும், फलமில்லையென்றோ? ईश्वरனுக்கு प्रीत्यभावमात्रं பிறக்கும் कर्ताவுக்கு प्रत्यवायமில்லையென்றோ? ईश्वर प्रीत्यभावमूलமாய் தனக்கும் प्रीत्यभावमात्रं பிறக்கும் प्रत्यभाव மில்லையென்றோ? என்று चतुर्धाविकल्पिத்து -

(सा.स्वा) நன்று इति - நன்று, उत्कृष्टम् - "सर्वपापेभ्यो मोक्षयिष्यामि" என்று प्रपन्नனுக்கு बुद्धिपूर्वोत्तराघமும் सर्वशब्दासङ्कोचात्क्षन्तव्यமென்று தோற்றுகையாலே लिङ्ग दर्शनमात्रத்தாலே सर्वशब्द सङ्कोचं கூடுமோ? क्षापण शास्त्रं भक्तविषयமென்று சொல்ல வேண்டாவோ? என்ன प्रपन्नனுக்கு उत्तराघं लेपिயாதென்னுமவனுக்கு प्रपन्नविषयத்தில் ईश्वरனுக்கு निग्रहेच्छै उदिயாதென்று तात्पर्यமோ? निग्रहेच्छै उदिத்தாலும் निग्रहफलமில்லையென்று तात्पर्यமோ? ईश्वरனுக்கு प्रीत्य भावमात्रं பிறக்கும் कर्ताவுக்கு प्रत्यवाय மில்லையென்று तात्पर्यமோ? कर्ताவுக்கு प्रीत्यभावமுண்டென்று तात्पर्यமோ? என்று चतुर्धा विकल्पित्து प्रथमविकल्पத்தை दूषिக்கிறார் -

(सा.प्र) போலும், इवेत्यर्थः - इव शब्दश्चाविद्वानिव किं मौनीत्यादीषु समभिव्याहृतपदार्थपारमार्थ्य ज्ञापकत्व वदत्रापि सामीचीन्याभावज्ञापक इति भावः । ननु भक्तप्रपन्नव्यतिरिक्तेषु प्रत्यवाय जनकस्याप्यबुद्धिपूर्वाघस्य भक्तेषु प्रपन्नेषु च तज्जनकत्वाभाववद्भक्तेषु प्रत्यवाय जनकस्यापि बुद्धि पूर्वाघस्य प्रपन्नेषु तज्जनकत्वं मास्त्वित्यत्र प्रपन्नमधिकृत्यैव प्रायश्चित्त -

(सा.वि) क्षमैகொள்ளாதவளவிலும், क्षम्यते न वा, क्षमा, साधनं तस्याः - கொள்ளாதவளவிலும், स्वीकराभावमर्यादायामपि । शिक्षा विशेषங்களாலே நாமே क्षमिப்போம், अप्रीतिं परिहरामः - ஒருபடிக்கும், एकस्यापि प्रकारस्य । நாம், वयम् । கைவிடோம், हरतं न त्यजामः । सर्वदा रक्षिष्याम इति तात्पर्यம் । நன்று செய்தார் इत्यस्य अङ्गीकार एव तात्पर्यम् किं न स्यात्? इत्यत आह । நன்று செய்தாரென்பர் போலும் इति । अविद्वानिव मौनीवेत्यादाविव शब्दस्य समभिव्याहृत पदार्थस्यापारमार्थ्यज्ञापकत्वात्तदर्थकः போலும் इति शब्दस्सामीचीन्याभावज्ञापक इति भावः । अत्र बुद्धिपूर्वोत्तराघं प्रपन्नं नाश्लिष्यतीति वदतः कोऽभिप्रायः? बुद्धिपूर्वोत्तराघे सत्यपीश्वरस्य निग्रहेच्छा न जायत इति विवक्षितम्? उत निग्रहेच्छायां सत्यामपि फलं नास्तीति - आहोस्विदीश्वरस्य प्रीत्यभावमात्रमुत्पाद्यते -

(सा.सं) நன்று इति ।कण्ठतस्सामीचीन्योक्तेः कथमेवं तात्पर्यवर्णनमित्यत्राह - நன்று செய்தாரென்பர் போலும் इति - सूक्त्यन्तराविरोधाय तथा तात्पर्यवर्णनमिति भावः । -

**मूलं - विपरिणतिरस्त्वद्भुतमिदं ततोऽप्येतच्चित्रं यदुतंदहनस्यैव हिमता। -**

(सा.दी) रामावतारத்திலும், कृष्णावतारத்திலும், சிலை, கரி, முதலானவற்றுக்கு स्त्रीत्वपुरुषत्वादि विपरिणतिகள் கண்டுளதே - शिलारूपैயான अहल्यै स्त्रीत्वத்தைப் பெற்றாளிறே - उत्तरागर्भமான கரி पुंस्त्वத்தைப் பெற்றதிறே - इदமென்று अद्भुतापेक्षैயான पुंसकत्वं - शिलादेः स्त्रीत्वादिर्या विपरिणतिरिदमद्भुतमस्तु ततोऽप्येतच्चित्रम् - இத்தைப் பற்றவும் वक्ष्यमाणं महाद्भुतமென்கிறார் - அதெதென்னில்? दहनस्यैव हिमतेति यत् - இது प्रह्लादविषयத்தில் -

(सा.स्वा) तत्पादम्बुजस्पर्शात् स्त्रीत्वपरिणतिः - आदिशब्देन श्रीकृष्णावतारे उत्तरागर्भोद्गीर्णस्य दग्धदारुखण्डस्य श्रीकृष्णपादारविन्दस्पर्शात्पुंस्त्वेन परिणतिः गृह्यते - यद्वा, रामावतार एव मृतब्राह्मणकुमारस्य सञ्जीवनं गृह्यते - अद्भुतम्। लोकदृष्ट विसजातीयतयाद्भुतत्वमित्यद्भुतविशेषणं प्रत्यक्षसिद्धपरम् - स्त्रीत्वादिना परिणतिः प्रत्यक्षसिद्धमद्भुतमस्त्वित्यन्वयः - दहनस्यैव हिमता, प्रह्लादविषये दहनस्यैव हिमता भगवत्सङ्कल्पसिद्धा - हनुमद्वालगतवह्नेरीश्वरकोट्यन्तर्गत विशेषणीभूत श्रीसङ्कल्पेन वह्नित्वविरुद्धशीतस्पर्शाश्रयत्वरूपहिमता प्रत्यक्षसिद्धा - श्लोकान्ते विद्यमानः इतिशब्दः सर्वत्रानुषज्यते - उतशब्दः खलु पर्यायः - हिमतेति यत्प्रसिद्धमेतत्ततोऽपि चित्रमित्यन्वयः -

(सा.प्र) परीक्षित्वादि आदिशब्दार्थः - नन्ववस्थान्तरं विहायावस्थान्तरं प्राप्तेर्मृत्पिडादौ दृष्टत्वादद्भुतत्वं कथमितिचेदित्थम् - शिलात्वावस्थां विहाय स्त्रीत्वावस्थाप्राप्तेः पक्षभूतैकव्यतिरिक्ते कुत्राप्यदर्शनात् - एवमपि दहनहिमत्वादिषु चित्रतमत्वं कथमितिचेत्पूर्वत्रावस्थान्तरापगमपूर्वकमेवावस्थान्तरप्राप्तिरूपतया अत्यद्भुतत्वादिति भावः - अत्र विरोध्यवस्थासद्भावेऽपि तद्विरोध्यवस्थाव्याप्यधर्मवत्वस्य कुत्राप्यज्ञातचरित्वाद्द्भुततमत्वमिति भावः - इदञ्चावधारणचतुष्टयेण ज्ञेयम् - ननु दहनस्यैव हिमत्वं व्याहतम् - विरुद्धधर्मव्याप्ययोरवस्थयोरेकस्मिन्काले एकद्रव्यनिष्ठत्वानुपपत्तेरिति चेन्न - पञ्चीकरणेन सर्वेष्वपि द्रव्येषु -

(सा.वि) यदिति शेषः - इदमद्भुतमस्तु, आदिशब्देनाऽङ्गालस्योत्तरागर्भसंभूतस्य भगवत्पादस्पर्शात्परीक्षिदात्मना परिणाम इत्यस्य ग्रहणम् - इदमेकमद्‌भुतम्। नैतन्मात्रम्। इतोऽप्यधिकमद्भुतमस्तीत्याह। ततोऽप्येतच्चित्रमिति - दहनस्यैव हिमता, प्रह्लादस्य पितृप्रहिताग्निज्वाला हिमवत्स्थितेति यदुत एतत्ततो विचित्रं शिलादेस्त्रीत्वादेश्चित्रमित्यन्वयः -

(सा.सं) परिणमरूपं प्रथममाश्चर्यमास्तां नाम - आदिशब्देन ब्रह्मास्त्रदग्धोत्तरागर्भस्य अभिनवरमणीय कुमारभावादिर्गृह्यते - ततोऽपीति - पूर्वावस्थाप्रहाणेनोत्तरावस्थाप्राप्तिरूपं हिमवदिति भावः - श्रीमत एव सिद्धोपायत्वाद्विशेषणविशेष्योभयसाधारणोऽयं प्रभावो ज्ञेयः - अत्र तावत् पूर्वावस्थायां सत्यामेव तद्विपरीताकारयोगः - विशेषणांशप्रभावात्पवनतनयवालसंबन्धयग्नेश्शीतता। विशेष्यांश प्रभावात्प्रह्लादविषये - यदुतेत्यस्य अपिचेत्यर्थः -

**मूलं - तृणस्यैवास्त्रत्वं रिपुषु निहतेरेव हितता पदत्रेणैवेह त्रिभुवनपरित्राणमिति च ।।५७।।**

(सा.दी) तृणस्यैवास्त्रत्वं, काकविषयத்தில் - रिपुष्वित्यादि - आश्रितविरोधिविषयத்தில், निहतेः, हननस्यैव - हितता, निरसनமே हितமாக फलिக்கை, पदत्रेणेत्यादि - திரு अयोध्यैயில் अभिषिक्तமான स्वपादुकयुगलத்தாலே त्रिभुवनपरित्राणमिति च यत् - இவைகள் ततोऽपि विचित्रங்கள் - இப்படிப்பட்ட प्रभावத்தையுடைய सिद्धोपायத்துக்கு प्रारब्धांशनिवर्तनத்தில் ஆருக்குத்தான் सन्देहமுண்டாமென்றுகருத்து. ।।५७।।

वक्ष्यमाणार्थसङ्गति प्रदर्शनार्थं पूर्वाधिकारोक्तத்தை अनुवदिக்கிறார் -

(सा.स्वा) तृणस्यैव काकासुरविषये अस्त्रत्वम् - यदुत, यत्प्रसिद्धं एतच्च ततोऽपि चित्रमित्यन्वयः - उत्तरत्र विद्यमानश्चकारः पूर्वत्रद्वयोरप्यनुषज्यते - एतदित्यस्याप्यनुषङ्गः - रिपुषु, कबन्धविराधयमलार्जुनादिषु - निहतेरेव हितता, इष्टसाधनतेति यत्प्रसिद्धम् । एतच्च ततोऽपि चित्रमित्यन्वयः - पदत्रेणैव, दारुरूपाभ्यां भगवत्पादुकाभ्यामेव श्रीमदयोध्यायां त्रिभुवनपरित्राणमिति यत्प्रसिद्धम् - एतच्च चित्रमित्यन्वयः - अत्र आद्ये पिण्डत्वावस्थाप्रहणेन घटत्वावस्थाप्राप्तिवच्छिलात्वावस्थाप्रहाणेन स्त्रीत्वादिपरिणामस्य सादृश्याभावेनात्यन्तविसदृशावस्थारूपतयाद्भुतत्वम् - अनन्तरचतुष्टये तु एवकारद्योतितवह्नित्वादि विरुद्धधर्म सत्व एव तद्विरुद्धधर्मप्राप्तिघटनाप्रतीत्या चरमोदाहरणे अचेतनपदत्रस्येश्वरकार्यत्रिभुवनसंरक्षकत्व प्रतीतेश्च ततोऽप्येतच्चित्रमित्युक्तम् - இப்படி भगवत्प्रभावमतिविचित्र மாகையாலே तद्विषयक प्रपत्त्यादेरेपि गुरुतर भक्तियोगादिष्वप्यदृष्टप्रारब्धनिवर्तकत्वानुषङ्गिकपङ्क्तिपावनत्वादिसाध कत्वादिप्रभावोऽपि निरातङ्कस्सिद्ध्यतिயென்று கருத்து ।।५७।।

இனி भविष्यन्निरूपणத்துக்கு पौनरुक्त्यपरिहारार्थமாக अधिकारங்களுக்கு अर्थभेदத்தை सूचिப்பியா நின்றுகொண்டு सङ्गत्यर्थं वृत्तानुवादपुरस्सरं वर्तिष्यमाणத்தை उपक्षेपिக்கிறார் -

(सा.प्र) पञ्चानामपि भूतानां विद्यमानत्वादचेतनमणिमन्त्रौषधादेरपिवह्निदाहकत्वशक्ति प्रतिबन्धकत्वदर्शनात् ''इश्वरीगँ सर्वभूतानाम्'' इत्यादिषु सर्वनियन्तृत्वेनावगतायाश्श्रियो वह्निनियमनस्यापि सिद्धेर्वह्नेर्दाहकत्वशक्तिप्रतिबन्धपूर्वकतत्सृष्टजलगतशैत्यप्रकाशनमुपपद्यत इति न व्याहतिरिति भावः ।।५८।।

एवं श्लोके विवक्षितं विस्तरेण प्रतिपादयितुं वृत्तकीर्तनपुरस्सरं वक्ष्यमाणस्य सङ्गतिमाह । -

(सा.वि) तृणस्यैवास्त्रत्वं, काकासुरविषये द्रष्टव्यम् - रिपुषु निहतेरेव हितता, हननमेव श्रेयस्साधनम् - तथापदत्रेणैव, पादुकयैव । त्रिभुवन परित्राणं, लोकत्रयपरिपालनम् । इत्येतान्युत्तरोत्तरमद्भुतचित्राणि प्रसिद्धानि - एतादृशमहिमशालिनः किमसाध्यमिति भावः ।।५७।।

(सा.सं) काकविषये तृणस्यैवास्त्रत्वं - रिपुषु कबन्धयमलार्जुनादिषु हननस्यैव हिततया परिणतिः - इह, अस्मिंल्लोके - पदरक्षिण्या जगत्त्राणं यत्तदिदं सर्वमतिविचित्रमित्यर्थः ।।५७।।

प्रभवाधिक्यानुबन्धि मतिकालुष्ये निरस्तन्न्यूनता प्राप्तौ तदनुबन्धिमतिकालुष्यमपि -

**मूलं - उपायप्रभावव्यवस्थै** சொன்னோம் - **இனிமேல் उपाय प्रभाव**த்தை **सङ्कुचित**மாகப் பார்த்துவரும் தப்புகள் **परिहरि**க்கிறோம் - **''अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते''** என்கிற கணக்கிலே

**''उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी।**
**साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी॥''**

**என்கையாலே प्रारब्धங்களையும் கூட அமுக்கித்தன் फलத்தையும் கொடுக்கவத்தான प्रपत्ति**யைப் பண்ணினவனுக்கு -

(सा.दी) उपायेत्यादि - वक्ष्यामाणाधिकारार्थத்தை सङ्ग्रहेणகாட்டுகிறார் - இனிமேல் उपायेति। இதில் शङ्कोत्थापनार्थமாக ஒரு अर्थविशेषத் अनुवदिக்கிறார் - अत्युत्कटेत्यादिயால் - अतिप्रबलपुण्यங்களாலும் पापங்களாலும் இந்த जन्मंதன்னிலே फलंபெறு வரென்கை. उपायरूपैயான भक्ति उपायभक्ति - அதாவது भक्तियोगं - साध्यभक्तिर्यया सा साध्यभक्तिः - प्रपत्तिயென்றபடி. இது महाप्रभावैயாகையால் प्रारब्धांशத்துக்கும் हन्त्री, नाशिकैயாம். அமுக்கி, नशिப்பித்தென்றபடி -

(सा.स्वा) उपायेति - இனி सिद्धान्त्यभिमतத்தை अनुवदिத்து तन्निराकरणपूर्वकமாக उपायप्रभाव सङ्कोचवादिमत प्रक्रियैயை अनुवदिக்கிறார் - अत्युत्कटैरित्यादिना வரையிட்டு பார்ப்பர்கள் इत्यन्तेन - प्रपत्तिக்கு प्रारब्धनिवर्तकत्वं ஓரிடத்திலும் धर्मங்களிலே காணாமையாலே கூடுமோ? என்கிற शङ्कावारणार्थम् अत्युत्कटैरित्यादि - ஒரு धर्मங்களிலும் காணாத ऐहिकफलप्रदत्वमत्युत्कट पुण्यादिகளுக்கு சொல்லுகிறாப்போலே இதுவும் उपपन्नமென்றுகருத்து -

(सा.प्र) उपायप्रभावेत्यादिना - ननु प्रपत्तेरप्यलौकिकश्रेयस्साधनत्वात्तेषां च देहान्तरानुभाव्य फलजनकत्वदर्शनाद्भरन्यासस्य देहान्तरानुभाव्यप्रारब्धनाशकत्वेऽप्युपात्तदेहानुभाव्यदुःख नाशकत्वमुपात्तदेह नाशकत्वं च नोपपद्यत इत्यत्रालौकिकश्रेयस्साधनेष्वप्युत्कटानां तेषामैहिकफल साधनत्वन्यायादार्तेष्वार्त्यानुगुण्येन सर्वेषां प्रारब्धानां निवर्तकत्वरूपं प्रभावं प्रदर्शयन् तस्य रहस्यत्रये प्रतिपादकांशमप्याह - अत्युत्कटैरित्यादिना -

(सा.वि) वृत्तकथनपूर्वकं वर्तिष्यमाणं प्रतिजानीते। उपायेति - பார்த்து வரும் தப்புகளை, उपाय प्रभावं सङ्कुचितं मत्वा क्रियमाणशङ्काः - ननूपायप्रभावे सिद्धे प्रभावाधिक्य प्राप्तजाति निवृत्त्यादि शङ्काः परिहर्तव्या इत्येतदानन्तर्यमेव प्रभावव्यवस्थाया युक्तमिति चेत्सत्यम् - प्रभावव्यवस्थायाः कष्टसाध्यत्वात्प्रथमं प्रभावं सिद्धवत्कृत्यव्यवस्था कृता - इदानीं स एव प्रभावो न सिद्ध्यतीत्याक्षिप्य स्थिरीक्रियत इत्याक्षेपिकी सङ्गतिरित्याशयः - प्रपत्तेः प्रारब्धनाशकत्वं न संभवतीति शङ्कोत्थापनाय सिद्धान्तस्थितिमाह - अत्युत्कटैरिति - प्रारब्धकर्मங்களையும் கூட, प्रारब्धकर्मभिस्सह - அமுக்கி, सर्वकर्माणि मज्जयित्वा। தன் फलத்தையும், तत्फलमनुभवकैङ्कर्यमपि - கொடுக்கவற்றான, प्रददतीम्। प्रपत्तिயை, प्रपत्तिम्। பண்ணினவனுக்கு, कृतवतः।

(सा.सं) निरसनीयं प्रसक्तमिति सङ्गतिमभिप्रेत्य पूर्वाधिकारार्थमनुवदति - उपायेति - तत्र परपक्षमनुवदितुं माशुच इति वाक्याभिप्रायोक्तिमुखेन प्रमाणोपपत्तिसिद्धं प्रपत्तिप्रभावं तावदाह। अत्युत्कटैरित्यादिना -

**मूलं - विद्यान्तरन्याय**த்தாலே **उत्तरपूर्वाघ**ங்களும் இவ்**विद्यै**க்கு தன்னேற்றமான **सामर्थ्य**த்தாலே **प्रारब्धकर्मफल**த்தைப் பற்றவுண்டான **आर्ति**யிலே எல்லைக்கீடாக **क्षणान्तर, दिवसान्तर, जन्मान्तराद्यनुवृत्ति**யும் கழியக்கடவதென்று "**मा शुचः**" என்கிற **वाक्य**த்துக்கு **अभिप्रायम्** - இவ் **अर्थ तत्त्व**மாகில் **प्रारब्धकर्म विशेषफल**மாய்க் கொண்டுவருகிற **दुःख**ங்களும் **दुःखकारण**ங்களான **कर्म**ங்களினுடைய **आर्जन**மும் கழியவேண்டாவோ? **आर्त**னாய் **पुरुष**ன் **अर्थि**க்கக் கொடுக்கவேணுமென்னில் **आनुषङ्गिक**மான -

(सा.दी) இதில் शङ्कैயைக் காட்டுகிறார் - இவ்अर्थ तत्त्वமாகில் इत्यादिயால் - அதில் सिद्धान्ति शङ्कि்க்கிறான் - आर्तனா யென்றுதுடங்கி - அதாவது இச்शरीरानुवृत्तिहेतुவான प्रारब्धத்தின் निवृत्तिயை இவன் अर्थिயாமையால் तदेकदेशமான पापத்தையும் तत्फलத்தையும் निवर्तिப்பிக்கையில்லை யென்கை - शङ्कகனுக்கு उत्तरं சொல்லுகிறார். आनुषङ्गिकமான इत्यादिயால் - आनुषङ्गिकम्, अवान्तरफलम् -

(सा.स्वा) माशुच इति वाक्यத்துக்கு अभिप्रायमित्यन्तं सिद्धान्तानुवादम् - अर्थमित्यारभ्य सिद्धान्त निरासपूर्वकमुपाय प्रभावसङ्कोच वादि प्रक्रियानुवाद மென்றபடி -

(सा.प्र) एवं तत्त्वस्थितिमभिधाय तद्विषये केषाञ्चिद्व्यामोहमनूद्य परिहरति - இவ் अर्थம் तत्त्वமாகில் इत्यादिना - இவ் अर्थ तत्त्वமாகில், प्रपत्तेरैहिकानिष्टानामपि निवर्तकत्वरूपप्रभाववत्त्वे -

(सा.वि) தன்னேற்றமான सामर्थ्यத்தாலே, स्वासाधारणाधिकसामर्थ्येन - आर्तिயில், आर्त्याम् - எல்லைக்கு, मर्यादायाः - ஈடாக, आनुगुण्येन। आर्तितारतम्येन - क्षणान्तर दिवसान्तर जन्मान्तराद्यनुवृत्तिயும், क्षणान्तरदिवसान्तर जन्मान्तराणि विद्यान्तरसाधारण्येनोत्तरपूर्वाघाणि च। கழியக்கடவது, निवृत्तानि भवन्ति - என்று, इति माशुचः என்கிற वाक्यத்துக்கு अभिप्रायम्, अभिप्राय इत्यन्वयः। विद्यान्तरन्यायेन पूर्वोत्तराघाणि विनष्टान्यश्लिष्टानि च भवन्ति - एतद्विद्याया असाधारणसामर्थ्येन प्रारब्धकर्मफलतया प्राप्तार्तितारतम्येन कस्यचित्प्रपत्तिक्षणानन्तरमेव मोक्षस्स्यादितीच्छायां क्षणान्तरं निवर्तते। उत्तरक्षण एव मोक्षो भवति - एतद्दिवसानन्तरं स्यादितीच्छायां दिवसान्तरं निवर्तते - एतच्छरीरान्ते स्यादितीच्छायां जन्मान्तरं निवर्तते - यथेच्छति तथा भवतीति प्रारब्ध भञ्जकत्वं सम्भवतीति भावः - एवं सिद्धान्तस्थितौ सत्यां तदिच्छां विना सद्य एव प्रारब्धनिश्शेषनिवृत्तिः कथं न भवतीति शङ्कते - இவ் अर्थमित्यारभ्य வேண்டாவோ इत्यन्तेन - शरीरानुवृत्ति हेतु प्रारब्धं न निवर्तयतीति तदुपरि सिद्धान्तपरिहारं शङ्कते - आर्तனாய் इति - तदिच्छां विनाप्यानुषङ्गिक पङ्क्तिपावनत्वादिवदीश्वरमाहात्म्यात्तन्निवृत्तौ किं प्रतिबन्धकमिति परिहरति। आनुषङ्गिकமான इति।

(सा.सं) यथोपासनविशेषसन्निधावेव पठितमश्लेषादीतरोपासनास्वपेक्षितं सर्वशाखाप्रत्यय न्यायेन भवति - तथा प्रपत्तिप्रकरणे अश्लेषविनाशाश्रवणेऽपि भवतीत्यभिप्रेत्य विद्यान्तर न्यायத்தாலே इत्युक्तम्। கழியக்கடவது इति। क्षणान्तराद्यनुवृत्तावपि - शोकसत्वे इति भावः - एवं परपक्षप्रसक्तिसंपादनेन प्रसक्तम्। परपक्षमनुवदति - இவ்अर्थमित्यादिना -

**मूलं - पङ्क्तिपावनत्वादि**களைப் போலே **अनभिसंहित**ங்களையுங் கூட **हितैषि**யான **ईश्वर**ன் தானே கொடுக்கத்தட்டென்? இப்படிச் செய்யக்காணாமையால் **शोकविषय**மான **अंश**மெல்லாம் **निश्शेष**மாக **प्रपत्ति**யாலே கழியுமென்றவிடம் **प्रपत्तिप्रभावातिशय**த்தைப்பற்ற **स्तुति** பண்ணினபடியென்று சிலர் இதின் **प्रभाव**த்தை வரையிட்டுப்பார்ப்பர்கள் - இதுக்கு **उत्तरम्** - **अनुग्रहशील**னாய் ஆश्रयிப்பார்க்குப் **प्रपत्तिवाक्योच्चारणप्रारम्भ**த்திலே கடுக **मोक्षं**கொடுக்கத் **त्वरि**க்கிற **ईश्वर**ன் இவனுடைய நசையாலே சிறிது **कालं** இங்கே வைக்க இசைந்தவளவிலே இவ்விடத்திலுள்ள சிற்றின்பங்களை **दुःखप्रसङ्ग**(மற) **रहित**மாக **अनुभवि**ப்பிக்குமாகில் இவனுக்கு இந்நசை ஒருக்காலும் மாளாது - **भगवदनुभव**த்தில் **भोग्यताबुद्धि**யும் கொழுந்து விட்டு வாராது -

(सा.दी) अनभिसंहितங்களையும், अप्रार्थितங்களையுமென்றபடி - வரையிட்டு, परिच्छेदित्தென்கை - இங்கே, இவ்விभूतियிலே. சிற்றின்பங்களை, शब्दाद्यल्पसुखங்களை -

(सा.प्र) तात्त्विकः इत्यर्थः - வரையிட்டுப்பார்ப்பர்கள், न्यूनतया जानन्ति । நசையாலே, अभिलाषेण - கொழுந்துவிட்டு வாராது, अभिवृद्धान स्यात् । भगवता हितैषित्वादेव निर्दुःखतयावस्थापने -

(सा.वि) आनुषङ्गिकम्, अवान्तरफलम् । अनभिसंहितम्, अप्रार्थितम् - पङ्क्तिपावनत्वादिकमप्रार्थितमेव ददाति - तद्वत्सामर्थ्यमस्ति चेत्प्रारब्धनिश्शेषनिवृत्तिमनभिसंहितामपि सद्य एव हितैषी दद्यात् தானே கொடுக்க, स्वयमेव दातुं सङ्कल्पयति चेत् - தட்டு, प्रतिबन्धकं - என், किमस्ति - सत्यसङ्कल्पस्य प्रतिबन्धकाभावादिति भावः । एवं शङ्कितत्वात् प्रारब्धनिवर्तकवचनस्य स्तुतिपरत्वे तात्पर्यमित्यन्यथासिद्धिमाह । இப்படிச் செய்ய इति । இப்படிச் செய்யக் காணாமையால், तदिच्छां विना प्रारब्धनिश्शेष निवर्तकत्वादर्शनात् - கழியுமென்னுமிடம், निश्शेषं निरस्तम् - भवतीत्येतत् - வரையிட்டுப்பார்ப்பர்கள், न्यूनं पश्यन्तीति शङ्कोपसंहारः - अत्रोत्तरं वक्तुं प्रतिजानीते - இதுக்கு उत्तरमिति - भगवतस्तादृशसामर्थ्ये । सत्यपि प्रपन्नस्यानादिपापवासनानुवृत्तदेहविषयाभिलाषानुरोधेन कञ्चित्कालमवस्थापनं स्वीकृत्य तन्मध्ये दुःखानुभवप्रदानाभावे वासनावशात्संसारमण्डल एव प्रपन्नानां चिरकाल स्थित्यपेक्षा स्यात् तथाच क्षुद्रसुखसङ्गाद्विपरीत प्रवृत्तावनर्थस्स्याद्भगवदनुभवे उत्कटेच्छा न स्यात्तस्माद्दुःखतत्कारण कर्मसामग्र्योरनिवर्तनं युक्तमेवेति न प्रारब्धनिवर्तक वचनानां स्तुतितात्पर्य कल्पनं युक्तमित्यभिप्रायेण परिहारमाह - अनुग्रहशीलனாய் इत्यादिना - நசையாலே, अभिलाषेण, - சிறிதுகாலம், कञ्चित्कालम् - இங்கே, इहैव । வைக்க, स्थापयित्वा - இசைந்தவளவிலே, इच्छाविषये - இவ்விடத்திலுள்ள, एतल्लोकस्थितानि - சிற்றின்பங்களை, अल्पसुखानि - अनुभविப்பிக்குமாகில், अनुभावयति चेत् । இசை, इच्छा - ஒருக்காலும் மாளாது, ''नजातु कामः कामानामुपभोगेन शाम्यति'' इतीच्छा कदापि न निवर्तेत । கொழுந்துவிட்டு வாராது, -

(सा.सं) தட்டென், किं बाधकम् - வரையிட்டு, सङ्कोच्य - இவனுடைய நசையாலே इति - अत्रैव कञ्चित्कालं भगवत्कैङ्कर्य तद्गुण तद्विग्रहानुभवादीन् गुरुशुश्रूषां करिष्यामीत्यादीच्छायत्त देहानुवृत्त्याशयेत्यर्थः । சிற்றின்பங்களை, वैषयिकक्षुद्रसुखानि -

**मूलं** - ஆகையால்,

**''यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्। बान्धवैश्च वियोगेन सदा भवति दुःखितः।।**
**तेन दुःखेन सन्तप्तो यदि मां न परित्यजेत्। तं प्रसादं करिष्यामि यस्सुरैरपि दुर्लभः।।''**
என்கிறபடிகளிலே **दुःखादि**களுக்குக் **कारण**மான **प्रारब्धकर्मविशेष**த்தை **सन्निहित**ங்களான **कशादि**களைப்போலே துணையாகக்கொண்டு **पित्रादि**களைப்போலே **शिक्षक**னான **ईश्वर**ன் (சில) **कठिनप्रकृति**களுக்குப் பண்ணுகிற **अनुग्रहविशेष**மிதென்று **अनुसन्धि**க்கை **उचितम्।** -

(सा.दी) இது, சில प्रारब्धांश த்தைப் போக்காமை - दुःखங்கள் शिक्षारूपமென்னும் அதிலொரு ऐतिह्यம் -

(सा.स्वा) तं प्रसादमिति - यस्सुरैरपि दुर्लभः प्रसादः - तं प्रसादं तादृशपुरुषविषये करिष्यामि யென்று अन्वयः व्याज மன்றிக்கே अनुग्रहार्थம் दुःखोत्पादनं பண்ணில் सर्वविषयத்திலும் दुःखं प्रसङ्गिயாதோ? अन्यथा वैषम्यनैर्घृण्यं प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார் - ஆகையால் इति - ஆகையால், दुःखप्रसङ्गरहितமாக भोगप्रदानं हितமல்லாமையாலே என்றபடி - अनुग्रहविशेषமிதென்று अनुसन्धिக்கை उचितமென்று சொன்னது கூடுமோ? लोकத்தில் दुःखानुभवத்திலே ஓரிடத்திலும் हितत्वबुद्धि கண்டதில்லையே? என்ன ऐतिह्यकथनव्याजத்தாலே हितत्वத்தை समर्थिக்கிறார் -

(सा.प्र) वासनावशादुपर्युपरि क्षुद्रसुखसङ्गात्संसारमण्डल एव प्रपन्नानां चिरकालस्थित्यपेक्षा स्यात्तथा क्षुद्रसुखसङ्गाद्विपरीत प्रवृत्तावनर्थस्स्यात् - भगवदनुभवे उत्कटेच्छा च न स्यादिति पुत्रादि हितपरपित्रादि भिर्बालानां कशाघातन्यायाद्दुःखतद्धेतुदानादिकमित्यनुसन्धेयत्वादुपकारस्मृत्या भाव्यमित्यर्थः - ननु भगवता भागवतानां दारिद्र्यबन्धुवियोगादि दुःखजनने भगवत्स्मृतिर्नोपपद्यते ''दुःखिते मनसि सर्वमसह्यम्'' इत्युक्तरीत्या सर्वस्याप्यसह्यतया प्रतीतेस्तथा च शिक्षकतयानुसन्धानमसंभावितमित्यत्राह -

(सा.वि) अभिवृद्धा न स्यात् - सन्निहितங்களான कशादिகளைப்போலே, सन्निहितकशादीनि च - प्रारब्धकर्मविशेषத்தைத்துணையாகக் கொண்டு, सहकारित्वेन स्वीकृत्य - पित्रादिகளைப்போலே, पित्रादय इव - பண்ணுகிற अनुग्रहविशेषम्, இதென்று, இது, प्रारब्धदुःखानुभवः पित्रादिभिः क्रियमाणबालानुग्रह इव भगवता क्रियमाणोऽनुग्रह एवेति - अनुसन्धिக்க उचितम्, अनुसन्धातुं युक्तम् - अयमत्र निष्कर्षः। प्रारब्धं किमिति निश्शेषं न निवर्तयतीति शङ्कितुः किं तात्पर्यम्? शरीरानुवृत्तिहेतुभूत प्रारब्धमपि सद्य एव किमिति न निवर्तयतीति तात्पर्यम्? आहोस्विच्छरी रानुवृत्तौ सत्यां दुःखहेतु भूतप्रारब्धांशं किं न निवर्तयति - प्रारब्धनिवर्तन सामर्थ्यस्य सत्वात्स्वदासानमत्यन्तान्तरङ्गत्वे दुःखस्य स्वानिष्टत्वादिति? तत्र न तावदाद्यः - अप्रार्थितमेव शरीरविलयेन कश्चिदप्यस्मिन् प्रपत्तिमार्गेन प्रवर्तते - तथा च प्रपत्ति मार्गः प्रच्युतस्स्यात् - यदि तदिच्छानुगुण्येन शरीरमवस्थाप्य यावज्जीवं सुखेनैव वर्तयितव्यमिति दुःखहेतु प्रारब्धमात्रं निवर्तयितव्यमिति द्वितीयः पक्षोऽपि न घटते - तथा सति वासनावशात्क्षुद्रसुख सङ्गात्संसार एव चिरकालस्थित्यपेक्षया विपरीत प्रवृत्तावनर्थस्स्यात् - अतस्संसार जिहासोत्पादनाय प्रारब्धकर्मानु गुण्येन भगवान्यथेष्टं न करोतीत्युपकारत्वेनानुसन्धाय स्थातव्यम् - न तत्राविश्वासः कार्यः इति -

**मूलं** - ஒரு **व्याधिविशेष**த்தையுண்டோ வென்று **राजा** கேழ்க்க அவரு மொரு **उपाध्याय**ருண்டென்று **भट्ट**ரருளிச்செய்தார் - **आयुस्**ஸுவளர்க்க வொண்ணாதபடி **नियतायुस्**ஸானவனுக்கு உள்ளத்தில் **उद्वेगं** பிறக்கைக்காகவும் - **अनियतायुस्सु**க்களுக்கு **आयुष्कामीय**ங்களையிட்டு வளர்க்க நினையாமைக்குமாகவும் **दुःखादि**கள் இவனுக்கு **उपाध्याय**ர்கள் -

(सा.दी) அருளிச்செய்கிறார் - ஒரு व्याधि विशेषத்தை யென்று துடங்கி. ஒரு राजा ஒரு व्याधिविशेषத்தை உமக்குண்டோவென்று भट्टரைக்கேழ்க்க அவருமொரு उपाध्यायர் शिक्षकருண்டென்றருளிச் செய்தாராம் - சிற்றின்பங்களையாசைப்பட ஒட்டாத शिक्षकரிறே व्याधिகள். नियतेत्यादि - मनुष्यர் द्विविधர் - नियतायुस्सुக்கள் अनियतायुस्सुக்களென்று - नियतायुस्सुக்களாவார் आयुष्कामीयेष्ट्यादिகளாலும் வளராதே नियतமான आयुस्ஸையுடையார். अनियतायुस्सुக்களாவார் आयुष्कामीयेष्ट्यादिகள் பண்ணினால் வளரும் आयुस्ஸையுடையார் - அதில் आयुष्कामीयங்களாலும் வளராத नियतायुस्ஸுக்களுக்கு இந்த आयुस्ஸு विषयமாகவும் भीतिபிறக்கைக்காகவும் மற்றையவர்கள் आयुस्ஸை வளர்க்க நினையாமைக்காகவும் என்கை. दुःखादिகளுமென்றவிடத்தில் आदिशब्दத்தால் भयादिகள் நினைக்கப்பட்டன -

(सा.स्वा) ஒரு व्याधि इति - अकृत्यादिबाधकங்களை वारणं பண்ணுகிறவனும் हितप्रवर्तकனுமன்றோ उपाध्यायன்? दुःखजनकव्याधिயை उपाध्यायனென்று निर्देशिக்கக்கூடுமோ? என்னவருளிச்செய்கிறார் - आयुस् इति - मुमुक्षुவுக்கு उद्वेगरूपहितத்தைப் பண்ணுவிக்கையாலும் आयुर्वृद्धिरूपहित निवारकமாகையாலுமென்று கருத்து - आदिशब्देन भयग्रहणम् - இப்படியாகில் मुमुक्षुக்கள் दुःखव्याध्यादि निवृत्तिயைப் प्रार्थिக்கக்கூடுமோ? हितनिवृत्ति प्रार्थनमसङ्गतமன்றோ? அது अविवेककृत्यமென்னில்

(सा.प्र) ஒரு व्याधीति - पामरेष्वसम्भवेऽपि तत्त्वज्ञेषु सम्भवतीति भावः - ननु लोके वेदशास्त्राद्यध्यापके उपाध्यायशब्द प्रयोगात्कथं व्याध्यादिषूपाध्यायशब्दः प्रवर्तत इत्यत्रानुचितप्रवृत्तिप्रतिबन्धक तयोपाध्यायत्वमित्याह - आयुस् इत्यादिना - ननु शिक्षाया दुःखानुभ वाच्यकत्वा -

(सा.वि) तत्र वृद्धाचारं प्रमाणामाह - ஒரு व्याधिविशेषத்தை इति - पराशरभट्टार्येण व्याध्याखिद्यमानेन विचारयितुमागतं राजानं प्रत्युपाध्यायोऽस्तीत्युत्तरं दत्तमिति संप्रदायः - व्याध्यां कथमुपाध्यायशब्द प्रयोग इत्यत आह - आयुस्ஸு வளர்க்க इति - வளர்க்கவொண்ணாதபடி आयुष्कामेष्ट्याद्यभावेन वृद्धि प्राप्त्ययोग्यतया नियतायुषः । உள்ளத்தில், विद्यमानायुर्मध्ये - उद्वेगं பிறக்கைக்காகவும், असह्यत्वोत्पादनार्थम् - வளர்க்க நினையாமைக்கு, वृध्यर्थयत्नानुत्पादनाय च - ஆக, यथा स्यात्तथा - उपाध्यायர், अनुचित प्रवृत्तिप्रतिबन्धकत्वेन उचित प्रवृत्तिहेतुत्वेन च उपाध्याय शब्दप्रयोग इति भावः । यदाहु वृद्धाः, ''विपदस्सन्तु नश्शश्वद्यासु -

(सा.सं) उपाध्याय शब्द विवक्षितं विवृणोति - आयुस् इत्यादिना - உள்ளத்தில் उद्वेगं பிறக்கைக்காகவும் इति । शेषायुःखण्डे भीत्युत्पादनार्थमित्यर्थः - एनं चोपाध्यायशब्दोऽत्र हितप्रवर्तकत्वरूपगुणनिबन्धन औपचारिक इति भावः -

**मूलं - இது ஆழ்வானுள்ளிட்டார் பக்கலிலே प्रसिद्धम् । अपचारங்களையும் तत्फलங்களையும் சிலருக்குக் காட்ட மறைக்கிற விதுவும் ''பாம்போடொரு கூரையிலே பயின்றார்போல் தாங்காதுள்ளம் த(ள்ளு)ளருமென் -**

(सा.दी) இது इत्यादि - இது, दुःखादि उपाध्यायராகை. கூரத்தாழ்வான் नेत्रव्यसनத்தை उपाध्यायராகத் தெளிந்திறே प्राकृतचक्षुस्ஸை प्रार्थिத்திலர் - ஆகிலும் சிலர்க்கு अपचारங்களையுண்டாக்கக் கூடுமோ? என்ன வருளிச்செய்கிறார் - अपचारங்களையும் इत्यादिயால் - கூரை, எரப்பகம். பயிலுகை, सहवसिக்கை. தாங்காது, धरिயாது. உள்ளம், मनस्ஸு. தள்ளும், தளும்பா நிற்கும். ननु, शिक्षाहेतुவான -

(सा.स्वा) विवेकवान्கள் प्रार्थिயாமலிருக்க கண்டதுண்டோ? என்ன வருளிச்செய்கிறார் - இது इति - கூரத்தாழ்வான் नेत्रव्यसनத்தை उपाध्यायராக நினைத்து पुनश्च प्राकृतचक्षुस्ஸை प्रार्थिயாதே யெழுந்தருளியிருந்தது प्रसिद्धமிறே என்று கருத்து - ஆனாலும் कठिन प्रकृतिகளின்றிக்கேயிருக்கிற சிலருக்கு अपचारத்தையும் तत्फलத்தையும் கொடுக்கக்கூடுமோ? என்ன வருளிச்செய்கிறார் - अपचारங்களையும் इति - சிலர்க்கு, कठिन प्रकृतिகளன்றிக்கேயிருக்கிற ऋजुप्रकृतिகளுக் கென்றபடி - तत्फलங்களையும், भगवदनुभवविच्छेदादिகளையென்றபடி - காட்டி மறைக்கிற விதுவும், மின்னொளிபோலே காட்டி निवृत्तिப்பிக்கிறவிதுவுமென்றபடி - கூரையிலே, எரப்பிலே - பயின்றாற்போலே, குடியிருக்கிறாப் போலே யென்றபடி - தாங்காது इति । உள்ளம், என் मनस्ஸானது - தாங்காது, धरिக்கமாட்டாது - தள்ளும்,

(सा.प्र) त्तव्या उपकारत्वेनानुसन्धानमसंभावितमित्यत्राह । இது ஆழ்வான் इत्यादि - कूरेशानां कृमिकण्ठेन नेत्रयोरपहारे कृते सति तैर्निषिद्धनिरीक्षणराहित्यसम्पादनेनोपकार एव कृत इत्युक्तम् - உள்ளிட்டார், प्रभृतयः - ते च नारायणमुन्यादयः - नारायणार्याणां व्याध्यनुभववेलायां राज्ञीसमागते सति व्याधिं कृष्णाजिने निधाय राजसंभाषणे क्रियामाणे राज्ञा भवद्भिः कथं व्याधिरनुभूयत इति पृष्टे भगवता प्रारब्धकर्मक्षय रूपोपकारः क्रियत इत्युक्तमिति च संप्रदायः - एवं तर्हि निर्वेदवतां भगवदत्यन्तभोग्यता बुद्धिमतां दिव्यसूरीणां महाभागवतानां दुःखानुभवजनस्य किं प्रयोजनमित्यत्राह - अपचारங்களையும் इत्यादि - பாம்போடொரு इत्यादि, सर्पेण सहैकस्मिन् गृहेऽवस्थान इव मम चेतो धैर्येण स्थितिं न लभते ।

(सा.वि) सङ्कीर्त्यते हरिः'' इति - ஆழ்வான், कूरेशः - तस्य कृमिकण्ठनिमित्त नेत्रवैकल्येन प्रारब्धानुभवः । नन्वत्यन्तान्तरङ्गाणामत्यन्तभगवद्भोग्यताबुद्धिमतां निर्वेदवतामेव दुःखानुभवजननमनुपपन्नम् - अनुचितप्रवृत्त्यभावादित्यत्र निर्वेदपूर्तिद्वारात्वरातिशयोत्पादनायैवेति फलितमाह - अपचारங்களையும் इति - अपचारங்களையும், अपचारान् । तत्फलங்களையும், तत्फलानि दुःखानि च - காட்டி, प्रदर्श्य - மறைக்கிறவிதுவும், तिरोधानम् - பாம்போடொரு கூரையில் பயின்றாற்போலே தாங்கா தென்னுள்ளம் தளருமே தாமரைக்கண்ணா. பாம்போடு, सर्पेण सह - ஒரு கூரையிலே, एकस्मिन् गृहे - பயின்றாற் போல், निवसत इव - என், मम - தளரும், चञ्चलम् - உள்ளம், मनः - தாங்காது,-

(सा.सं) இது, दुःखादावुपाध्यायशब्दप्रयोगः - கூரை, क्षुद्रकुटी - பயின்றாற்போலே, सहस्थितिवत् - என்னுள்ளம் தாங்காது, मन्मनो न स्वस्थम् - தள்ளும் என் -

**मूलं - தாமரைக்கண்ணா" என்று निर्वेदपूर्तिயைக் கடுகப் பிறப்பித்துத் தானிசைந்த, संसारनिवर्तनத்தைக் கடுக இவனையுமிசைவிக்கைக்காக வத்தனை. இவ்விடத்தில் प्रतिकूलानुभवांशं दुष्कर्मफलम् - இது शिक्षण மாகிறதுவும் प्रायश्चित्तத்திலே மூட்டுகிறதுவும் उपायफलम् -**

(सा.दी) अनुग्रहத்துக்கு मूलமென்? दुष्कर्मफलமான प्रतिकूलानुभवमनुग्रहफलமாவது தானெங்ஙனே? ईश्वरனுடைய निग्रहसङ्कल्पமிறே दुष्कर्मமென்னவருளிச்செய்கிறார் - இவ்விடத்தில் प्रतिकूलेत्यादि। उपायफलமென்றத்தால் अनुग्रहहेतुச்சொல்லிற்று - प्रतिकूलानुभवத்தில் आकारद्वयமுண்டு, அதில் प्रतिकूलाकारं निग्रहफलं शिक्षाकारं प्रायश्चित्त प्रवृत्तिபோல் उपायफल மென்கை. -

(सा.स्वा) தளும்பா நிற்கிறது - என் தாமரைக் கண்ணா, என் पुण्डरीकाक्ष कटाक्षिக்கலாகாதோ வென்று கருத்து - सर्वं दृष्टமாய் குறையிலேயொளிந்தாலும் पुनश्च दृष्टமாய் बाधिக்குமோவென்று भयத்தையுண்டாக்கிறாப்போலே எப்போது अपचार முண்டாய் बाधिக்கிறதோ என்று भयத்தையுண்டாக்கி निर्वेदத்தையுண்டாக்கிறதென்று கருத்து. இப்படி दुःखोत्पादनमनुग्रह फलமாய்க்கொண்டு शिक्षारूपமென்று சொன்னது கூடுமோ? दुःखं निग्रह सङ्कल्परूप दुष्कर्मफल மன்றோ? என்னவருளிச் செய்கிறார் - இவ்விடத்தில் इति - प्रतिकूलानुभवத்தில் आकारत्रयமுண்டு - प्रतिकूलानुभवरूपत्वமும், निर्वेदोत्पादनद्वारा पुनश्च सजातीयापराधकरण प्रतिबन्धरूपशिक्षणरूपत्वமும், अपराधप्रसक्तौ भविष्यत्सजातीय दुःखभीत्या प्रायश्चित्त प्रवर्तकत्व முமென்று. அதில் प्रतिकूलानुभवांशं दुष्कर्मफलम्। शिक्षारूपत्वाद्यंशं मोक्षार्थ प्रपत्तिरूपोपाय जनितानुषङ्गिकानुग्रह -

(सा.प्र) एवं सति ''मैत्रेणेक्ष स्वचक्षुषे'' त्युक्त प्रकारेण चाञ्चल्यनिवृत्तये पद्मनिभेन तव चक्षुषेक्षस्येत्यर्थः - ननु निर्वेदार्थमपि निर्निमित्तं दुःखानुभवजननमनुचितमित्यत्राह - இவ்விடத்தில் इत्यादि। एवं तर्हि अमुमुक्षूणां प्रायश्चित्तौन्मुख्यं दुःखानुभवे शिक्षारूपता च स्यादित्यत्राह - இது शिक्षणमित्यादि - शिक्षारूपत्वस्य प्रायश्चित्तौन्मुख्यापादानादेश्चोपाय फलत्वात् -

(सा.वि) स्थितिं न प्राप्नोति - தாமரைக் கண்ணாவோ, पद्मपत्रनिभेक्षण - सर्पेण सह वसत इव विषयप्रवणे संसारे पुत्र - मित्र - कलत्रादिभिस्सह वर्तमानस्य मम चञ्चलं मनः तत्प्रवणमेव पुनर्भवेत् - धैर्यं नावलंबते - अतो ''मैत्रेणेक्षस्व चक्षुषा'' इत्युक्त प्रकारेण चाञ्चल्यनिवृत्तये पद्म पत्रनिभेन प्रसन्नेन तव चक्षुषा ईक्षस्वेत्यर्थः - கடுக, शीघ्रं - பிறப்பித்து, उत्पाद्य - தானிசைந்த संसारनिवर्तनத்தை, स्वाभिलषितसंसारनिवर्तनं இவனையும் - இசைவிக்கைக்காக வித்தனை, इमं प्रपन्नमपि शीघ्रमङ्गीकारयितुमित्येतन्मात्रार्थमेव - एवं च सति न केवलं शीघ्रसंसारनिवृत्त्यपेक्षा जनकत्वमेव - परं तु कठिन प्रकृतीनां बुद्धिपूर्वोत्तराघवतां शिक्षार्थं, प्रायश्चित्तार्थं भवतीत्याह - இவ்விடத்திலே इति - दुष्कर्मफलं, प्रतिकूलानुभव रूपम् - अतो -

(सा.सं) தாமரைக் கண்ணா, प्रकृति संबन्धं निवर्तय मत्स्वामिन् पुण्डरीकाक्ष - यदि प्रपत्तेरेव शिक्षणार्थं दुःखमुत्पादयतीत्युच्यते। तर्हि प्रपत्ति प्रभावस्सम्यगेव समर्थित इत्युपालम्भनिवारणायाह - இவ்விடத்தில் इति - प्रपत्तिमननुतिष्ठत्स्वपि केषुचित्तस्य शिक्षारूपत्वदर्शनात् -

**मूलं - இவற்றில் शिक्षणादिகள் प्रारब्धसुकृतविशेषफलமாயும் வரும் -**

(सा.दी) ஆகையால் निग्रहानुग्रहங்கள் प्रकृतहेतुவாகக்குறையில்லை. இந்த शिक्षाहेत्वनुग्रहத்தில் मुमुक्षुக்களுக்குப் போலே जन्मान्तर सुकृतமும் हेतुவாகலாமென்கிறார். இவற்றில் शिक्षणादिகளென்று. आदि शब्दத்தால் प्रायश्चित्तप्रवृत्तिசொல்லிற்று. ननु, प्रपन्न மான काकத்துக்கு கண்ணை வாங்குகையால் -

(सा.स्वा) फलமென்றபடி. இப்படி शिक्षणरूपत्वादिकं उपायफलமாகில் शिक्षणानुगुणजन्मान्तरीय सुकृत முண்டாகிலது व्यर्थமாக प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார். இவற்றில் इति - आदिशब्देन प्रायश्चित्त प्रपत्तिर्गृह्यते - ஆனாலும் प्रपत्तिरूपोपाय प्रभावंகூடுமோ? शरणागतனான काकத்துக்கு फलமில்லையே? प्रत्युत नयनोत्पाटन रूप -

(सा.प्र) तदभाव इति भावः - नन्वनुष्ठितोपायेषु मुमुक्षुषूपात्तदेह एव शिक्षारूप दुष्कर्मफलानां प्रायश्चित्तानां वा जननस्योपायफलत्वे मुमुक्षुषु काम्यकर्मरूपप्रपत्तेः कुमतिविषयमात्रजनकत्वाच्छिक्षायाश्च कुमतिविषयत्वानुपपत्तेस्तस्य उपायफलत्वन्नोपपद्यत इत्यत्र तादृशशिक्षायाः प्रारब्ध सुकृतफलत्वं प्रदर्शयन् तादृशशिक्षाविषयेषूपाय फलापूर्तिशङ्कां चाप्युदस्यति - இவற்றில் इत्यादिना -

(सा.वि) निर्वेदद्वारा शीघ्रं संसार निवर्तनापेक्षा भवति - कठिनप्रकृतीनां शिक्षार्थप्रायश्चित्तप्रवृत्त्यर्थं च भवति - अतो दुष्कर्मफलप्रतिकूलानुभवप्रदानस्य हितरूपत्वमुपायसामर्थ्येन बुद्धिपूर्वोत्तराघानुभवार्थं जन्मान्तरं निवार्यास्मिन्नेव जन्मनि कञ्जत्वकाणत्वादिप्रकारेणानुभवप्रदानादुपायफलमिति भावः - नन्वनुष्ठितोपायस्यापि दुःखानुभवस्य निर्वेदादिहेतुत्वात्कथंमुपायफलत्वमित्याशङ्क्य तत्र ''विपदस्सन्तु वश्शश्वत्'' इत्युक्तस्थल इव प्राचीनसुकृतविशेष एव प्रारब्धदुष्कर्मफलप्रदानोन्मुखं कारयित्वा दुःखमनुभावयतीत्यभिप्रेत्याह शिक्षणादिகள் इति - यद्वा, पूर्वं ''शिक्षकனான ईश्वरன் சில कठिनप्रकृतिகளுக்குப் பண்ணுகிற अनुग्रहविशेषமென்று अनुसन्धिக்க उचितम्'' इत्युक्तम् - तत्र दुष्कर्मफलानुभवस्य निग्रहफलत्वात्कथमनुग्रह फलत्वमित्याशङ्क्याकारभेदे नैकस्योभयरूपत्वमस्ति। प्रतिकूलानुभवरूपत्वेन निग्रहफलत्वमनुचित प्रवृत्तिविरोधि शिक्षारूपत्वेन अनुग्रह फलत्वमित्यनुष्ठितोपायस्य उभयरूपत्वं न विरुद्ध्यत इत्यभिप्रायेणाह - இவ்விடத்தில் इति - उपायफलं, कृतोपायस्यानुग्रह फलमित्यर्थः नन्वनुष्ठितोपायस्यापि शिक्षारूपत्वेनोपाय - प्रवर्तनसंभवादनुष्ठितो पायाभावात्तत्रानु ग्रह हेतुः क इत्यत्राह - இவற்றில் शिक्षणेति - सुकृतविशेषमूलकोऽनुग्रहः अनुग्रहमूलको दुष्कर्मफलानुभवः। अतो निर्वेदद्वारा उपाय प्रवृत्तिर्युज्यत इति भावः - शिक्षणादीत्यादि शब्देन प्रायश्चित्त प्रवृत्तिसङ्ग्रहः - ननु प्रपन्नस्य काकस्य नेत्रापहारात् प्रपत्तिफलं पूर्णं न जातमित्यत्र प्राणसंरक्षणार्थमेव तेन प्रपत्तेः कृतत्वात्, प्रपत्तिफलं -

(सा.सं) व्यभिचारेण तस्य न प्रपत्तिफलत्वावश्यकत्वमित्यत्र तृणारणिन्यायेन परिहारमाह - இவற்றில் इति।

**मूलं - प्राणार्थि**யாய் விழுந்த **काक**த்துக்கு **प्राण**னைக் கொடுக்கையாலே அங்கும் **प्रपत्तिफलं पूर्ण**ம் **- दुष्प्रकृति**யான இக்**काक**த்துக்கு **शिक्षै**யாக ஒரு கண்ணைவாங்கிவிட்டதுவும் **निग्रह**மன்று **- अनुग्रह विशेष**ம் - ஆகையால் **आभूतसंप्लवं नरक**த்திலே கிடக்கும்படி **क्षणकृत पापकर्म**ங்களுடைய -

(सा.दी) फलसिद्धियில்லையென்ற शङ्कान्तरத்திலருளிச் செய்கிறார். प्राणार्थिயாயென்று. ஒரு கண்ணை வாங்கிவிட்டத்துக்குத் तात्पर्य மருளிச்செய்கிறார். दुष्प्रकृतिயான इत्यादिயால், निग्रहமன்று, केवलनिग्रहமன்று. प्रपत्तिप्रभावத்தில் बाधकத்தைப் परिहरित्तु साधकंசொல்லுகிறார். ஆகையால் आभूतेत्यादिயால், भूतानां संप्लवस्संहारः - आभूतसंप्लवं, ब्रह्म प्रलयपर्यन्तम् - क्षणिककर्मத்துக்கு -

(सा.स्वा) दुष्फलமே காணவில்லையோ? என்னவருளிச்செய்கிறார் - प्राणेति - இப்படியாகில் नयनोत्पाटनंகூடுமோ? என்னவருளிச்செய்கிறார் - दुष्प्रकृतिயான इति । निग्रहफल மன்றென்று சொன்னது கூடுமோ? दुःखरूप மாகையாலே निग्रहफल மன்றோ? என்னவருளிச்செய்கிறார். अनुग्रहविशेषमिति - उपायविशेषजनित सजातीयपापान्तर प्रतिबन्धोद्देश्य नयन विपाटन सङ्कल्परूपानुग्रह विशेषफलமென்றபடி. ஆனாலும் प्रपत्तिக்கு उक्त प्रभावंசொன்னது கூடுமோ? क्षणकालसाध्यமான व्यापारத்துக்கு अनवच्छिन्न फलजनकत्वமும் भक्तियोगத்திலுமில்லாத प्रारब्धनिवर्तकत्वमुपपत्तिविरुद्ध மன்றோ? क्षणकालसाध्यब्रह्महत्यादिपापमनेककल्पानुभाव्यनरकजनक மானாற்போலவும், क्षणकालसाध्यसुकृतप्रणाममपुनर्भवजनकत्वप्रभावयुक्त மாணாற்போலவும் प्रपत्तिக்கும் प्रभाव முண்டென்னிலப்போது शूद्रभागवतர்க்கும் प्रपत्तिप्रभावத்தாலே ब्राह्मण्यं प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார் - ஆகையால் इत्यादिना - ஆகையால், प्रभावத்தில் बाधक மில்லாமையால் - आभूत संप्लवं, भूतानां सम्प्लवः प्रलयः ब्रह्मप्रलयपर्यन्तமென்றபடி - पापेति - क्षणिकपापத்துக்கு तादृशनरक पातनशक्ति -

(सा.प्र) अनुग्रहविशेषमिति - ''हरिर्दुःखानि भक्तेभ्यो हितबुद्ध्या करोतिवै । शस्त्रक्षाराग्नि कर्माणि स्वपुत्राय यथापिते'' त्याद्युक्तप्रकारेण शिक्षाया अनुग्रह कार्यत्वादनुग्रहव्यपदेश्यत्वमनुग्रहफल भूत सुखानुभवविजातीय दुःखानुभवरूपत्वात्तद्विशेषत्वं चेत्यर्थः । ननु क्षणिकस्य प्रपदनस्य स्वानुष्ठानानन्तरक्षणमारभ्य शिक्षण प्रभृत्यागाम्यनन्तकालानुभाव्यमोक्षपर्यन्त फलजनकत्वरूपः प्रभावः कथं संभवतीत्यत्र ''ब्रह्महत्याश्वमेधाभ्यां पुण्यपापकृतो विधिः आभूतसंप्लवं तत्तत्फलमुक्तं तयोर्द्विज'' इत्यादिष्ववगतक्षणिक ब्रह्महत्यादी नामनन्तदुःख प्रदत्वादि प्रभाववत् ''ललाटोदरजान्वङ्घ्रियुग्मान्यूर्ध्वगतौ करौ । भूमौ सन्धायमनसा वासुदेवमनुस्मरन्'' इत्यारभ्योक्त सुकृत प्रणामप्रभाववच्चोपपद्यत एवेत्याह - ஆகையால் आभूतेत्यादिना -

(सा.वि) पूर्णमेव । नेत्रापहरणं तु दुष्प्रकृतित्वात्शिक्षार्थ मित्याह - प्रणार्थिயாய் इति - வாங்கி, अपहृत्य - விட்டதுவும், विसर्जनम् - கிடக்கும்படி, घटन प्रकारेण - क्षणकृतेति - ''यद्ब्रह्मकल्प -

(सा.सं) द्वयोरपि हेतुत्वं प्रामाणिकम् । न व्यभिचारापनोद्यमिति भावः । उपपादितं प्रपत्तिप्रभावं दृष्टान्त प्रमाणकैमुतिकन्यायैः फलितमसङ्कोच नीयत्वेन निगमयति - ஆகையால் इति ।

**मूलं - प्रभाव**மான **भगवन्निग्रह (विशेष)**த்தையிசைந்தாற்போலவும் **''दुर्गसंसारकान्तारम पारमभिधावताम्। एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः''** என்றும் **''एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः। दशाश्वमेधी पुनरेति जन्मकृष्ण प्रणामी न पुनर्भवाय''** என்றும் **सकृतप्रणामविशेष**த்தினுடைய **प्रभाव**த்தையிசைந்தாற்போலவும் **''सकृदेव प्रपन्नाय - अथ पातकभीतस्त्वम् - कुयोनिष्वपि सञ्जातो यस्सकृच्छरणं गतः'' इत्यादि**களில் சொல்லுகிறபடியே **प्रपत्ति प्रभाव**த்தையும் **शास्त्रार्थोपप्लव प्रसङ्ग**மில்லாத **विषय**த்தில் சுருங்காதே **अनुसन्धि**க்க **प्राप्तम् -**

(सा.दी) तादृशनरक पातनशक्तिनिग्रहத்தால் வந்தது. निग्रहविशेषंபோலே अनुग्रहविशेषமும் கூடுமென்றபடி - दुर्गंचतत्संसारकान्तारं च - शास्त्रार्थेति। शास्त्रार्थ विरुद्ध विषयத்தில் प्रभावं यथाश्रुतமாக अङ्गीकार्यமென்கை - शास्त्रविरोधंவரும் -

(सा.स्वा) भगवन्निग्रहத்தாலேயிறே - அப்படியே अनुग्रहविशेषமும் கூடுமென்றபடி - दुर्गेति। दुर्गंच तत्संसारकान्तारं च - तद्देशिकः, प्रापकः என்றபடி - एकोऽपीति - एकोऽपीत्यपिः तुल्य इत्यत्राप्यनुषञ्जनीयः किमर्थः? तुल्यः किं? न तुल्य इत्यर्थः। अन्यथा उत्तरार्धासाङ्गत्य प्रसङ्गः என்று கருத்து - सुकृत प्रणामादिवत्साधकप्रमाणं வேண்டாவோ? என்னவருளிச்செய்கிறார். सकृदिति - ''सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम।। अथ पातक भीतस्त्वं सर्वभावेन भारत। विमुक्तान्यसमारम्भो नारायणपरो भव।। कुयोनिष्वपि सञ्जातो यस्सकृच्छरणं गतः। तम्मातापितृ हन्तारमपि पाति भवार्तिहा'' इत्यादिवचनங்கள் சொல்லுகிறபடி என்றபடி - शास्त्रार्थोपप्लवेति - शूद्र भागवतனுக்கு समायापारविशेषविधायक -

(सा.प्र) शास्त्रार्थोपप्लव प्रसङ्ग மில்லாத इति - ''न शूद्रा भगवद्भक्ता विप्रा भागवता स्मृताः'' इत्यादीनां प्रसिद्धार्थ स्वीकारे ''पद्युवा एत श्मशानं यच्छूद्रः तस्माच्छूद्र समीपे नाध्येतव्यम्'' इत्यादि शास्त्रार्थबाध - वत्प्रमाणान्तरबाधाभाव इत्यर्थः - प्रमाणान्तरबाधरूप -

(सा.वि) नियतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजतिजन्तुरिह क्षणार्थे'' इत्युक्तरीत्या प्रलयपर्यन्त नरकानुभावयितृत्वस्य क्षणकृतपापेऽङ्गी कारवदित्यर्थः - सुकृतः, सुष्ठुकृतः भक्ति श्रद्धापूर्वकं कृतः प्रणामः - न पुनर्भवाय, परम्परयोपाय प्रवेशनेन पुनर्भवं निवर्तयतीति तादृशप्रभावो यदा नमस्कार मात्रस्यैवाङ्गी कृतस्तदा किमुत संपूर्ण प्रपत्तेरिति कैमुतिक न्यायेनैव तादृशः प्रभावोऽनुसन्धेय इति भावः இசைந்தாற் போலவும், अङ्गीकारवत् - शास्त्रार्थोपप्लवமில்லாத विषयத்திலே, जात्यादि नियतानुष्ठान विरोधाभावस्थले - சுருங்காதே, सङ्कोचो -

(सा.सं) प्रारब्धविशेषफलदुःखाद्यनिवारणस्यान्यथोपयपत्तेः - काकवृत्तान्ते प्रपत्तिफलस्य पूर्णत्वादक्षिपाटनस्य शिक्षार्थतया अनुग्रहरूपत्वाच्चेत्यर्थः आभूतसंप्लवो यावद्भूतनाशरूपो महाप्रलयः तत्पर्यन्तमित्यर्थः। बुद्धि पूर्वोत्तराघाश्लेषहेतुत्वमपि तर्हि प्रपत्तेस्स्यादिति परिहाराय शास्त्रोपप्लवेति -

**मूलं - ''तं मातापितृहन्तारमपि पाति भवार्तिहा''** என்றதுவும் **उत्तराघ विषय**மல்லாதபோது **उपप्लव**மில்லை. **उत्तराघविषय**த்தில் **निस्तारक्रम**ங்கள் முன்பே சொன்னோம்- **''शरणं च प्रपन्नानां तवास्मीतिच याचताम्। प्रसादं पितृहन्तॄणामपि कुर्वन्ति साधवः'' इत्यादि** களும் இப்படிக்கு **सुघटित**ங்களாம்.

(सा.दी) जातिव्यवस्थादिகளில் अङ्गीकरिக்கலாகாதென்று सूचितम्। ஆகில் शास्त्रविरुद्धமான ''तं माता पितृ हन्तारमपि पाति'' என்று उत्तरपापालेपं सूचिத்த वचनத்துக்கு निर्वाहமெது? என்னவருளிச் செய்கிறார் - तं माता पितृहन्तारमिति। இந்த हननं प्रपत्तेः पूर्वकालीन மாகில் अपनाशமேயாம். उत्तरकालीनமாகில் उपायफलமான निस्तारक्रमத்தாலே கழியும். सर्वधा அங்கு சொன்ன रक्षकत्वरूप प्रभावத்துக்குக்குறையில்லை. उत्तरकालीनத்துக்கு लेपरूप प्रभावं சொல்லவொண்ணாதென்கை. ''प्रसादं पितृ हन्तॄणामपि कुर्वन्ति साधवः'' என்றுதுக்குமிதுவே प्रभाव निर्वाहक्रम மென்கிறார். शरणं चेत्यादि। இப்படிக்கு - இப்படிக்கு, -

(सा.स्वा) शास्त्रोपप्लवप्रसङ्गத்தாலே ब्रह्मण्यापादक प्रभावादि களில்லையென்று கருத்து - இப்படியாகில், ''तं माता पितृहन्तारमपि पाति भवार्तिहा'' என்று बुद्धिपूर्वोत्तराघத்திலும் क्षमै சொல்லுகையாலே बुद्धिपूर्वोत्तराघनिवर्तकत्वप्रभावமும் प्रपत्तिக்கு சொல்லவேண்டாவோ? என்னவருளிச்செய்கிறார் - तम्मातेति - बुद्धिपूर्वोत्तराघத்தில் ''अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत्'' என்கிற प्रायश्चित्तशास्त्रमुपप्लवाय அது पूर्वाघविषय மென்று கருத்து - இப்படியாகில் प्रपन्नனுக்கு उत्तराघத்தில் नरकं प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார் - उत्तराघத்தில் इति - முன்பே इति - अपराध परिहारத்திலென்றபடி - ''शरणं च प्रपन्नानाम्'' என்கிற वचनத்திலே उत्तरकालीनपितृहननादिகளிலும் बाधकமில்லையென்று சொல்லவில்லையோ? என்னவருளிச்செய்கிறார் - शरणञ्चेति - இப்படி भगवत्प्रभावமும் -

(सा.प्र) सङ्कोचकाभावादिति भावः। नन्वेवं प्रपन्नानां प्रभाववत्वे भागवतभूतमातापितृहन्तॄणामपि भरन्याससंभवात्प्रभावत्वं स्यात्तथा च ''या प्रीतिर्मयि संवृत्ता मद्भक्तेषु सदास्तु ते। अपमानक्रिया तेषां संहरत्यखिलं जगत्'' इत्यादि शास्त्रोपप्लवस्स्यादित्यत्र विषयविभागान्नोपल्लव इत्याह तं माते त्यादिना - नन्वेवं तर्हि भरन्यासानन्तरं प्रारब्ध कर्मवशाद्बुद्धि पूर्वोत्तराघोदये ''स याति नरकं नरः'' इत्युक्तानिष्टफल प्राप्तेरावश्यकत्वाद्भरन्यासस्य सर्वानिष्टनिवर्तकत्वरूपः प्रभावो हीयेतेत्यत्र ''कौटिल्ये सति शिक्षयाप्यनघयन् क्रोडीकरोति प्रभुः'' इत्यपाराधपरिहाराधिकारोक्तमुत्तराघनिस्तारक्रमं स्मारयंस्तुल्यन्यायतया वचनान्तरस्यापि निर्व्यूढत्वमाह - उत्तराघविषयத்தில் इत्यादिना - एवं प्रपत्तिप्रभावे प्रमाणान्तराविरुद्धां शस्य -

(सा.वि) यथा न स्यात्तथा - ननु प्रभावसङ्कोचाभावे मातापितृहन्त्रादीनामपि भागवतानां प्रभावासङ्कोचस्स्यात् - तथा - ''तत्पादाम्ब्वतुलं तीर्थम्'' इत्यादि पूर्वोक्तविषयेऽपि परिग्रहस्स्यादित्यत्राह - तं मातापितृहन्तारमिति - उत्तराघविषय மல்லாதபோது, प्रपत्तेः पूर्वकालीनं चेत् - उपप्लवமில்லை, विरोधो नास्ति। प्रपत्तेस्सर्व प्रायश्चित्तत्वादिति भावः - उत्तराघविषयश्चेत्तत्परिहारक्रमापराधपरिहार एवोक्त इत्याह - उत्तराघத்தில் इति - இப்படிக்கும், एवं प्रकारस्य -

(सा.सं) இப்படிக்கு, उत्तराघविषयं न चेत् - एवं प्रमाणवचनमुखेन प्रभावन्यूनतानुबन्धि -

**मूलं** - நம் **दर्शन**த்திலே நிலையுடையராய், **मुमुक्षु**க்களாய், **कार्मज्ञान भक्ति प्रपत्ति**களில் ஏதேனுமொரு **शास्त्रीय मर्यादै**யாலே **भगवत्प्रवण** ரானார்க்கு **यतमान संज्ञाद्यवस्थै**களிலே -

(सा.दी) இப்படி अङ्गीकरिக்குமென்கை, இனி उपायप्रभावोपपादनार्थமாக उपायनिष्ठभागवत प्रभावத்தை அருளிச்செய்கிறார். மேல் நம்**दर्शन**த்தில் इत्यादिயால் - நிலை, स्थिराध्यवसायम् - मोक्षத்துக்கு परम्परया कारणமான कर्मयोगज्ञानयोगங்களென்ன, साक्षादुपायங்களான भक्ति प्रपत्तिகளென்ன, இவற்றில் இவையெல்லாம் भगवद्भजनத்தில் शास्त्रीयमर्यादैகளென்றபடி. यतमानेत्यादि - இங்கே आदि शब्दத்தாலே व्यतिरेकसंज्ञा, वशीकारसंज्ञा, एकेन्द्रियसंज्ञैகளுக்கு ग्रहणम् । दोषाणां परिपाचनायारम्भो यतमानसंज्ञा । कृतप्रायश्चित्तेभ्योऽकृतप्रायश्चित्तानां पृथक्करणं व्यतिरेकसंज्ञा -

(सा.स्वा) प्रपत्तिप्रभावமும் समर्थिத்து भागवतप्रभावத்தை समर्थिக்கக்கடவராய் पूर्वपक्षத்தை उपक्षेपिக்கிறார் - நம் दर्शनத்தில் इति । நம் दर्शनமென்கையாலே ''नाथोपज्ञम्'' என்கிற श्रीभाष्यकार दर्शनस्थरे भागवतரென்றபடி - कर्मेति - कर्मयोगाद्यन्यतरमुखेन भगवत्प्रवण भागवतரென்று கருத்து - यतमानेति - आदिशब्देन व्यतिरेकवशीकारैकेन्द्रियसंज्ञानां ग्रहणम् - दोषाणां परिपाचनायारम्भो यतमानसंज्ञा - कृत प्रायश्चित्तेभ्यः पापेभ्यः अकृतप्रायश्चित्तानां पृथक्करणं -

(सा.प्र) स्वीकार्यत्वमुक्त्वा भागवतप्रभावेऽपि प्रमाणाविरुद्धांशासङ्कोचेन स्वीकार्यत्वं समर्थयितुं कैश्चिदुक्तं केषाञ्चित्प्रभावाभावंநம் दर्शनத்தில் इत्यादिना सोपपत्तिकमनूद्य இதுவும் इत्यादिना व्यतिरेकोदाहरण प्रदर्शन पूर्वकं परिहरति - यतमान संज्ञाद्यवस्थैகளிலே इति । कर्मणां परिपाचनायारंभे यतमान संज्ञा - कृत प्रायश्चित्तानामकृत प्रायश्चित्तेभ्यो विवेचने व्यतिरेकसंज्ञा - ''विषया विनिवर्तन्ते निराहारस्य देहिनः - रसवर्जम्'' इत्युक्तप्रकारेण -

(सा.वि) एवं प्रपत्ति प्रभावस्य प्रमाणान्तराविरुद्धांशस्य स्वीकारत्वमुक्त्वा पुनरप्युपाय प्रभावोपपादनार्थ मेव भागवतप्रभावं विवक्षुः कैश्चिद्वैराग्य प्राधान्यवादिभिरर्थकामादि सक्त भागवता असंभाष्या इति तत्प्रभाव न्यूनतां मत्वोक्तं दूषयितुमनुवदति - நம் दर्शनத்தில் इति - நம் दर्शनத்தில் நிலையுடையவராய், अस्मद्दर्शननिष्ठावन्तः - यतमानाद्यवस्थैகளிலே, दोषाणां परिपाचनायारंभो यतमानसंज्ञा । कृतप्रायश्चित्तानां अकृत प्रायश्चित्तेभ्यः -

(सा.सं) शङ्का निरस्ता अथ परोक्तं प्रभावन्यूनता लिङ्गमनूद्य समाधत्ते । நம் दर्शनத்திலே इति - நிலை, निष्ठा - यतमानसंज्ञावस्था, व्यतिरेक संज्ञावस्था, एकेन्द्रिय संज्ञावस्था, वशीकरण संज्ञावस्था, इत्यवस्था चतुष्टयमस्ति तत्र बाह्येन्द्रियाणि विषयेभ्यः प्रतिसंहृत्य मन आत्मन्यवस्थापयितुं यदा यतते सेयं प्रथमा - विषय राग बलादात्मनि स्थितिमलभमानस्य मनसो रागाद्यपनोदननिमित्त विषयदोष चिन्तनेन या आत्मनो निर्दुष्टत्वचिन्तनावस्था मनसः पक्वतापादिका सा द्वितीया । ततः पक्वेऽपि विषयवासना आत्मानुबुभूषा शेमुषीं प्रति विभत्सेवता निवर्तयितुं क्रमविशेष परिणता लम्बन संशीलन विशेषे यदा यतते सा तृतीया ।

**मूलं - अर्थसङ्गादि**களாகிற சில **व्याधि**கள் **निश्शेष**மாக **शमि**யாதமட்டைக் கொண்டு அவர்கள் **प्राकृत**ரைப் போலே **असंभाष्य**ரென்று சில **वैराग्यमात्रप्रधान**ர்கள் சொல்லுவர்கள் - இதுவும் **भगवच्छास्त्रादि**களில் **खिन्नवृत्यादि प्रकरण**ங்களாலே **परिहार्य**ம்.

(सा.दी) बाह्येन्द्रिय प्रवृत्त्यभावेऽपि मनसो रागमात्रप्रवृत्तिरेकेन्द्रियसंज्ञा। दृष्टश्रुतविषयवैतृष्ण्यवतो वशीकारसंज्ञा। वैराग्य மென்றிவைகளுக்கு लक्षणम् - अर्थसङ्गादिகள், आदिशब्दத்தால் कामक्रोधादि ग्रहणम् - खिन्न वृत्त्यादि प्रकरणங்களாலே - खिन्नवृत्तिகள், देहयात्रै நடவாத दरिद्रர். அவர்களுடைய वर्तनं சொல்லும் प्रकरणங்களாலேயென்றபடி - "निर्धनांश्चरतो लोकेवृत्त्यर्थं भृशकर्शितान्। नावमन्येततैर्लोकं पवित्री कुरुते हरिः" इत्यादि கண்டுகொள்வது. अपथप्रवृत्तர் -

(सा.स्वा) व्यतिरेकसंज्ञा। बाह्येन्द्रिय प्रवृत्त्यभावेऽपि मनसो रागमात्रप्रवृत्तिरेकेन्द्रियसंज्ञा। दृष्टश्रुत विषये वैतृष्ण्यवतो वशीकारसंज्ञा - अर्थसङ्गादीत्यादिशब्देन कामक्रोधादिग्रहणम् - खिन्नवृत्त्यादि प्रकारणங்களாலே - खिन्नवृत्त्यादिகள், देहयात्रै நடவாத दरिद्रர் - இவர்களுடைய वर्तनं சொல்லும் प्रकरणங்களாலே என்றபடி. "निर्धनांश्चरतो लोके वृत्यर्थं भृशकर्शितान्। नावमन्येत तै र्लोकं पवित्री कुरुते हरिः" என்று சொல்லிற்றிறே - "डम्भिहैतुक पाषण्डि बकवृत्तींश्च वर्जयेत्" என்று கிரை बुद्धि भेद निबन्धनமாக असम्भाष्य ராகச் -

(सा.प्र) शब्दादिविषयेभ्यो बाह्येन्द्रियाणां निवर्तते एकेन्द्रियसंज्ञा। "प्रजहाति यदा कामान्" इत्याद्युक्त प्रकारेण दृष्टानुश्रविक वैराग्ये वशीकार संज्ञेति साङ्ख्योक्त यत मान संज्ञादिरूपावस्थास्वित्यर्थः - भगवच्छा स्त्रादीति - "अनाचारान् दुराचारान ज्ञातॄन हीन जन्मनः। मद्भक्तान् श्रोत्रियो निन्दन् सद्यश्चण्डालतां व्रजेत्। निर्धनांश्चरतोलोके वृत्त्यर्थमिहकर्शितान्। नावमन्येत तैः लौकं पवित्री कुरुतेहरिः" इत्यादि भगवच्छास्त्र शाण्डिल्य स्मृत्यादिषु -

(सा.वि) पृथक्करणं व्यतिरेकसंज्ञा - बाह्येन्द्रिय प्रवृत्त्यभावेऽपि मनसा रागमात्रप्रवृत्तिरेकेन्द्रियसंज्ञा - अत एतदवस्थासु अर्थसङ्गादिरूपाणाम् - சில व्याधिகள், कतिपयव्याधीनाम् - निश्शेषமாக शमि யாதமட்டைக் கொண்டு, निश्शेषं यथा तथा शान्त्यभाव मात्रं स्वीकृत्य असंभाष्या इति - சில वैराग्यमात्र प्रधानர், दुष्टश्रुत्तविषयवैतृष्ण्य रूपवशीकार संज्ञावन्तः - சொல்லுவர்கள், वदन्ति। तत्र परिहार माह - இதுவும் इति - खिन्नवृत्त्यादि प्रकरणங்களாலே, देहयात्राया असम्भवेन श्राम्यन्तः खिन्नवृत्तयः। तद्वृत्तिप्रकरणे "निर्धनांश्चरतो लोके वृत्यर्थमिह कर्शितान्। नावमन्येत तैर्लोकं पवित्रीकुरुते हरिः" इत्यादिक मत्रापि द्रष्टव्यम् - अमार्ग -

(सा.सं) समस्त वासना विलयानन्तर परमवैराग्य दशा या सा तुरीया - व्याधिवदवर्जनीयत्व सूचनाय व्याधिகள் इत्युक्तिः - प्राकृतரை इति। "अविद्याः प्राकृताः प्रोक्ताः" इत्युक्त्या अज्ञரைப் போலே इत्यर्थः - खिन्नवृत्त्या दयो ह्यनुवृत्तार्थादि सङ्गा अपि मुक्तिमापुरिति तत्तत्प्रमाणसिद्धम् - तद्वदिह च समाधिमभिप्रेत्य खिन्निवृत्त्यादीत्युक्तम् -

**मूलं - ''डम्बि हैतुकपाषण्डि बकवृत्तींश्च वर्जयेत्। येतु सामान्य भावेन मन्यन्ते पुरुषोत्तमम्॥ ते वै पाषण्डिनो ज्ञेयास्सर्वकर्म बहिष्कृताः। पुंसां जटा भरण मौण्ड्यवतां वृथैव।''**

**इत्यादि**களிற்படியே வழிதப்பினார் பக்கல் சொல்லும் வார்த்தையை நல் வழியிலடிதடு மாறினார் பக்கல் சொல்லலாகாதிறே - **भागव**தரில் **ऊनहीन -**

(सा.दी) பக்கல் சொல்லுமத்தை நல்வழியிலிடரினார் பக்கல் சொல்ல லாகாதென்கிறார். डम्बिहैतुकेत्यादि - हैतुकाः, युक्तिमात्रशरणाः - पाषण्डिகள், देवतान्तरपरत्व वादिप्रमुखர் - बकवृत्तिகள், वञ्चनया आश्रितघातकர் - पाषण्डिகளை उदाहरिக்கிறார் - येतु सामान्येत्यादि - भागवतரில் इत्यादि - ऊनரென்று तापसंस्कार मात्रहीनர் - हीनன், पुण्ड्रसंस्कारहीनன் -

(सा.स्वा) சொல்லுகிறாப் போலே இவர்களுக்கும் **त्याग**கூடாதோ? என்ன வருளிச்செய்கிறார் - **डम्बीति** - நல்வழிகளிலேயிழிந்தவர் களிலும் **ऊनहीनादि भागवतविषय**த்தில் பரிமாற்றம் சொல்லுகையாலே **भागवतप्रभावं सङ्कुचित**மாகாதோ? என்னவவர்களுக்கு **मोक्षपुरुषार्थ**மில்லையென்று **प्रभाव**த்தைக்குறைக்கிறதோ? அவர்கள் **विषय**த்தில் **अपचारमनुमतं बाधक**மன்றென்று சொல்லுகிறதோ? என்று **विकल्पि**த்து **क्रमेण उत्तर**மருளிச்செய்கிறார் - भागवतரில் इत्यादिना। ऊनன், तापसंस्ळार मात्रविधुरன் - हीनன், पुण्ड्रसंस्कारहीनன் -

(सा.प्र) खिन्नवृत्त्यादीनामप्यवमाननिषेधात्प्रामाणिकानां वैराग्यावश्यकत्वे तात्पर्यादसम्भाष्यत्वं न विवक्षितमित्यर्थः। வழிதப்பினார் பக்கலில், सन्मार्गाद्भ्रष्टविषये - நல்வழியில் அடிதடுமாறினார் பக்கலிலே, सन्मार्गे स्खलत्सु - ननु ''तथा स्वकर्मशास्त्रेश गुरुसत्सङ्गवर्जिताः। ऊनहीनस्रस्तनष्ट दग्धाज्ञेयास्समाख्यया'' इत्यारभ्योनादीनां लक्षणकथनपूर्वकं तेषु वृत्तितारतम्योक्तेर्विषमवृत्तेश्चाव मानपर्यवसितत्वात् खिन्नवृत्तीनामनवमन्तव्यत्वोक्तिर्नोपपद्यत इत्यत्र शास्त्राविहितवृत्तितारतम्यस्य अवमानपर्यवसितत्वानुपपत्तेर्विशिष्य नावमन्येतेत्युक्तेर्वचनविरोधे न्यायो न प्रवर्ततेत्यभिप्रायेणाह - भागवतரில் इत्यादिना -

(सा.वि) प्रस्थितेषूक्ता निन्दामार्गप्रवृत्तेषु न कार्येत्याह। डम्बिहैतुकेत्यादिना - நல்வழியிலே, समीचीनमार्गे। அடிதடுமாறினார் பக்கல், पादस्खलनवद्विषये - சொல்லப்புக்காதிறே - वक्तुमयुक्तं खतु - अमार्गप्रवृत्तविषये विहितनिन्दामार्ग एव किञ्चित्स्खलन दिषये न कार्येति भावः ननु भगवच्छास्त्रे ''तथा स्वकर्मशास्त्रेश गुरुसत्सङ्गवर्जिताः। ऊनहीन स्रस्तनष्टदग्धा ज्ञेयास्समाख्यया'' इत्यारभ्य ऊनादीनां लक्षणपूर्वकं वृत्तितारतम्योक्तेर्वृत्तितारतम्यस्यावमानपर्यवसितत्वात्कथमनवमन्तव्यत्वमित्याशङ्क्य शास्त्रीयवृत्ति तारतम्यस्यावमान पर्यवसितत्वाभावाद्विशिष्य नावमन्येतेति वचनाच्च तत्रापि नावमानं कार्य मित्येतेषामपि क्रमेण सद्गतिसंभवमाह - भागवतரில் इति - ऊनाः, तापसंस्कार हीनाः। हीनाः पुण्ड्र संस्कारहीनाः -

(सा.सं) तर्हि प्रतिपत्तितारतम्यविधानं कथं सङ्गच्छत इत्यत्राह - भागवतரில் इति - ऊनाः,

**मूलं - परिस्रस्तनष्टविषय**ங்களி(லும்)ல் பரிமாற்றங்களில் **तारतम्यं विधि**த்த தேயாகிலும் **ऐकान्त्यं** குலையாதேயிருக்கில் முடிவிலொரு விரகாலே இவர்கள் ஈடேறிவிடுவர்கள் - இவர்கள் திறத்திலும் **अपचार** மாகா தென்றிறே **शास्त्रं विधि**த்தது -

**''नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्।।''**

---

(सा.दी) परिस्रस्तனாவான், नामसंस्कारविधुरன் - नष्टனாவான், मन्त्रसंस्कार हीनன் - பரிமாற்றம், आदरम् அதில் तारतम्यं विधिத்த தேயாகிலும் அவர் பக்கல் अपचारपरिहरणम् सर्वत्र समानमेव विहित மென்கிறார். இவர்கள்திறத்திலுமென்று - नेहाभिक्रमेत्यादि - इह, कर्मयोगத்தில். अभिक्रमम्, उपक्रमम् எவ்வளவடியிட்டது அவ்வளவுக்கொருக் कालத்திலும் नाशமில்லை - அங்கப்படி யாகில் நடுவேவிட்டாலும் प्रत्यवायமுமில்லை - महाप्रभावங்களான भक्तिप्रपत्तिகளில் अभिमुखரைக்குறைய நினைக்கை -

---

(सा.स्वा) परिस्रस्तன், नामसंस्कार हीनன் - नष्टனாவான், मन्त्रसंस्कारविधुरன் - பரிமாற்றம், आदरम् - ''तथा स्वकर्मशास्त्रेशगुरुसत्सङ्गवर्जिताः। ऊनहीन परिस्रस्त नष्टा ज्ञेयास्समाख्यया'' इत्यादि प्रकारेण - ऊनाः, स्वकर्म हीनाः, हीनाः, - स्वसूत्रत्यागिनः। परिस्रस्ताः, स्वगुरुदेवता त्यागिनः - नष्टाः सत्सङ्गवर्जिताः என்று சிலர் சொல்லுவர்கள். ஒரு விரகாலே इति - यथोचित प्रायश्चित्तத்தாலேயென்றபடி. அவர்கள் திறத்திலும் इति। ''ये ब्राह्मणास्तेहमसंशयं नृपतेष्वर्चितेष्वर्चितोऽहं यथावत्। तेष्वेव तुष्टेष्वहमेव तुष्टो वैरं च तैर्यस्य ममापि वैरम्। वैष्ज(ष्ण?) वे परिवादाच्च पतत्येव न संशयः'' इत्यादिகளிலே யென்றபடி. இப்படி उपायनिष्ठரான ऊनहीनादिகள் निष्ठाहानिயிலும் ऐकान्त्यं குலையாதேயிருந்தால் ஈடேறிவிடுவர்களென்று சொன்னது கூடுமோ? அதுக்கு प्रमाणமில்லையே? என்ன வருளிச்செய்கிறார் - नेहाभिक्रम इति - इह, कर्मयोगे। अभिक्रमः, उपक्रमः। उपक्रान्तस्याल्पस्यापि नाशो नास्ति। मध्ये विच्छेदे प्रत्यवायोऽपि नास्ति - शेषम्, स्पष्टम्। ஆனாலும் भागवतருக்கு -

---

(सा.प्र) பரிமாற்றங்களில், उपचारेषु। तर्ह्यूनादीनामाचारशास्त्रेशगुरुसङ्गविवर्जितत्वात्तेषां च ''विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः। त एते बहुपाप्मानः - आचारहीनन्न पुनन्ति वेदाः'' इत्यादिभि रतिपापिष्ठत्व बोधनात्तेषां क्रमेण मोक्षोऽपि नोपपद्यत इत्यत्राह - नेहाभिक्रमेत्यादि।

---

(सा.वि) परिस्रस्ताः, नामसंस्कार रहिताः - नष्टाः, मन्त्र संस्कार रहिताः। பரிமாற்றங்களில், उपचारेषु - பரிமாற்றம், आदर इति केचित् - तारतम्यं विधिத்ததேயாகிலும், तारतम्यस्य विहितत्वेऽपि ऐकान्त्यंகுலையாதேயிருக்கில், ऐकान्त्यं यथा न नश्येत्तथा स्थितौ - முடிவிலே, अन्ते। ஒருவிரகாலே, केनचिदुपायेन - ஈடேறிவிடுவர்கள், सिद्धार्था भवन्ति - नन्वेतेषां शास्त्रगुरुसत्सङ्ग विवर्जितत्वात्कथमुपाय प्रवृत्तिरित्यत्राह - नेहाभिक्रमनाश इति - स्थितांशस्य समीचीनत्वात् सत्सङ्गगुर्वादिकं च संपादयतीति भावः।

---

(सा.सं) स्वकर्महीनाः - हीनाः, स्वगुरुत्यागिनः - स्रस्ताः, स्वसूत्रत्यागिनः नष्टाः, सत्सङ्गवर्जिताः। பரிமாற்றம், उपचारः - விரகாலே, प्रायश्चित्तादिमुखेन। -

**मूलं** - என்றும் ''**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ।।**''

என்றும் **कर्मयोग**த்திற்சொன்ன **प्रभावं भक्ति प्रपत्ति**களில் **कैमुतिकन्याय**த்தால் **सिद्ध**மிறே -

''**अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यस्संयग्व्यवसितो हि सः ।।
अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन । मुच्यन्ते पातकैश्सर्वैः पद्मपत्रमिवाम्भसा ।।**''

என்றும் **सर्वेश्वर**ன் தானே **अर्जुन**னையும் **धर्मपुत्र**னையும் பற்ற அருளிச்செய்தான் -

---

(सा.दी) महापचारமென்கை. भगवान् தானுமிவர்கள் பக்கல் अपचार மாகாதென்றென்கிறார். अपिचेदिति - उपायपरिग्रहात्पूर्वं सुदुराचारोऽपीत्यर्थः அன்றியே, उत्तरकालं सुदुराचारனானாலும் येनकेनापि प्रकारेण क्रोडीकार முண்டாகையாலென்றபடி. अनन्यभाक्, देवतान्तरस्पर्श மற்றவனாய் - अर्जुनனைக்குறித்து ''अपिचेत्सुदुराचारः'' என்றும் धर्मपुत्रனைக்குறித்து ''अपि पापेष्वभिरताः'' என்று மருளிச்செய்தான் - पुण्डरीक नारदसंवादத்தில் भगवत्प्रवणர் अनुवृत्तदोषராகிலும் यथार्ह प्रायश्चित्तादि मुखத்தாலே मोक्षसिद्धिயில் संशयமில்லையென்றும் निर्दोषர்க்கு कैमुत्यन्यायத்தாலே கடுக मोक्षसिद्धिயும் சொல்லிற்று - ஆகையால் அவ் उपाय तन्निष्ठ प्रभावத்தைக் குறைய நினைக்க

---

(सा.स्वा) अकृत्यानुष्ठान दशैயில் प्रभावं கூடுமோ? उपचारं தான்கூடுமோ? என்னவருளிச்செய்கிறார் - अपिचेदिति - ''कृतघ्नो नास्ति कःपुरा'' इत्यादिवदतीतग्राहका भावात्सुदुराचारो भजत इति वर्तमान निर्देशाच्च भजनकाले सुदुराचारत्वं गम्यते - एवमेव श्रीमद्गीताभाष्ये विवृतम् - साधुरेव स मन्तव्यः என்கையாலே प्रभावமும் उपचारமும் स्पष्टமென்றபடி - अपीति । मद्भक्ताः पापेष्वभिरता अपि मुच्यन्ते என்கையாலே भागवतप्रभावं सिद्धமென்றபடி. सर्वेश्वरेति । अर्जुनधर्मपुत्रयोश्श्रोत्रोरत्यन्तप्रियतमतया स्वयं च सर्वेश्वरतया सर्वज्ञतया இது तत्त्वமென்றபடி - இப்படியாகில் उत्तराघத்தில் प्रायश्चित्तं पूर्वं சொன்னது विरोधिயாதோ? என்ன भगवदाश्रयण प्रभावं प्रायश्चित्तप्रवर्तनमुखेनैव संभावितपापருக்கு पापनिवर्तक மென்றும், असम्भावितापराधருக்கு अविलम्बेन मोक्षोत्पादक மென்றும் सप्रमाणமாக उपपादिயா நின்று கொண்டு व्यतिरेकमुखेनापि भगवदाश्रयण प्रभावத்தை दृढीकरिக்கிறார் -

---

(सा.प्र) एवं भक्तप्रपन्नयोर्भ्रंशेऽपि कैमुतिकन्यायेन मोक्षसिद्धि मुपपाद्यातिपापिष्ठत्वबोधकवचनविरोधे न्यायाप्रवृत्तिशङ्कां दुराचाराणामपि भगवत्परत्वे वाचनिकमोक्षसिद्धिप्रदर्शनेन शैनूषवृत्तित्वे तदसिद्धिप्रदर्शनेन च परिहरन्निरपराधानामपेक्षितकाल एव मोक्षसिद्धिं भगवद्विमुखाना मधिक सुकृतवत्वेऽपि मोक्षाभावं चाह - अपि चेदित्यादिना -

---

(सा.वि) दुराचाराणामपि भगवद्भक्तानां सत्सङ्गतौ प्रमाणानि भगवद्विमुखानामश्वमेधवाजपेय शतवताङ्गत्य भावे च प्रमाणान्याह - अपिचेदित्यादिना सुदुराचारः, प्रपत्तेः प्रागिति शेषः - स सम्यग्व्यवसितो हि, समीचीन धर्ममुपक्रान्तवान् खलु -

---

(सा.सं) अभिरताः, अभिसन्धिपूर्वकमनुवृत्तपापाः । प्रायश्चित्तेन मुच्यन्ते इति शेषः ।

**मूलं - இப்படி व्यवस्थिமான प्रभावं रहस्यत्रयத்தில் फलनिर्देशप्रदेशங்களிலே अनुषङ्गसिद्धமாக अनुसन्धेयம்.**

(सा.दी) காட்டுகிறார் - இப்படி व्यवस्थितமான इत्यादि - व्यवस्थितम्, ஏற்றச்சுருக்க மன்றியே यथाप्रमाणं फलनिर्देशप्रदेशங்கள், व्यक्तचतुर्थ्यादिகள் - अनुषङ्गसिद्धமாக, फलं तत्प्रभावाधीनமாகையால் फलத்தோடே கூட अनुसन्धेयமென்றுகருத்து -

प्रपन्नस्यैहिकं दुःखमसह्यमपि नोहरिः । निवारयत्यतः कर्मप्रारब्धं न विनाशयेत् ।।

इत्येतद्वचनं मन्दं हितार्थी दुःखमैहिकम् । हरिर्निवर्तयेन्नैव प्रारब्धांशंतु नाशयन् ।।

अस्मद्दर्शननिष्ठानां कर्मज्ञानादिवर्तिनाम् । कादाचित्कार्थसङ्गादेर्निन्द्यातानोपजायते ।।

ऐकान्त्यं सुदृढं येषु क्वचित्तेषु स्खलत्स्वपि । अवज्ञा परिहर्तव्येत्येवं शास्त्रविनिर्णयः ।।

प्रपन्नवेषयात्राच्च तद्ज्ञानावधिवैष्णवः । आदरादनुवर्तेत किं पुनस्सत्पथे स्थितान् ।।

भगवत्क्षेत्रमरणं देहिनामुपकारकम् । प्रातिकूल्यत्यजामेव विपक्षेऽति प्रसङ्गतः ।।

(सा.स्वा) இப்படி इति । फलनिर्देशप्रदेशங்களிலே, नारायणपदोत्तरचतुर्थीप्रभृति களிலேயென்றபடி - अनुषङ्गसिद्धமாக, फलं प्रभावाधीनமாகையாலே अर्थसिद्धமாக अनुसन्धेय மென்றபடி.

ஆனாலும் शरण्यன் निदष्टனாகையாலே अनवच्छिन्न प्रभाव வானாகிலும் भागवतர் जात्यादि कृतापकर्षवान् களாகையாலே तथाविधप्रभाव ராகக்கூடுமோ? என்கிற शङ्कै யைப் परिहरித்துக்கொண்டு एतादृशप्रभावोपदेष्टाக்களான देशिकர் பக்கல் कृतज्ञतानुसन्धान रूपமான -

(सा.प्र) இப்படி व्यवस्थिமான इत्यादिना - फलनिर्देशप्रदेशेष्विति । मूलमन्त्रे मन्त्ररत्ने च फलनिर्देशपरे नारायणायेति शब्दे सिद्धसाध्योपायप्रभावो विवक्षितः । तन्निष्ठस्य प्रभावश्चाध्याहृते स्यामित्यत्रेति द्रष्टव्यमिति भावः । -

एवं प्रतिपादितस्य भागवतप्रभावस्य वाङ्मनसागोचरमाहात्म्यभगवत्परमसाम्यश्रवणादपरिच्छेद्यत्व सिद्धेस्सार्ववर्णिकानामपि भागवतानामपरिच्छिन्नमाहात्म्यवत्वमविशिष्ट -

(सा.वि) अनुषङ्गसिद्ध மான इति । फलप्रदाने फलस्य प्रभावं विना सिद्ध्यभावात्तदनुषङ्गसिद्धः प्रभावोऽपि फलनिर्देशस्थलेऽनुसन्धेय इत्यर्थः ।

सर्वभागवतानां माहात्म्यं भगवत इवापरिच्छेद्यं न विस्मयनीयमित्याचार्या उपदिदिशु -

(सा.सं) இப்படி व्यवस्थितமான इति । प्रमाणोपप्लवरहितस्थले यथा प्रमाणम्, प्रमाणविरोधवति विशेषवचनत उत्सर्गापवादादि नयेनच सङ्कुचितविषयतया व्यवस्थितेत्यर्थः । अनुषङ्गेति - "दुराचारोऽपि" इत्यारभ्य, "प्रभावात्परमात्मनः" इत्यादिना बोधित भक्तिमुखे नाप्यसङ्कुचित प्रभाववन्तं प्रति किङ्करता तत्तदनुगुणतया यावद्भक्त पर्यन्तेति भक्तकैङ्कर्यरूपमपि फलं प्राप्यान्तर्गतं तत्प्रतिसम्बन्धिभक्त प्रभावोऽपि फलपरेणानुसन्धेय इत्यनुषङ्गसिद्धமாக इत्युक्तम् । -

भगवच्छरणारविन्दयोर्न्यस्तभराणां प्रभावे भगवानेव सदृश इत्युक्ते विस्मयो -

**मूलं - உண்மையுரைக்குமறைகளிலோங்கியவுத்தமனார், வண்மையளப்பரிதாதலில் வந்துகழல் பணிவார், தண்மைகிடந்திடத் -**

(सा.दी) இவ் अधिकारार्थத்தைப் பாட்டாலும் सङ्ग्रहिக்கிறார். உண்மையுரைக்கும் इत्यादि - உண்மையுரைக்கும் மறைகளில், सत्यवादिகளான उपनिषद्भागங்களில். - ஓங்கிய उत्तमனார், निस्समाभ्यधिकत्वेन प्रतिपाद्यனான पुरुषोत्तमன் - வண்மை, वैलक्षण्य - सिद्धोपायத்தினுடைய प्रभावமென்றபடி. அளப்பரிது, परिच्छेदिக்க अशक्यமென்கை. ஆதலில், ஆகையால். उपायप्रभावं निरवधिकமாகையாலென்றபடி - வந்து கழல்பணிவார், अनन्यगतिகளாய் வந்து திருவடிகளை समाश्रयिப்பாருடைய - தண்மை, नैच्यं -

(सा.स्वा) பாட்டால் अधिकारार्थத்தை सङ्ग्रहिக்கிறார் - உண்மை इति - உண்மை, உள்ளபடி. உரைக்கும், सत्यवादिகளான. மறைகளில், वेदங்களில் - वेदान्तங்களிலென்றபடி - ஓங்கிய, प्रतिपाद्यனான - निस्समाभ्यधिकत्वेन प्रतिपद्यனான - உத்தமனார், पुरुषोत्तमனுடைய. வண்மை, वैलक्षण्यम् । प्रभावமென்றபடி. அளப்பரிது, परिच्छेदिக்க अशक्यமென்கை - ஆதலில், ஆகையால் - सिद्धोपाय प्रभावमपरिच्छिन्न மாகையால் - வந்து, आकिञ्चन्यानन्य गतित्व युक्तனாய் வந்து. கழல் பணிவார், திருவடிகளை आश्रयिக்குமவர் - प्रपन्नருடைய வென்றபடி - தண்மை, தாழ்ச்சி - जात्यादिकृतनैच्यम् - கிடந்திட,

(सा.प्र) मेवेति पक्षपातरहितास्मदाचार्या आवोचन्नित्याह - உண்மையுரைக்கும் - इत्यादिना - உண்மையுரைக்கும் மறைகளில், अपौरुषेयतया कारणदोषबाधकप्रत्यय रहितत्वाद्यथावस्थितार्थबोधनशीलेषु वेदेषु । ஓங்கிய उत्तमனார் "वेदाहमेतं पुरुषं महान्तम्" इत्यादिषु सर्वोत्कृष्टतया बोधितस्य पुरुषोत्तमस्य - வண்மையளப்பரிது, प्रभावः परिच्छेत्तुमशक्यः - ஆதலில், अत एव - भगवतो परिच्छिन्नप्रभाववत्वादेवेत्यर्थः - வந்து கழல் பணிவார்தண்மை கிடந்திட, सर्वस्वामी भगवान्नस्माकमपि स्वामीत्यवगम्य स्वस्वातन्त्र्यबुद्धिमपास्य तदाराधनरूपसंमार्गे आगत्य तच्चरणारविन्दयोः प्रणिपततां नैच्ये स्थितेऽपि -

(सा.वि) रिति गाधयाह - உண்மையுரைக்கும் इत्यादिना - உயர்ந்தவர், ज्ञानादिभिर्महान्तोऽस्मदाचार्याः - உண்மை, याथार्थ्यम् - உரைக்கும், वदन्तीषु - மறைகளில், श्रुतिषु - ஓங்கிய "नतत्समश्चाभ्यधिकश्चदृश्यते" इत्यादिना - सर्वोत्तमत्वेन प्रतिपादितस्य - உத்தமனார், पुरुषोत्तमस्य - வண்மை, प्रभावः - அளப்பரிது, परिच्छिद्य ज्ञातुमशक्यः - ஆதலில், अतः - वस्तु, भगवत्समीपमागत्य - கழல், चरणौ। பணிவார், आश्रयताम् - தண்மை, अपकर्षे जात्यादि न्यूनत्वे । கிடந்திட विद्यमानेऽपि -

(सा.सं) न भवत्येव - तात्विकैवेषोक्तिरित्यवोचन्नित्याह - உண்மைइति - உயர்ந்தவர், महादेशिकाः - உண்மை, वस्तुस्थितिम् - ஓரந்தவிர, पक्षपातराहित्येन - உரைத்தனர், उपदिदिशुः - किमित्यत्राह - உண்மை इत्यादि வியப்பிலதாம் इत्यन्तेन - याथात्म्यप्रतिपादकेषु वेदेषु समाधिकरहितत्वेन प्रतिपादित पुरुषोत्तमस्य - வண்மை इति - प्रभावः - इयदिति ज्ञातुं न शक्तमिति - "मामेव ये प्रपद्यन्ते" इत्युक्त्या आकिञ्चन्येनागत्य चरणावाश्रयतां - தண்மை इति - प्रकृतिसंबन्धादि निबन्धना -

**मूलं** - தர (த்தா) மளவென்ற வியப்பிலதாம், உண்மை யுரைத்தனரோரந்த விரவுயர்ந்தனரே ॥ ३३ ॥

(सा.दी) जातिव्यवस्थैயென்றபடி - கிடந்திட, இருந்ததாகிலும். அத்தாலவர்களுக்கேது குற்றமென்று கருத்து - தரம், வரிசை. प्रभावமென்றபடி "देवा अपि न तं विदुः" என்று प्रभावம் - அளவென்னவியப்பிலதாம், परिच्छिन्नமென்கிறவர்க்கு अगोचरமாம். என்னுமுண்மையை - உயர்ந்தனர், ज्ञानादिகளாலும் उन्नतரான अस्मदाचार्यர்கள் - ஓரந்தவிர, भागवतர் अनुवृत्तदोषர் निर्दोषரென்கிற पक्षपातंவைய்யாதே - यद्वा सत्துக்களே இவ்अर्थத்துக்கு उपदेशयोग्यர் - मादृशरनर्हரென்று पक्षपातं பண்ணாதே உரைத்தனர், उपदेशिத்தார்களென்கை ।।३३ ।।

(सा.स्वा) இருந்ததாகிலும் - அத்தாலவர்களுக்கு पुरुषार्थहानिயில்லாமையாலும் प्रभावनिमित्त भगवद भिमानத்தில் न्यूनतैயில்லாமையாலும் प्रभावத்துக்கு न्यूनतैயில்லை என்று கருத்து - தரம், வரிசை, प्रभाव மென்றபடி - அளவென்ற, परिच्छिन्नமென்கிற - வியப்பிலதாம், வியப்பு. उक्ति - परिच्छिन्नமென்கிற वाक्கில்லாததாம் - अपरिच्छिन्नமென்றபடி - "यो ह्येनं पुरुषं वेद देवा अपि न तं विदुः" என்றதிறே - உன்மை, भागवतप्रभावम् अविच्छिन्नமென்கிற यथार्थமான अर्थத்தை - உயர்ந்தவர், ज्ञानानुष्ठानங்களாலே अधिकரான. व्यासादिभ्योऽप्यधिकரான अस्मदाचार्यர்கள் - ஓரந்தவிர, पक्षपातंதவிர, सदोषभागवतர் निर्दुष्टभागवतரென்று पक्षपात மன்றிக்கே. यद्वा, இவன் मन्दाधिकारि, இவன் पूर्णाधिकारीஎன்று पक्षपातமில்லாமல் केवलवात्सल्यத்தாலே உரைத்தனர் उपदेशिத்தருளினார்களென்றபடி - ।।३३ ।।

இப்படி भागवतप्रभावमपरिच्छिन्नமென்று சொன்னதுகூடுமோ? भागवतனுக்கே पूर्वदशैயில் एतादृशप्रभावமில்லையே? पूर्वदशैயில் प्रभावமில்லா விட்டாலும் प्रपत्तिप्रयुक्तமாக इदानीं तादृशप्रभावமுண்டென்னில் भक्तियोगकृतமாக भक्तिनिष्ठனுக்கும் एतादृशप्रभावं प्रसङ्गिயாதோ? அப்போது "सत्कर्मनिरता" इत्यादिना प्रपन्नரை अधिकராக स्तुतिக்கிறது கூடுமோ? किञ्च उत्कृष्टप्रपत्ति प्रयुक्तமாக प्रभावंசொல்லில் "तस्मात् सत्यं परमं वदन्ति" इत्यादिना सत्यतपः प्रभृतिகளுக்கும் परमत्वं சொல்லுகையாலே तन्निष्ठர்க்குமே तादृशप्रभावं प्रसङ्गिயாதோ? என்ன सत्यतपः प्रभृति सकलधर्मपिक्षयाप्यत्यन्ताभ्यर्हिततया, सकल -

(सा.प्र) தரமளவென்ற வியப்பிலதாமுண்மையுரைத்தனர், अपरिच्छिन्न प्रभावो भगवानेवैतेषां सदृश इत्युक्तेऽपि किमिदं विस्मय नीयम् - यतोऽपि भगवानेव "अनुव्रजाम्यहम् नित्यं पूयेयेत्यङ्घ्रिरेणुभिः" इत्यादि भिस्स्वस्यापि पावनतया भागवतानवोचत् - अतो न विस्मयनीय मिदमित्येतत्सत्यमित्यवोचन् - ஓரந்தவிர, पक्षपात राहित्येन - உயர்ந்தனரே, उन्नता महान्तो ज्ञानार्थका वादिहंसनवाम्बुवाहा प्रभृतयः पूर्वाचार्या इत्यर्थः ।। ३३ ।।

(सा.वि) स्वयं भगवानेव - அளவு, उपमानम् - तेषां प्रभावे भगवानेव तुल्य इत्यर्थः - என்று, इत्युक्ते यथा । வியப்பு, विस्मयः - இலதாம், न भवेत्तथा - உண்மை, सत्यम् - ஓரந்தவிர, पक्षपातराहित्येन - सर्ववर्णसाधारण्येन - உரைத்தனரே - अवोचन् ।। ३३ ।।

(सा.सं) प्रकर्षे विद्यमानेऽपि तेषां प्रभावे । தரமளவு, स भगवानेव तुल्यः । "न च पूज्योऽयह्यहम् । ये ब्राह्मणास्तेऽहमसंशयं नृप" इत्यादिभिरुक्तः வியப்பிலதாம், न विस्मयनीयमिति महादेशिका वस्तु स्थितिमपक्षपातेनोपपदिदिशुरित्यर्थः ।। ३३ ।।

**मूलं - रागद्वेष मदादि कैरिहमहारक्षोभिरक्षोभि(ते)तं नित्ये रक्षितरि स्थिते निजभरन्यासाभिधानं तपः।**

(सा.दी) श्रीभागवतருடைய प्रभावं वेदवाचामप्यगोचर மென்று उपसंहरिக்கிறார் - रागद्वेषेति - रागादिகளே महारक्षस्ஸுக்கள் - राक्षसரையும் வெல்லுகையாலே महारक्षस्त्वम् - आदिशब्दं मोहादिயை காட்டும் - इह, जगति। तैरक्षोभिरक्षोभितम्, अनभिभूतम् - मोक्षविषय प्रपत्तिக்கு रागादिகளால் प्रतिबन्धமில்லை. शिक्षयापि क्रोडी करोति என்கிறாரிறே - नित्ये रक्षितरि, नित्यरक्षकனான श्रियःपति विषयத்தில் - रक्षणं, मोक्षः - स्थिते என்கையால். எப்போ நம்மை आश्रयिப்பார்களென்று பார்த்துக்கொண்டிருக்கை தோற்றுகிறது. सन्निहिते என்றதாகவுமாம் - निजभरन्यासाभिधानम् - आत्मरक्षा भरसमर्पणाख्यम् - यत्तपः,

(सा.स्वा) विरोधिनिरासकतया, सकलेष्टप्रदतया, आशुकारितया, अन्यैश्च वैलक्षण्यैर्वेदानामप्यगोचरापरिच्छिन्न प्रभावयुक्ततया न्यासस्य तत्प्रयुक्त भागवत प्रभाव वर्णनमुपपन्नमित्यभि प्रायेण श्लोकेनाप्यधिकारार्थத்தை सङ्ग्रहिக்கிறார் - रागेति, रागः, विषयकामना - द्वेषः, तत्प्रतिबन्धकेषु द्वेषः - मदः, स्वोत्कर्षाभिमानः - एवमादिभिरनात्मगुणैः - महारक्षोभिः, राक्षसानामप्येते अनात्मगुणा आत्मनाशक इति महारक्षस्त्वेन रागादयो निरूप्यन्ते। एतैरक्षोभिते, अप्रतिबद्धे। नित्ये रक्षितरि, नित्यं रक्षितरि प्रपन्नानां रागादिदोषे सत्यपि सङ्कल्पितकाले भगवता फलप्रदानादाश्रितरागादिरक्षोभिरक्षोभिते इत्यर्थः। नित्यमाश्रितरक्षणव्याजान्वेषणपरतया नित्यरक्षितृत्वम् - स्थिते, नित्यरक्षितृत्वेन स्थिते - नित्ये स्थिते अक्षोभिते रक्षितरि विषये - अक्षोभितमिति पाठे तपोविशेषणम् - अक्षोभितं यत्तपः, रक्षितरि स्थिते -

(सा.प्र) एवमुपायनिष्ठानां प्रभावमपरिच्छिन्नं प्रदर्श्योपायप्रभावमप्यपरिच्छिन्नं प्रदर्शयति। रागद्वेषेत्यादिना - मात्सर्यादिरादिशब्दार्थः। महारक्षांसि, रावणकुम्भकर्णादीनि यथा भगवद्व्यतिरिक्तै रनिवर्त्यानि। तथैतेऽपि भगवद्व्यतिरिक्तैरनिवार्या इत्यर्थः। एवं च प्रपन्नानां श्रीमन्नारायण एव रक्षक इति तैरक्षोभितम् - स्थिते प्रतिष्ठिते ''स्थिते मनसि सुस्वस्थे''

(सा.वि) यैर्भगवति भरन्यासरूपं सर्वोत्कृष्टं तपः कृतः तन्महिमा देवानामपि परिच्छेत्तुमशक्य इत्याह - रागेति - रागः, विषयाभिलाषः - द्वेषः, विषया लाभविरोधी क्रोधः - मदः, द्रव्यपाण्डित्यादि जनितो गर्वः - आदिशब्देन मोहादिसङ्ग्रहः - एतैरेव महोरक्षोभिः, अतिपीडाकरैः। धर्मध्वंसिभिरिति भावः - अक्षोभितम्, क्षोभमप्रापितम्। रागद्वेषादि कृतोपप्लव इतरतप इव भरन्यासतपो नाशयितुं न प्रसरतीति भावः - नित्ये, प्रलयप्राक्कालिकतपः फलमपि प्रदातुं लग्नकतया सन्निहिते - रक्षितरि, भगवति - निजभरन्यासाभिधानं, निजभर समर्पणनामकम् -

(सा.सं) अथ साध्योपायनिष्ठप्रभावोऽपि साध्योपायप्रभावायत्त इति तत्प्रभावमाह - रागेति - रागः, विषयतृष्णात्मिका बुद्धिः - द्वेषः, भगवद्भागवतविषये प्रतिकूलता बुद्धिः - मदः, कुलविद्याधन वृत्तादि सम्भवो गर्वः - आदिशब्देन मोहमात्सर्यादय अकृत्यकरणादयश्च गृह्यन्ते - इह, अस्मिन् जगति - महा रक्षोभिः, आस्तिकानामेतान्येव महारक्षांसि। एतै रक्षोभिते, नित्यं रक्षितरि स्थिते - नहि प्रपन्ने रागादिकमस्तीति भरस्वीकरणकार्यमपि लुप्तम् भवति - नित्यरक्षणजागरूकस्सन् रक्षणदीक्षायामेव व्यवस्थितो हि स इति भावः। एवं व्यवस्थिते भगवति स्वात्मरक्षा भरसमर्पणरूपम् -

**मूलं - यत्कक्षीकृतमत्यशेतविविधान् धर्मानधर्मद्रुह तद्भूमार्णवलेशवर्णनमपि प्राचां न वाचाम् -**

(सा.दी) ''तस्मान्न्यासमेषाम्'' என்று अतिरिक्ततपस्ஸானது. कक्षीकृतम्, स्वीकृतं सत् - अधर्मद्रुहः विविधान् धर्मान् ''धर्मेण पापमपनुदति'' என்கையால் अधर्मविरोधिகளான नानाविधधर्मங்களை - सत्यंन्तपोदमश्शमोदानमित्यादिகளை - अत्यशेत - अतिरिक्तமாயிற்று - ''तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः - सर्वेषान्तपसां न्यासमतिरिक्तं तपश्श्रुतम्'' என்றதிறே - तद्भूमार्णषलेशवर्णनमपि तस्य, न्यासस्य। भूमार्णवः, महिमसमुद्रः - तस्य लेशः, शीकराणुः। तद्वर्णनमपि - अपि शब्दान्महिमार्णव वर्णनத்தினுடைய कैमुत्येनाशक्तं सूचितम् - प्राचां वाचाम्, उपनिषद् -

(सा.स्वा) सत्यक्षोभितं यत्तप इत्यन्वयः - भगवतीति शेषः - भगवद्विषये यन्निजभरन्यासाभिधानं तपः। अधर्मद्रुहः ''धर्मेण पापमपनुदति'' इति सकलपापनिवर्तकान्। विविधान्, सत्यतपः प्रभृतिभेदेन भिन्नान्। धर्मान्, भक्तियोगपर्यन्तानपि। धर्मशब्देनासङ्कोचात्सर्वसाध्यधर्मग्रहणम् - अत्यशेत, अतिशयितमभूदितीत्यध्याहारः - इति कक्षीकृतम्, देवेनाङ्गीकृतम् - तद्भूमार्णवलेश वर्णनमपि - तस्य, न्यासाख्यतपसः. भूमा, प्रभावः - स एवार्णवः - तस्य लेशः, एकदेशः - तस्य वर्णनमपि। प्राचां वाचां, वेदानाम् - सम्भूयमिलितानाम् अपि। -

(सा.प्र) इत्यादि श्लोकद्वयोक्त प्रकारेणाश्रितरक्षणे प्रतिष्टिते भगवतीत्यर्थः - कक्षीकृतम्, अङ्गीकृतम्। अधिकारिणाकृतम् - ''भक्त्यादौ शक्त्यभाव'' इत्यादिनोक्त पञ्चदशविधाधिकारेषु किञ्चिद्विशिष्टैरनुष्ठितमित्यर्थः - एवं विधाधिकारशून्यैरनुष्ठितस्यानधिकारिणा कृतमकृतमिति न्यायात्तत्स्वरूप स्यैवासिद्धेरतिशया सिद्धिरिति भावः। एवंभूतं भरन्यासाख्यं यत्तपः। अधर्मद्रुहः, ''धर्मेण पापमपनुदति'' इत्युक्त प्रकारेण पापप्रायश्चित्तात्मवान् धर्मान् ''न्यासमेषां तपसामतिरिक्तमाहुः - नार्हन्ति शरणस्थस्य कलां कोटितमीमपि'' इत्युक्त प्रकारेण अत्यशेत। तद्भूमार्णवस्य, भरन्यासमहिम समुद्रस्यैकदेशवर्णनमपि नित्यानामपि वेदानाम् -

(सा.वि) यत्कक्षीकृतं यैरनुष्ठितम् - तपः ''तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः'' इति श्रुतौ तपसां मध्ये उत्कृष्टमित्युक्तत्वात् तपस एव तपसामुत्कृष्टत्वात्तप इत्युक्तम्। पापशोधनत्वात्तपश्शब्देन व्यपदेशः। विविधान्, अधर्मद्रुहः - पापनिवर्तकान् - ''धर्मेण पापमपनुदति'' इत्युक्तेः ''प्राजापत्यो हारुणिः'' इति खण्डे ''सत्येन वायुरावाति'' इत्यारभ्योक्तान् तपोपशमनादिरूपकर्मयोग ज्ञानयोग भक्तियोगादि रूपान् - अत्यशेत, अतिशेते स्म तेभ्य उत्कर्षमलभतेत्यर्थः - ''शीङ्स्वप्ने'' इत्यस्मादति पूर्वात् लिङात्मने पदैकवचनम् - ''तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः'' इति श्रुतेः - ''सत्कर्मनिरताश्शुद्धास्साङ्ख्य योगविशारदाः। नार्हन्ति शरणस्थस्य कलां कोटितमीमपि'' इत्यादि स्मृतेश्चेति भावः - तेषां शरणागति निष्ठानां भूम्नो महिम्न एव अर्णवस्य लेशवर्णनम्। -

(सा.सं) यत्कक्षीकृतम्, परिगृहीतम्। अनुष्ठितमितियावत् - तत्तपः। विविधान्, धर्मानत्यशेत। ''तस्मान्न्यासमेषान्तपसामतिरिक्तमाहुः - न्यास एवात्य रेचयत् - एतद्वैमहोपनिषदम्'' इत्याद्युक्तविधया ''तपोदमश्शमोदानम्'' इत्यादिनोक्तान् बहून् धर्मानत्यशेत, सर्वेभ्योप्यतिशयितमासीत् - तेषामेवं तद्वशीकरणासाधनत्वादिति भावः - तस्य, तपसः - भूमा, माहात्म्यम्। स एवार्णवः। तत्र -

**मूलं - पदम् ।। ५८।।**

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे प्रभावरक्षाधिकारष्षड्विंशः। श्रीमद्ररहस्यत्रयसारे स्थिरीकरणविभागो द्वितीयः ॥

॥ श्रीमते निगमान्तमहादशिकाय नमः ॥

---

(सा.दी) वाक्यங்களுக்கு, नपदम्, अगोचर மென்றபடி ।। ५८।।

इति श्रीमद्वाधूलकुलतिलक श्रीलक्ष्मणार्यकृपापात्रस्य, श्रीवेदान्ताचार्य पादारविन्दनिरतिशय भक्तियुक्तस्य, श्रीभाष्य श्रीनिवासस्य कृतिषु श्रीसारदीपिकायां प्रभावरक्षाधिकारषड्विंशः ।।

---

(सा.स्वा) अपिः काकाक्षि न्यायेनोभयत्रान्वीयते - न पदम्, न विषयभूतम् - यस्य भगवतः उपायत्वप्रभावः "यतो वाचो निवर्तन्ते" इति वेदापरिच्छिन्नः। तस्याप्युपायांन्तरस्थानापन्नत्वरूपोपायत्वापादकस्य न्यासस्य प्रभावः कैमुत्यन्यायेन वेदानामप्यविषयः என்று கருத்து - जनस्थाननिवासिनां ऋषीणां तपः दुर्बलरक्षोभिः क्षोभितम्। इदं तु तपः महारक्षोभिरप्यक्षोभितमिति व्यतिरेकश्च व्यज्यते - अक्षोभितमिति पाठ एव समीचीनः ।। ५८।।

इति श्रीमदात्रेय कृष्णार्यसुतेन तच्चरणाम्बुजचञ्चरीकेण श्रीमद्वेदान्तरामानुजयतीन्द्र महादेशिक कटाक्षलब्ध सकलवेदान्त रहस्य जातेन गोपालदासेन विरचितायामुत्तर सारास्वादिन्यां प्रभावरक्षाधिकारषड्विंशः ।।

---

(सा.प्र) मशक्यमित्यर्थः - इह रागद्वेष मदादि कै रक्षोभिरक्षोभितं स्थिते नित्ये रक्षितरि निजभरन्थासाभिधानं कक्षीकृतं यत्तपः अधर्मद्रुहो विविधान् धर्मानत्यशेत - तद्भूमार्णवलेशवर्णनं प्राचां वाचामपि न पदमित्यन्वयः ।। ५९ ।।

इति भारद्वाजकुलतिलकस्य श्रीनिवासाचार्यस्य सूनोः श्रीनिवासाचार्यस्य कृतिषु श्रीसार प्रकाशिकायां प्रभावरक्षाधिकारषड्विंशः ।।

---

(सा.वि) बिन्दुमात्रवर्णनमपि। प्राचां वाचां, वेदानामपि। नपदम्, नविषयः - "तस्माद्ब्राह्मणो महिमानमाप्नोति" इति ब्रह्ममहिमवतां प्रभावो वेदानामपि वर्णयितुमशक्य इति भावः ।। ५८।।

प्रपन्नस्यैहिकं दुःखमसह्यमपि नो हरिः। निवारयत्यतः कर्म प्रारब्धं न विनाशयेत् ।।
इत्येतद्वचनं मन्दं हितार्थी दुःखमैहिकम्। हरिर्निवर्तयेन्नैव प्रारब्धांशंतु नाशयन् ।।
अस्मद्दर्शननिष्ठानां कर्मज्ञानादि वर्तिनाम्। कादाचित्कार्थसङ्गादेर्निन्द्याता नोपजायते ।।
ऐकान्त्यं सुदृढं येषु क्वचित्तेषु स्खलत्स्वपि। अवज्ञा परिहर्तव्येत्येवं शास्त्रविनिर्णयः ।।
प्रपन्नवेषमात्राच्च तद्ज्ञानावधि वैष्णवः। आदरादबुवर्तेत किं पुनस्सत्पथे स्थितान् ।।
भगवत्क्षेत्रमरणं देहिनामुपकारकम्। प्रातिकूल्यत्यजामेव विपक्षेऽतिप्रसङ्गतः ।।

इति श्रीशैलकुलतिक श्रीवेङ्कटसोमसुत्वनस्सुतेन श्रीनिवासदेशिककृपालब्धसारार्थ ज्ञानेन श्रीनिवासदासेन लिखितायां श्रीसारविवरण्यां प्रभावरक्षाधिकारष्षड्विंशः ।।

---

(सा.सं) यो लेशः। तद्वर्णनमपी मत्तया प्राचां वाचां, वेदान्तानामपि - नपदम्, न विषयम् ।। ५८।।

इति श्रीपरकालयतिविरचिते श्रीसारप्रकाशिका सङ्ग्रहे प्रभावरक्षाधिकारषड्विंशः ।।